॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् ८ - प्रथमाध्याये द्वितीयपादमारभ्य चतुर्थपादे ज्योतिरुपक्रमाधिकरणपर्यन्तम्


प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – ८

## प्रथमाध्याये द्वितीयपादमारभ्य चतुर्थपादे ज्योतिरुपक्रमाधिकरणपर्यन्तम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



| श्रीमन्न्यायसुधा | Śrīman-Nyāyasudhā |
|---|---|
| परिमळाद्युपेता | Parimaḷādyupetā |
| सम्पुटम् – ८ | Volume - 8 |
| प्रथमं मुद्रणम् - ई.सन् २००५ | First Edition -2005 A.D. |

पार्थिव संवत्सर, शके १९२७, ज्येष्ठ कृष्ण त्रयोदशी, सोमवासरः
श्री विजयीन्द्रतीर्थस्वामिनां आराधनामहोत्सवः


*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**
**Śrīman Madvāchārya Mūla Mahāsamsthāna**
**Śrī Rāghavendra Swāmy Mutt**
Mantrālayam - 518 345
India.

✲ मुद्रकः ✲

धनंजयाचार्य बाळाचार्य वरखेडकरः

| **सुधा मुद्रणम्** | **SUDHA MUDRANA** |
|---|---|
| शंकरपुरम्, बेंगळूर - ५६० ००४ | Shankarpuram, Bangalore - 560 004 |
| दूरवाणी– २६६७ ६९४२, ५७६० २८३६ | Phone : 2667 6942, 5760 2836 |



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

**श्रीमन्मध्वाचार्यसमलंकृतमूलमहासंस्थानाधिष्ठितानां**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

## श्रीमूलरघुपतिपादकमलयोः

**समर्पितोऽयं ग्रन्थः ॥**

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-
**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**
वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-
**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**
**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

## श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः।*

मन्त्रालयक्षेत्रम्,
पार्थिव संवत्सर
ज्येष्ठ शुक्ल तृतीया



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां

श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

**श्री श्री सुशमीन्द्रतीर्थश्रीपादानां**

परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

**वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः**

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः

**निर्वाहकाः**

**श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः**

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः,

श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठः,

मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी | पांग्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः । साम्प्रत-मस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातृणामभिप्राय एव । सः श्रीमद्विजयीन्द्रतीर्थ-श्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्य-मिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि (५६४) चतुःषष्ट्यधिकपञ्चशत-ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यं, श्रीमदनुव्याख्यानं, न्यायविवरणं, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां ''व्यक्ततर्कततिं कुरु'' इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | **व्याख्यातारो महाभागाः** | **व्याख्यानस्य नाम** |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |



| | | |
|---|---|---|
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विट्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मण्णाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |
| ३८) | श्री श्रीमुष्णाचार्याः | पञ्चाधिकरणी |
| ३९) | श्री लिङ्गेरि श्रीनिवासाचार्याः | सिद्धान्तप्रभा |
| ४०) | श्री पाण्डुरङ्गि केशवाचार्याः | सुधावाक्यार्थविनोदः |
| ४१) | श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) | टिप्पणी |



| | | |
|---|---|---|
| ४२) | श्री सत्यनाथाः | न्यायसुधापरशुः |
| ४३) | श्री सुमतीन्द्रतीर्थाः | भावरत्नकोशः |
| ४४) | श्री पाण्डुरङ्गि केशवाचार्याः | मञ्जरी |
| ४५) | श्री व्यासतत्त्वज्ञतीर्थाः | लघुरसरञ्जनी |
| ४६) | श्री व्यासतत्त्वज्ञतीर्थाः | गुरुरसरञ्जनी |
| ४७) | श्री भीमराव् कुलकर्णी कुम्बारगेरी | टिप्पणी |
| ४८) | श्री सत्यपराक्रमतीर्थाः | सुधाफक्किका |
| ४९) | श्री हुलिगि श्रीपत्याचार्याः | टिप्पणी |
| ५०) | श्री अहोबिलाचार्याः | टिप्पणी |
| ५१) | श्री सत्यप्रज्ञतीर्थाः | टिप्पणी |

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परम-पूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कुरुडि सुशीलेन्द्राचार्येभ्यः, तथा विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पणीं तथा एरी बाळाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांग्री श्रीनिवासाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री पांग्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालां टिप्पणीं, सत्यनाथतीर्थीयां टिप्पणीं, हुग्गि टिप्पणीं च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमाला-टिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पणीं दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पणीं दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनीद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु



हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कडपा राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन्. वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री पुरोहित नरसिंहाचार्येभ्यः, विद्वद्भ्यः श्री अग्निहोत्री वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री उंदारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे ।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः । अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः । तेन वयं शुद्धिपत्रिकायां अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः । येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः ।

इत्थम् ।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः





॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम्।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम्॥**

भूर्भुवस्वरादिचतुर्दशभुवनात्मकसंख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविद्यारसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः ।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः ।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता क्लृप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यच्छेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा



लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्र्य अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमानुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

**आचार्याः साणूरु भीमभट्टाः**

प्रधानसम्पादकाः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## संपुटम् – ८

### प्रथमाध्यायस्य द्वितीयपादमारभ्य चतुर्थपादे अधिकरणद्वयम्

### विषयानुक्रमणिका



| विषयः | परिच्छेदः | पुटसंख्या |
|---|---|---|





* * *



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

## ॥ अथ सर्वगतत्वाधिकरणम् ॥

॥ १-२-१ ॥

ब्र०सू०— ॥ ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॥

**॥ अथ सप्रयोजनं द्वितीयपादप्रतिपाद्यार्थप्रदर्शनम् ॥**

**॥ तत्रादौ उत्तरपादप्रतिपाद्यार्थभेदः ॥**

१ सु०— द्वितीयपादस्य पूर्वोत्तरपादभेदस्य स्वस्मिन्नेकवाक्यतायाश्च सिद्धये प्रतिपाद्यमर्थं दर्शयति **लिङ्गात्मकानामिति**।

अनु०— लिङ्गात्मकानां शब्दानां

**लिङ्गं** धर्मः स **आत्मेवात्मा** प्रवृत्तिनिमित्तं येषां ते लिङ्गात्मकाः । स्वरूपार्थो वा आत्मशब्दः, निमित्तनिमित्तिनोरभेदोपचारात् । सकलवेदगतानामन्यत्रप्रसिद्धानामिति शेषः ।

परि०— **द्वितीयपादस्येति** । प्रतिपाद्यमर्थं दर्शयतीत्यन्वयः । तस्य फलोक्तिः **पूर्वेत्यादि** । पूर्वपादोत्तरपादोक्तार्थादर्थभेदोक्त्या पादभेदस्यैकरूपार्थप्रतिपादकत्वोक्त्या स्वस्मिन् द्वितीयपादे एकवाक्यतायाश्च सिद्धेः । अत्र नियामकस्य 'अर्थैकत्वादेकं वाक्यमि'त्यादेरन्तरधिकरण एवोक्तेरिति भावः ।





**यादु०—— द्वितीयपादस्येति** । प्रतिपाद्यमित्यन्वयः । **स्वस्मिन्निति** । द्वितीयपाद इत्यर्थः । तथा चान्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयरूपैकार्थप्रतिपादकत्वेन द्वितीयपादस्य सर्वस्यैकवाक्यत्वं पूर्वोत्तरपादानां चातदर्थत्वात्तद्भेदश्च सिद्ध्यतीति भावः । **लिङ्गं धर्म इति** । धर्म्यनुमापकरूपो धर्म इत्यर्थः । निर्वचनलभ्योऽर्थो धर्म इति व्याख्यानं तु सर्वेषु भूतेष्वेतमेवेत्याद्यनेकप्रातिपदिकात्मकवाक्यप्रतिपाद्येषु सर्वगतत्वादिलिङ्गेष्वव्याप्त-त्वादुपेक्ष्यम् । तथा च लिङ्गात्मकानामित्यस्य व्याप्यधर्मोपस्थितिद्वारैव धर्म्युपस्थापकानामित्यर्थः पर्यवस्यतीति ज्ञातव्यम् । प्रपञ्चितं चैतदानन्दमयाधिकरणे । **प्रवृत्तिनिमित्तमिति** । निर्वचनलभ्योऽर्थ इत्यर्थः । इदं चान्त-र्यामीत्याद्येकप्रातिपदिकरूपलिङ्गात्मकशब्दानपेक्ष्योक्तम् । वस्तुतस्तु आत्मा प्रतिपाद्यमित्यर्थः । तेन नोक्त-लिङ्गात्मकशब्देष्वव्याप्तिः । **निमित्तनिमित्तिनोरिति** । पूर्वयोजनायामात्मप्रातिपदिके गौणी वृत्तिरुक्ता । अत्र तु सामानाधिकरण्यरूपायां विशेष्यविभक्तिसमभिव्याहृतविशेषणविभक्ताविति ततो भेदः । अन्यत्रप्रसिद्धत्वादिव-दित्यत्र आदिपदेन उभयत्रप्रसिद्धत्वं ग्राह्यम् ।

**वं०प०——** ननु शब्दानां प्रवृत्तिनिमित्तस्वरूपत्वं कथमित्यत आह **निमित्तेति** ।

**आनन्दः——** अत्र **द्वितीयपादस्य** प्रतिपाद्यमित्यन्वयः । ननु प्रतिपादनेनैव प्रतिपाद्यार्थज्ञानसंभवात् तत्प्रतिपाद्यार्थमयुक्तमित्यत्राह **पूर्वोत्तरेति** । प्रथमतृतीयाभ्यां भेदस्य सिद्धये द्वितीयपादस्याप्येकार्थप्रतिपादकत्वेन एकवाक्यतायाश्च सिद्धय इत्यर्थः । नन्वसाधारणधर्मरूपलिङ्गस्य शब्दैक्याभावाल्लिङ्गात्मकानामित्ययुक्तमित्यत्राह **लिङ्गधर्म इति** । एवं चात्मशब्दस्य लक्षणया प्रवृत्तिनिमित्तपरत्वान्नोक्तदोष इति भावः । लक्षणा जघन्या वृत्तिरित्यतः स्वरूपार्थतयैव व्याख्याति **स्वरूपेति** । नन्वेतद्बाधितमित्युक्तमत्राह **निमित्तेति** । लौकिकशब्दव्यावृत्त्यर्थं **सकल-वेदगतानामिति** । उत्तरपादाद्भेदं दर्शयितुं **अन्यत्रेति** ।

**कं०रा०—— द्वितीयेति** । द्वितीयपादस्य प्रतिपाद्यमर्थं दर्शयतीति सम्बन्धः । किमर्थमित्यतः पूर्वोत्तरपाद-भेदस्य सिद्धये स्वस्मिन्द्वितीयपादे एकवाक्यत्वसिद्धये चेत्युक्तम् **निमित्तेति** । प्रवृत्तिनिमित्तस्य लिङ्गस्य निमित्तवतः शब्दस्य च अभेदोपचारादात्मशब्दस्य स्वरूपार्थत्वपक्षे लिङ्गात्मकानामिति व्यपदेशः संभवतीति भावः ।

**श्रीनिधि०——**

रक्षोवक्षःपाटनोत्थरक्ताङ्कितनखावळिः ।
नरसिंहो ममासह्यविघ्नौघान् हन्तु सन्ततम् ॥

**स आत्मेवेति** । आत्मसादृश्यं च तत्र प्रतिपादनोपयोगित्वं गौण्या वृत्त्या अयमर्थ उक्तः । **स्वरूपार्थो वेति** । द्वितीये लक्षणयेति ज्ञेयम् ।





**शे०वा०—**

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात्।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा॥ १॥

प्रयोजनोक्त्या किं पादप्रतिपाद्यप्रदर्शनेनेत्याशङ्कां परिहरन्नेव तत्प्रदर्शनपरत्वान्नोत्तरभाष्यवैयर्थ्यमित्याशयेन तत्सङ्गमयति **द्वितीयपादस्येति**। द्वितीयपादस्य पूर्वपादेनोत्तरपादाभ्यां च भेदसिद्धय इति च पादप्रतिपाद्यप्रदर्शनप्रयोजनसङ्कीर्तनम्। अत्र च स्वस्मिन्नित्यनुक्तौ प्रकृतत्वात् पूर्वोत्तरपादैरेकवाक्यतासिद्धय इति प्राप्त्या पूर्वोत्तरभेदसिद्धय इत्यनेन विरोधः स्यात्। तत्परिहाराय स्वस्मिन्नित्युक्तम्। पादप्रतिपाद्ये प्रदर्शिते सर्वत्रेत्यादिसूत्रसन्दर्भस्यान्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयरूपैकार्थप्रतिपादकत्वात् स्वस्मिन्नेकवाक्यत्वस्य तस्य चार्थस्य पूर्वोत्तरपादव्यावृत्तत्वात् तद्भेदस्य च सिद्धिर्भवतीत्यर्थवत् पादप्रतिपाद्यप्रदर्शनमिति भावः। प्रतिपाद्यमित्यत्रापि द्वितीयपादस्येत्यस्य सम्बन्धः। **लिङ्गं धर्म इति**। निर्वचनलभ्यार्थो धर्म इत्यर्थः। अन्यथा रूढानां घटादिशब्दानामपि घटत्वादिरूपधर्मप्रवृत्तिनिमित्तकत्वेन लिङ्गात्मकत्वप्रसङ्गात्। उक्तविवक्षायां तु नातिप्रसङ्गः। घटत्वादेर्निर्वचनलभ्यत्वाभावेन तादृशधर्मप्रवृत्तिनिमित्तत्वाभावात्। इदं चान्तर्यामीत्याद्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकशब्दत्वमित्यङ्गीकृत्योक्तम्। अतो न 'सर्वभूतेष्वेतं' 'यस्मिन्द्यौरि'त्याद्यनेकप्रातिपदिकात्मकवाक्यरूपलिङ्गात्मकशब्देष्वव्याप्तिरिति ध्येयम्। यद्वा। धर्म्युपस्थापकरूपो धर्म इत्यर्थः। अत्राप्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकत्वेन विवक्षणान्नाव्याप्तिरिति बोध्यम्। ननु शब्दार्थयोर्भेदात् कथं शब्दानामर्थरूपलिङ्गात्मकत्ववचनमित्यतो गौणीं वृत्तिमाश्रित्य व्याचष्टे **स आत्मेवेति**। यथाऽऽत्मा प्रवृत्तौ निमित्तं तथा लिङ्गमपि शब्दप्रवृत्तौ निमित्तमिति निमित्तत्वसाम्येन लिङ्गे आत्मोपचार इति भावः। नामात्मकेष्वात्मशब्दस्य स्वरूपार्थत्वं लिङ्गात्मकेषु च प्रवृत्तिनिमित्तार्थत्वमिति वैरूप्याश्रयणमयुक्तमित्यरुच्या पक्षान्तरमाह **स्वरूपार्थो वेति**। नन्वेवं शब्दानामर्थस्वरूपत्वमुक्तं स्यात् तच्च बाधितमित्यतोऽनयोर्निमित्तनैमित्तिकभावापन्नत्वात् तद्भावापन्नयोश्च त्रपुसज्वरयोस्त्रपुसं ज्वर इत्यभेदव्यवहारदर्शनाद्युक्तोऽत्र भेदेऽप्यभेदव्यवहार इत्याह **निमित्तेति**। कतिपयशब्दवाच्यत्वे गुणपूर्त्यसिद्धिप्रसङ्गादाह **सकलेति**। भाषाशब्दव्यावृत्त्यर्थं **वेदगतेति**। लिङ्गात्मकशब्दसमन्वयप्रतिपादकत्वस्य तृतीयचतुर्थयोरपि सत्त्वेन कथं ततो भेदसिद्धिरित्यत उक्तम् **अन्यत्रेत्यादि**। ततश्च उभयत्रान्यत्रैवप्रसिद्धलिङ्गसमन्वयप्रतिपादकत्वस्य तृतीयपादादौ सत्त्वेऽप्यन्यत्रप्रसिद्धलिङ्गसमन्वयाप्रतिपादकत्वात् युक्तैवोत्तरपादाभ्यामस्य भेदसिद्धिरिति भावः।

**वा०र०—**

श्रीनृसिंहगुरून् सर्वान् जयार्यं व्यासराजकम्।
विद्याधीशगुरुं वन्दे तद्गुरुं च विशेषतः॥ १॥





**प्रयोजनोक्त्येति** । अस्य शङ्कां परिहरन्नित्युत्तरेण सम्बन्धः । तत्प्रदर्शनेत्यत्र तत्पादप्रतिपाद्यस्य परामर्शः । प्रयोजनोक्त्येति प्रागुक्तं प्रयोजनं केन भागेन दर्शितमित्यतः स्पष्टयति **द्वितीयपादस्येति** । **पूर्वोत्तरपादैरिति** । पूर्वपादेनेत्यादेरुक्तत्वात् स्पष्टमेतत् । धर्मद्वारा धर्म्युपस्थापकानीति चन्द्रिकोक्तानुसारेण पक्षान्तरमाह **यद्वा धर्मीति** । धर्मद्वारेत्येतल्लिङ्गत्वमेकपादात्मकानुगतं नानेकपादेष्वपीत्यादि चन्द्रिकायां स्वोक्तिरत्रानुसन्धेयेति सूचयन्नाह **इदं चैकेति** । नामलिङ्गभेदविचारस्तु चन्द्रिकाटीकाव्याख्यावसरेऽस्माभिर्लिखितोऽस्ति आनन्दमयाधिकरणे च सोऽत्र विशेषः । यथा आत्मा प्रवृत्ताविति शरीरादिप्रवृत्तिरिह प्रवृत्तिपदेन ज्ञेया । **त्रपुसं ज्वर इतीति** । दधित्रपुसं प्रत्यक्षो ज्वर इति यथेति तृतीयाध्याये ज्ञानपादे उदाहरिष्यते । तत्रोपयुक्तमिहोपात्तम् । तदर्थविचारोऽपि तद्व्याख्यानावसरे ज्ञेयः । **उत्तरेति** । उत्तरपदाभ्यां भेदेत्यर्थः ।

**स०व्र०—** ननु पादार्थप्रतिपादनादेव पादार्थः इति ज्ञास्यते, किं तत्प्रदर्शनेन; इत्यत आह **द्वितीय-पादस्येति** । प्रतिपाद्यमर्थमित्यनेन सम्बन्धः । **स्वस्मिन्निति** । द्वितीयपाद इत्यर्थः । अन्यत्रप्रसिद्धलिङ्गात्मकशब्द-समन्वयरूपैकार्थकत्वेन द्वितीयपादस्य सर्वस्यैकवाक्यत्वं, पूर्वोत्तरपादानां चातदर्थत्वात् तद्भेदश्च सिद्ध्यतीति भावः । **लिङ्गं धर्म इति** । निर्वचनलब्धार्थो धर्म इत्यर्थः । तथा च लिङ्गात्मकाः अन्यत्रप्रसिद्धयौगिका एवोच्यन्ते इति ज्ञातव्यम् । **आत्मेवात्मेति** । यथा आत्मा सर्वेषां प्रवृत्तौ निमित्तं, तथा लिङ्गमपि शब्दप्रवृत्तौ निमित्तमिति प्रवृत्तिनिमित्तत्वसाम्येन आत्मशब्दोपचार इति भावः । आत्मशब्दस्य स्वरूपार्थस्य प्रवृत्तिनिमित्ते प्रवृत्तिनिमित्तमाह **निमित्तेति** ।

**विठ्ठल०— प्रतिपाद्यमर्थं दर्शयतीति** । एकावच्छेदकावच्छिन्नतया प्रतिपाद्यार्थे दर्शितेऽस्य द्वितीय-पादस्यैकार्थप्रतिपादकतया एकवाक्यत्वं तदप्रतिपादकपूर्वोत्तरपादाभ्यां भेदश्च सिद्ध्यतीति भावः । लिंगात्मकाना-मित्यत्र शब्दानां धर्मस्वरूपत्वानुपपत्तेः आत्मेवात्मास्वरूपमिव स्वरूपं स्वरूपवदविनाभूतमिति सादृश्येन वा उपचारेण वाऽऽत्मशब्दप्रयोगः संभवतीत्याह **आत्मेवात्मेति** । पूर्वयोजनायामात्मशब्दप्रातिपदिके गौणीवृत्तिरुक्ता । अत्र तु सामानाधिकरण्यरूपायां विशेष्यविभक्तिसमभिव्याहृतविशेषणविभक्ताविति ततो भेदः ।

**चषकः—**

सत्रायमाणप्रणतयोपुरोज्ञानलोलुवः ।
स्ताद्गुरुः श्रीनिवासार्यो मन्मनीषामरीमृजः ॥

उत्तरभाष्यमवतारयति **द्वितीयपादस्येति** । प्रथमषष्ठ्या विशेषतानिरूपकत्वमुत्तरषष्ठीद्वयेन प्रकारता-निरूपकत्वं सिद्धिपदोपस्थाप्यनिश्चयान्वयि प्रत्याप्यते । तदेकदेशविशेष्यताप्रकारतयोराधेयतासंसर्गेण प्रकृत्यर्थ-द्वयमन्वेति । सर्वनाम्नां बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोपस्थापकतया निरूपितत्वप्रत्यासत्त्या तादृशसप्तमी प्रकृतिभूतस्वपदोपस्थाप्यतावच्छेदकीभूतद्वितीयपादत्वावच्छिन्नान्विता तदुपस्थाप्याधेयता तल-





न्तोपस्थाप्यान्वयिनी । अर्थपदोत्तरद्वितीयया चाक्षुषत्वावच्छिन्नवाचकणिच्प्रकृतिभूतदृशिलक्ष्यतावच्छेदकीभूत-ज्ञानत्वावच्छिन्नान्वयिविषयतारूपकर्मत्वमवगम्यते । चतुर्थ्युपस्थाप्या प्रकृत्यर्थान्विता फलता निरूपकतासंसर्गेण क्रियायां सा चानुकूलतासंसर्गेण णिजर्थव्यापारे स चाख्यातार्थव्यापारे स च प्रथमान्तार्थेऽन्वेति । आद्यषष्ठ्य-न्तार्थविशिष्टे उत्तरषष्ठ्यन्तार्थस्य वैशिष्ट्यभानोपगमात् तत्तद्विषयकत्वानामवच्छेद्यावच्छेदकभावो भासत इत्युपेयते । एकवाक्यतापन्नो द्वितीयपादः सर्वत्रेति सूत्रघटितः, पूर्वोत्तरपादभिन्नं च घटमानयेति वाक्यमिति समूहालम्बनव्युदासाय आद्यषष्ठ्यन्तं तन्त्रावृत्त्याद्याश्रयणेन प्रतिपाद्यमित्यनेनापि सम्बध्यते । प्रत्युपसृष्टात्पद्यते-र्ण्यन्तात् 'तयोरेवे'ति लक्षणानुशिष्टकर्मसाधनता(कर्मणिनिष्पन्नप्रतिपाद्यशब्दावयवभूता णिच्प्रत्ययप्रकृत्युप-स्थाप्यप्रतिपत्त्यन्वयिनी जनकता) आवर्जितषष्ठ्यावगम्यते । इत्यन्व(?)द्वितीयपादनिष्ठविशेष्यतानिरूपकपूर्वोत्तर-पादभेदनिष्ठप्रकारताकैकवाक्यतानिष्ठप्रकारताकनिश्चयफलकप्रतिपत्तिजनकव्यापारकर्मीभूतार्थविषयकज्ञानानुकूल-व्यापारकर्ता भाष्यकार इति समुदितग्रन्थाधीनान्वयबोधप्रकारोऽवसेयः । अत्र च स्वस्मिन्नित्यनिर्देशे पूर्वोत्तर-पादयोः प्रकृतयोरेकवाक्यतायामप्यन्वयो भायात् तथा सति ताभ्यां भेदसिद्ध्य इति वचनं विरुद्ध्येतेति तथा मा भूदिति तत्पदं निरदिक्षत् । प्रकृतपादप्रतिपाद्ये श्रुत्यादितो लोकतो वाऽपीतरेषु प्रसिद्धलिङ्गात्मकशब्द-समन्वयरूपैकार्थतात्पर्यकत्वे सर्वत्रेत्यादिकाऽऽमनन्तीत्यन्तसूत्रसन्दर्भस्यावधृते तादृशहेतुप्रतिसन्धानाधीना प्रकृतपादधर्मिका दर्शितार्थतात्पर्यकता विनियुक्तपूर्वोत्तरपादवृत्तिप्रातिस्विकधर्मपर्याप्ता(स्य)वच्छेदकताक-प्रतियोगिताकभेदद्वयविधेयिका अनुमितिरुद्देश्यतीत्याशयः । इत्थं च दर्शितहेतुप्रतिसंहितौ किञ्चिदद्वारक-पादप्रतिपाद्यप्रदर्शनफलत्वं तद्द्वारकं तु दर्शितानुमिताविति ध्येयम् । **लिङ्गं धर्म इति** । अत्र व्याचक्षाणाः "निर्वचनलभ्यार्थरूपो धर्म इत्यर्थः । अन्यथा रूढानामपि घटादिशब्दानां घटत्वादिरूपधर्मप्रवृत्तिनिमित्तकत्वेन लिङ्गात्मकत्वप्रसङ्गात् । उक्तविवक्षायां तु नातिप्रसङ्गः । घटत्वादेर्निर्वचनलभ्यत्वाभावेन तादृशधर्मप्रवृत्ति-निमित्तकत्वाभावात् । इदं चान्तर्यामीत्याद्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकशब्दत्वमित्यङ्गीकृत्योक्तम् । अतो न सर्वेषु भूतेष्वेतं यस्मिन्द्यौरित्याद्यनेकप्रातिपदिकात्मकवाक्यरूपलिङ्गात्मकशब्देष्वव्याप्तिरिति ध्येयम् । यद्वा धर्म्युपस्थापकरूपो धर्म इत्यर्थः । अत्राप्येकप्रातिपदिकरूपाणामेव लिङ्गात्मकत्वेन विवक्षायां नाव्याप्तिरिति बोध्यमि"ति व्याचक्षते । उक्ताव्याप्तिप्रसङ्गेनाद्यव्याख्यानमुपेक्ष्यमित्यपि निबध्नन्ति । इत्थं च लिङ्गात्मकाना-मित्यस्यावयववृत्तिनिमित्तनियन्त्रिततादृशवृत्तिकानामिति । तादृशवृत्तिप्रवृत्तिनिमित्तरूपस्यानेकप्रातिपदिकसमभि-व्याहाराधीनप्रतीतिगोचरधर्मिरूपस्य वा व्याप्यधर्मस्य उपस्थितिद्वारा धर्म्युपस्थापकानामिति वा मतभेदे-नार्थद्वयमवसेयम् । अत्र व्याकर्तारः । ननु शब्दार्थयोर्भेदात् कथं शब्दानामर्थरूपं लिङ्गात्मकत्ववचनमित्यतो गौर्णी वृत्तिमाश्रित्य व्याचष्टे **आत्मेवेति** । यथात्मा प्रवृत्तौ निमित्तं तथा लिङ्गमपि शब्दप्रवृत्तौ निमित्तमिति निमित्तत्वसाम्येन लिङ्गे आत्मत्वोपचार इति भावः । नामात्मकेष्वात्मशब्दस्य स्वरूपार्थत्वं लिङ्गात्मकेषु च प्रवृत्तिनिमित्तार्थत्वमिति वैरूप्याश्रयणमयुक्तमित्यरुच्या पक्षान्तरमाह **स्वरूपार्थो वेति** । नन्वेवं शब्दाना-मर्थस्वरूपार्थमुक्तं स्यात् तच्च बाधितमित्यतोऽनयोर्निमित्तनिमित्तिभावापन्नत्वात् तद्भावापन्नयोश्च त्रपुसं ज्वर इत्यभेदव्यवहारदर्शनाद्युक्तोऽत्र भेदेऽप्यभेदव्यवहार इत्याह **निमित्तेतीति** । व्याकुर्वते निबन्धान्तरीयविन्यासस्तु





**निमित्तनिमित्तिनोरिति** । पूर्वयोजनायामात्मप्रातिपदिके गौणी वृत्तिरुक्ता । अत्र तु सामानाधिकरणरूपायां विशेष्यविभक्तिसमभिव्याहृतविशेषणविभक्ताविति ततो भेदः । यद्वा पूर्वयोजनायामात्मशब्दः स्वामित्वार्थः । तत् 'सादृश्यं च प्रधानत्वं', 'अर्थत्वमर्यतैव स्यादि'त्यनुव्याख्यानोक्तरीत्या द्रष्टव्यम् । शब्दापेक्षया तत्प्रवृत्तिनिमित्तधर्मस्य प्रधानत्वादिति । यथोक्तं तद्व्याख्यानसुधायाम् । अर्थो हि ज्ञानाद्यपेक्षया प्रधानं विवक्ष्यत इति । **अभेदोपचारादिति** । तादात्म्यसम्बन्धरूपेणाभेदेन निमित्तनैमित्तिकभावस्यापि सम्बन्धत्वेन सदृशत्वादित्यर्थः । अथवा निमित्तनैमित्तिकभावसम्बन्धेनात्मलिङ्गरूपनिमित्तकत्वस्य लक्षकः । उपचारोक्तिस्त्वमुख्यवृत्त्यभिप्रायेणेति ज्ञेयमिति । यादृशयादृशशब्दव्यक्तीनामीशनिरूपितशक्तितात्पर्यवत्ता न समर्थिता तत्तत्प्रवृत्तिनिमित्ताविशेषिततानिबन्धनगुणपूर्त्यसिद्धिप्रसङ्गापनुत्तिफलकं वेदगतांशेऽभेदेनान्वयिप्रत्यायकसकलपदोपादानम् । भाष्यशब्दव्यावृत्तिपरिच्छित्तिप्रयोजनकं च निष्ठान्तोपादानम् । तृतीयतुरीयपादसमन्वेतव्यलिङ्गात्मकशब्दप्रतियोगिकभेदावगतिहेतुभूतं श्रुत्यादिकोशाद्यन्यतरव्युत्पादितेशेतरशक्तितात्पर्यसम्बन्धावगमकमपरनिष्ठान्तोपादानम् ।

**॥ इति उत्तरपादप्रतिपाद्यार्थभेदः ॥**

* * *

**॥ ततश्च पूर्वपादप्रतिपाद्यार्थभेदः ॥**

**२ सु०— नन्वतीतपादे समन्विता अपि लिङ्गात्मका एव, यौगिकत्वात्, अन्यथा गुणपूर्त्यलाभेन समन्वयसमर्थनवैयर्थ्यात् । न च प्रकरणगतगुणलाभेन सार्थक्यम्, वचनवृत्त्यङ्गीकारवैफल्यात्, उक्तं च 'यच्छब्दा योगवृत्तय' इति । तत्कथमयं विभागः । सत्यम् । तथाऽप्यन्यत्रप्रसिद्धत्वादिवदापातप्रतीत्यनुरोधेनेयमुक्तिरित्यदोषः ।**

**अनु०— वृत्तिर्नारायणे परे ॥**
**चिन्त्यते**

**वृत्तिः** लक्षणादिरपि भवति, इत्यतः **परे** मुख्यार्थ इत्युक्तम्; तथा च मुख्यवृत्तिरिति लभ्यते । **चिन्त्यते** समर्थ्यते, अस्मिन्पाद इति शेषः ।

**परि०— उक्तं चेति** । सङ्क्षेपभाष्ये । **अन्यत्रप्रसिद्धत्वादिवदिति** । यथाऽन्यत्रोभयत्रान्यत्रैवप्रसिद्धत्वमापाततस्तद्वदित्यर्थः । प्रपञ्चितश्चायं नामलिङ्गादिभेदश्चन्द्रिकायाम् । **मुख्यार्थ इतीति** । सप्तम्यन्तं मुख्यार्थपदम् । अत्र विशेष उपासनापादे वक्ष्यत इति भावः ।





**यादु०— आपातेति**। अज्ञप्रतीत्यनुरोधेनेत्यर्थः। तथा च यथा विद्वत्प्रसिद्ध्या भगवत्पराणामपीन्द्रादि-शब्दानामज्ञप्रतीत्यनुरोधेनान्यत्र प्रसिद्धत्वादिकं विवक्षितम्। तथा पूर्वपादे समन्वितानां शब्दानां विद्वद्रीत्या यौगि-कानामप्यज्ञप्रतीत्यनुरोधेन रूढतया साक्षाद्धर्म्युपस्थापकत्वं विवक्षितम्। अतो युक्तेयं पादभेदोक्तिरिति भावः।

**वं०प०— अन्यथेति**। रूढत्वेऽवयववृत्त्या तन्नामप्रतिपादितगुणालाभादित्यर्थः। **न चेति**। तथा च तन्नाम्नो रूढ्या भगवद्वाचकत्वमेवास्तु। तन्नामवाच्यगुणालाभेऽपि तन्नामोपेते ये गुणास्तत्प्रकरणोक्तास्तद्वत्त्वं भविष्यतीति गुणपूर्त्यलाभो नेति भावः। **वचनेति**। तथा च तत्प्रकरणगतनाम्नो लक्षणया भगवत्परत्वेऽपि तत्प्रकरणगतगुणलाभो भविष्यतीति वचनवृत्तिः कस्मादङ्गीकार्येत्यर्थः। यौगिकत्वादित्युक्तं युक्त्योपपाद्य तत्र सम्मतिं चाह **उक्तं चेति**।

**आनन्दः—** गतार्थत्वं शङ्कते **नन्विति**। **अन्यथेति**। यौगिकत्वाभाव इत्यर्थः। **न चेति**। यौगिकत्वा-भावेऽपीति शेषः। **वचनवृत्तीति**। आकाशादि शब्दानां लक्षणास्वीकारेऽपि लाभस्य संभवादित्यर्थः। ननु मुख्ये संभवत्यमुख्यायोगान्मुख्यवृत्तिस्वीकारो न त्वावश्यकत्वेनेत्यत आह **उक्तं चेति**। सङ्क्षेप इति शेषः। अत्र यौगिकत्वस्यावश्यकताया उक्तत्वात्। अन्यथा तद्विरोधः स्यादित्यर्थः। **तथापीति**। आपाततो लोकप्रसिद्धि-मात्रेण यथान्यत्रप्रसिद्धत्वं तत्र आपाततः आदौ धर्मप्रतीतिमाश्रित्यालिङ्गत्वं तादृशधर्मिप्रतीतिमाश्रित्य नामत्व-मिति न दोष इति भावः। परशब्दस्याकृष्टार्थत्वान्न लक्षणनिवारणमत्राह **मुख्यार्थ इति**। चिन्तन इत्यत्र चिन्तन-शब्देन ध्यानं प्रतीयते तत्प्रकृतानुपयुक्तं अतो व्याख्याति **समर्थ्यत इति**।

**कं०रा०— न चेति**। यस्य शब्दस्य हरौ समन्वयः समर्थ्यते। तस्य यौगिकत्वाभावेन तच्छब्दप्रवृत्तिनिमित्तगुणालाभात् तल्लाभेन तत्समन्वयसमर्थनस्य सार्थक्यायोगेऽपि तच्छब्दप्रकरणगतगुणान्तर-लाभेन तस्य सार्थक्यं युज्यत इति न चेत्यर्थः। **वचनेति**। लक्षणया ब्रह्मणि समन्वयाङ्गीकारेऽपि लाक्षणिक-शब्दप्रकरणगतगुणान्तरतत्समन्वयसमर्थनस्य सार्थक्योपपत्तेः। वचनवृत्त्यङ्गीकारस्य वैफल्यप्रसङ्गादित्यर्थः। रूढ्यङ्गीकारवैफल्यादित्यर्थः। **उक्तं चेति**। गुणपूर्त्यलाभप्रसङ्गेन शब्दानां हरौ यौगिकत्वं न केवलमस्माभिरेवानु-मीयते। किन्तु शब्दैरतोऽनन्तगुणे यच्छब्दा योगवृत्तय इत्यनुभाष्ये सर्वेषां शब्दानां हरौ यौगिकत्वमाचार्यैरुक्तं चेत्यर्थः। **सत्यमिति**। सर्वेऽपि शब्दा हरौ यौगिका इत्येतत्सत्यम्। तथाऽपि यथा सर्वेषां शब्दानां सिद्धान्तन्यायेन हरौ प्रसिद्धत्वेऽप्यापातप्रतीत्यनुरोधेनान्यत्र प्रसिद्धत्वादेरुक्तिः। तथाऽप्यापातप्रतीत्यनुरोधेन केषाञ्चिच्छब्दानां यौगित्वमाश्रित्य लिङ्गात्मकत्वोक्तिरित्यदोष इत्यर्थः। (आपातप्रतीत्यनुरोधेनेति यौगिकत्वलिङ्गत्वमित्युक्ति-रापातप्रतीत्यनुरोधेनेत्यर्थः। आपाततो यौगिकत्वं लिङ्गत्वमिति यावत्। तदपि चापाततो रूढिरहितत्वमेव मन्तव्यम्। ततो नानेकपदसमभिव्याहारात्मकेषु सर्वेषु भूतेष्वेतमित्यादिरूपलिङ्गात्मकशब्दे नाव्याप्तिरिति भावः। तथा च पूर्वपादे समन्वितानां शब्दानां विद्वद्रूढ्या यौगिकानामपि अज्ञप्रतीत्यनुरोधेन रूढ्या साक्षाद्धर्म्युपस्थापकत्वं विवक्षितम्। अतो युक्तेयं पादभेदोक्तिरिति भावः।)

**शे०वा०**— अस्त्वेवमस्योत्तरपादभेदसिद्धिस्तथाऽपि न पूर्वपादभेदसिद्धिः । तस्याप्यन्यत्रप्रसिद्धलिङ्ग-समन्वयप्रतिपादकत्वेन पादप्रतिपाद्यस्य पूर्वपादादव्यावृत्तत्वादित्याक्षिपति **नन्विति** । ननु पूर्वपादे समन्वितानां रूढत्वेन नामत्वान्न लिङ्गत्वमित्यतो नात्र धर्मिवाचितत्वं नामत्वं धर्मवाचित्वं लिङ्गत्वमित्याश्रयितुं युक्तम् । तथा सति धर्मिवाचितयाऽन्तर्याम्यादिशब्दानां नामत्वस्य धर्मवाचितया चानन्दादिशब्दानां च लिङ्गत्वस्य प्रसङ्गात् । किं नाम रूढत्वं नामत्वं यौगिकत्वं च लिङ्गत्वमित्येवाश्रयणीयम् । तथा च पूर्वपादसमन्वितानामपि यौगिकत्वात् कथं न लिङ्गत्वमित्याह **यौगिकत्वादिति** । अस्तूक्तरीत्या रूढत्वयौगिकत्वाभ्यामेव नामलिङ्गभेदस्तथाऽप्यतीतपादे समन्वितानामपि रूढत्वादेव न यौगिकत्वमिति कथं लिङ्गत्वमित्यतः स्यादेतदेवं यदि केचिद्रूढा एव केचिद्यौगिका एवेति विभागः स्यात् । न चैतदस्ति । सर्वेषामपि यौगिकत्वादिति भावेन रूढानां यौगिकत्वानङ्गीकारे बाधकमाह **अन्यथेति** । रूढानां यौगिकत्वानङ्गीकार इत्यर्थः । **गुणपूर्त्यलाभेनेति** । तत्तच्छब्दनिर्वचनलब्धगुणलाभैकप्रयो-जनकत्वात् समन्वयसमर्थनस्य तदभावे वैयर्थ्यमेवेत्यर्थः । प्रयोजनान्तरसम्भवात् तत्तच्छब्दनिर्वचनलब्धगुण-लाभैकप्रयोजनकत्वमसिद्धं समन्वयसमर्थनस्येत्याशङ्कते **न चेति** । प्रकरणगतगुणलाभेनेत्युपलक्षणम् । तत्तदधि-करणाक्षेपसमाधानेनेत्यपि द्रष्टव्यम् । **वचनवृत्तीति** । रूढ्यङ्गीकारवैफल्यादित्यर्थः । लक्षणादिना भगवत्परत्वेऽपि प्राकरणिकगुणलाभस्य तत्तदधिकरणाक्षेपसमाधानस्य च सम्भवादिति भावः । **उक्तं चेति** । सङ्क्षेप इति शेषः । यतोऽर्थगतं प्रवृत्तिनिमित्तमपेक्ष्य नारायणमभिदधति अतोऽनन्तगुणोऽसाविति पूर्वेण सम्बन्धः । विद्वत्प्रतीत्या सर्वेषां यौगिकत्वेऽप्यज्ञप्रतीत्या ये रूढास्ते नामानि तत्प्रतीत्या ये यौगिकास्ते लिङ्गानीत्यज्ञप्रतीत्यनुरोधेन नामलिङ्गविभागस्याश्रयणाददोष इत्याह **सत्यमिति** । **आपातप्रतीत्यनुरोधेनेति** । यौगिकत्वं लिङ्गत्वमित्युक्ति-रापातप्रतीत्यनुरोधेनेत्यर्थः । आपाततो यौगिकत्वं लिङ्गत्वमिति यावत् । तदपि चापाततो रूढिरहितत्वमेव मन्तव्यम् । तेनानेकपदसमभिव्याहारात्मकेषु 'सर्वेषु भूतेष्वेतमि'त्यादिरूपलिङ्गात्मकशब्देषु नाव्याप्तिरिति भावः । यद्यप्यत्र प्रकृतशङ्काऽनुसारेणापातप्रतीत्यनुरोधेनेयमुक्तिरित्येव वक्तव्यम् । तथाऽपि प्रसङ्गादन्यत्रप्रसिद्धोभयत्र-प्रसिद्धादिविभागोऽपि न वास्तवः । विद्वत्प्रसिद्ध्या सर्वशब्दानां भगवत्परत्वात् किं त्वज्ञप्रतीत्या केचिदन्यत्र-प्रसिद्धाः केचिदुभयत्रप्रसिद्धाः केचिदन्यत्रैवप्रसिद्धा इत्यज्ञप्रतीत्यनुरोधेनैवेति ज्ञापयितुमन्यत्र प्रसिद्धादिवदिति दृष्टान्ततयोपादानं कृतमित्यवधेयम् । परमत इव स्वमतेऽपि नारायणे परापरविभागभ्रान्तिं परिहर्तुं पर इत्यस्य प्रयोजनमाह **वृत्तिरिति** । कथमनेनोक्तभ्रान्तिनिरास इत्यतो व्याचष्टे **मुख्यार्थ इति** । नारायणस्य मुख्यार्थत्वोक्तावपि कथं वृत्तेर्मुख्यत्वलाभः परशब्देनेत्यतः परशब्दोक्तमुख्यार्थत्वस्य वृत्तेर्मुख्यत्वं विना ऽनुपपन्नत्वात् तेन तल्लाभ इत्याह **तथा चेति** । उक्तलिङ्गसमन्वयस्य द्वितीयपादप्रतिपाद्यत्वलाभायानुगुणं शेषमाह **अस्मिन्निति** ।

**वा०र०**— यदि रूढत्वयौगिकत्वाभ्यामेव नामलिङ्गभेदस्तर्हि पूर्वपादसमन्वितानामपि यौगिकत्वात् कथं नामलिङ्गत्वमिति दोषतादवस्थ्यमित्यत आह **तथापीति** । तथाभेदाङ्गीकारेऽपीत्यर्थः । पूर्वपादीयानां यौगिकत्वा-





ङ्गीकार एव तद्विभागानुपपत्तिप्रसरो नान्यथेति भावः । **प्रयोजनान्तरेति** । समन्वयसमर्थनस्य प्रयोजनान्तरेत्यादि सम्बन्धः । यच्छब्दा इत्यत्रत्ययच्छब्दार्थकथनेनात इत्येतदपेक्षितहेतुलाभं दर्शयन्नेवातोऽनन्तगुण इति पूर्वेणान्वयं च दर्शयति । **यतोऽर्थगतमिति** । योगवृत्तस्य इत्यस्य व्याख्यानम् **अर्थगतमित्यादि** । **विद्वत्प्रतीत्येति** । एतदपि प्राचीननामलिङ्गनिष्कर्षानुसारेण योज्यम् । चन्द्रिकानुसारेणाह **तदपि चेत्यादि** । **परापरविभागेति** । पर इति विशेषणेन प्रसक्तमिति शेषः ।

**स०व्र०**— ननु यौगिकत्वानङ्गीकारेऽपि यस्मिन्प्रकरणे यः शब्दः तस्य यथाकथञ्चित् भगवत्परत्वे, समर्थितत्वं(=यौगिकत्वं) किमर्थमङ्गीकर्तव्यम्; इति शङ्कते **न च प्रकरणेति** । **अन्यत्रप्रसिद्धत्वादिवदिति** । अन्यत्रप्रसिद्धत्वं यथा लोकत इत्यर्थः । आदिपदेन उभयत्रप्रसिद्धत्वं ग्राह्यम् । नामात्मकत्वं त्वज्ञरूढित इति ग्राह्यम् । तथा आपातप्रतीत्यनुरोधेन अज्ञप्रतीत्यनुरोधेन यौगिकत्वमेव लिङ्गात्मकत्वमित्यर्थः ।

**विठ्ठल०**— **यौगिकत्वादिति** । यौगिकेष्वानन्दमयाकाशादिशब्देष्वानन्दप्राचुर्यसमन्तात्काशनादि-धर्मा एव प्रवृत्तिनिमित्ता इति भावः । **अन्यथा** यौगिकत्वानङ्गीकारे । **उक्तं चेति** । अणौ भाष्यसङ्ग्रह इत्यर्थः । **अन्यत्रप्रसिद्धत्वादिवदिति** । यथाऽन्यत्रोभयत्रान्यत्रैवप्रसिद्धिरापातप्रतीत्यनुसारेण तथेहापि शब्द-श्रवणमात्रेणापाततो धर्म्युपस्थितौ तेषां शब्दानां नामात्मकत्वं धर्मद्वारा धर्म्युपस्थितौ लिङ्गात्मकत्वमिति विवेक इति भावः ।

**चषकः**— ननु धर्मिवाचकत्वं नामत्वं धर्मवाचकत्वं लिङ्गत्वमिति विवक्षायाः अन्तर्याम्यादिशब्दानां नामताया आनन्दादिशब्दानां लिङ्गतायाश्च प्रसञ्जकतया योगेन समुदायवृत्त्युपरक्तप्रतिसंहितिगोचरत्वं नामत्व-मवयववृत्त्युपरागेण तत्प्रतिसन्धानविषयत्वं च लिङ्गत्वमित्येवाश्रयणीयं इत्थं च प्राक्तनपादसमन्वितानामपि तादृशलैङ्गिकलक्षणलक्षिततया लिङ्गता प्रासाङ्क्षीदेवेत्याह **यौगिकत्वादिति** । **आपातप्रतीत्यनुरोधेनेति** । प्राति-स्विकनिरवधिकशब्दप्रवृत्तिनिमित्ताश्रयत्वान्यगतशब्दप्रवृत्तिनिमित्तनियामकत्वाभ्यां निखिलशब्दानामीशनिरूपित-परममुख्यवृत्तितात्पर्यकत्वे प्रतिसन्दधानानां प्रसिद्ध्या भगवत्पराणामपीन्द्रादिशब्दानां तादृशप्रवृत्तिनिमित्ता-ननुसन्धातॄणामिन्द्रादिशब्दश्रवणाव्यवहितोत्तरक्षणावच्छेदेन जनितशचीपतित्वादिप्रकारकप्रतीत्यनुरोधेनान्यत्र-प्रसिद्धत्वादिकं यथा पूर्वपादे विवक्षितम् । तथा तत्र समन्वितानां तादृशप्रवृत्तिनिमित्तानुसन्धानदिशावयववृत्त्या परमैश्वर्याद्युपरक्तान्वयधीजनकानामपि तादृशनिमित्ताप्रतिसंहितिकालीनसमुदायवृत्त्यधीनतादृशधर्मानुपरक्तप्रतीति-मनुरुध्य रूढत्वमपि विवक्षितमिति पादभेदोक्तिः सङ्गच्छत इति भावः ।

**॥ इति पूर्वपादप्रतिपाद्यार्थभेदः ॥**

**॥ इति सप्रयोजनं द्वितीयपादप्रतिपाद्यार्थप्रदर्शनम् ॥**

* * *





**॥ अथ च प्रथम(सर्वत्र प्रसिद्धोपदेशादिति)सूत्रव्याख्यानम् ,**
**मायावादिनां रामानुजीयानाञ्च व्याख्यानस्य दूषणम् ॥**
**॥ तत्रादौ मायावादिनां रामानुजीयानाञ्च व्याख्यानस्य अनुवादः,**
**तन्निरासकतया अनुव्याख्यानार्थकथनञ्च ॥**

३ **सु०—** केचित् 'मनोमयः प्राणशरीरो भारूप' इत्युक्तं मनोमयत्वादिनोपास्यत्वं परमात्मनः प्रतिपादयितुमिदमधिकरणमिति व्याचक्षते, तदसदित्याशयवान् आह **सर्वगत्वमिति** ।

**अनु०—** सर्वगत्वं तु प्रथमं प्रविचार्यते ।

**तुशब्दोऽवधारणे । 'एतमस्यामेतं दिवी'त्यादिवाक्योक्तं सर्वगतत्वम् एवात्र पादे प्रथमं परमेश्वरस्य समर्थ्यते, न तु मनोमयत्वादिनोपास्यत्वमित्यर्थः । सत्यकामत्वादि-परमेश्वरधर्माणां स्फुटप्रतिभासत्वेन सन्देहाद्यनुपपत्तेरिति भावः ।**

**परि०— केचिदिति** । मायावादिनो रामानुजीयाश्च । **इत्युक्तेति** । छान्दोग्ये तृतीयाध्याये उक्तेत्यर्थः ।

**यादु०— सत्यकामत्वादीति** । आदिपदेन सत्यसङ्कल्पत्वादिपरिग्रहः ।

**वं०प०— केचित्** मायिनो रामानुजीयाश्च ।

**आनन्दः— सर्वत्रप्रसिद्धोपदेशादिति** । अत्र पूर्वाधिकरणे सिद्धान्ताक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । ब्रह्मततमित्युक्तं सर्वगतत्वं ऐतरेयके श्रूयते । एतं ह्येव बह्वृचा महत्युक्थे मीमांसत इति इत्यादि । तत्किं विष्णो-रन्यस्य चेति सन्देहे तस्यैतस्यासावादित्यो रस इति यश्चासावादित्य इति तस्मात्पुरुषं पुरुषं प्रत्यादित्य इति बह्वादित्यश्रुतेः सूर्यात्मेति सौरमन्त्रोदाहरणादादित्येऽनुक्तत्वाल्लिङ्गाच्चादित्यो अर्भकौकस्त्वचक्षुर्मयत्वादिलिङ्गाच्च जीवो वेति प्राप्ते प्रतिविहितं सूत्रकृता **सर्वत्रेत्यादि** । सर्वत्र पृथिव्यादिषु उच्यमानो नारायण एव एतमेव ब्रह्मेति सर्वगतेति ब्रह्मशब्दोपदेशात्तस्य च नारायण एव प्रसिद्धत्वादादित्यश्रुत्यादिकं तु भाष्योक्तरीत्या सावकाशमिति ।

नन्वत्र परोदाहृतविषयवाक्यं परित्यज्य स्वयं विषयवाक्यान्तरोदाहरणमयुक्तमित्यतः परोदाहृतस्य विषय-वाक्यमित्यत्राह **सत्यकामत्वादीति** ।





**कं०रा०— सत्यकामत्वादीति** । मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प इति वाक्ये सत्यकामत्वादिब्रह्मधर्माणां स्फुटप्रतिभासत्वेन तत्र मनोमयत्वादिनोपास्यो जीवो वा ब्रह्म वेति सन्देहस्य जीव एवेति पूर्वपक्षस्यानुपपत्तेरित्यर्थः ।

**शे०वा०—** प्रतिपाद्यान्तराप्रसङ्गात् प्रसक्तौ वा सति सम्भवे तत्परित्यागेन प्रतिपाद्यान्तरस्यावक्तव्यत्वात् तदसम्भवाभिप्राये चासम्भवहेतोरपि वक्तव्यत्वादधिकरणप्रतिपाद्यमात्रप्रदर्शनपरोत्तरभाष्यमनर्थकमित्यतः प्रतिपाद्यान्तरप्रसक्तिं तावद्दर्शयति **केचिदिति** । एवं प्रतिपाद्यान्तरप्रसक्तिमुद्भाव्य तर्हि तदेवास्तु किं प्रतिपाद्यान्तराश्रयणेनेत्यतस्तस्यानुपपन्नत्वाद्युक्तं तत्परित्यागेन भाष्यकाराणां प्रतिपाद्यान्तराश्रयणमित्याशयेन तद्भाष्यं सङ्गमयति **तदसदित्याशयवानिति** । स्पष्टं तन्नेत्यनुक्तेराशयपदम् । प्रतिपाद्यान्तरासाधुत्वाशयस्य मूलारूढताप्रसिद्ध्यर्थं तदनुगुणतया तुशब्दं व्याचष्टे **तुशब्द इति** । तर्ह्यसम्भवहेतोरपि वक्तव्यत्वात् तदनुक्तौ कथं प्रतिज्ञामात्रेणाभिमतसिद्धिरित्यतोऽसम्भवहेतोरत्र स्पष्टत्वात् तदनुक्तावपि प्रतिज्ञामात्रेण विवक्षितसिद्धिरित्याशयेन भाष्याभिप्रायमाह **सत्यकामत्वादीति** । सत्यकामत्वेत्यनेन 'सत्यसङ्कल्प आकाश आत्मेति' विषयवाक्योक्तस्य सत्यसङ्कल्पत्वस्य परिग्रहः । आदिपदेन 'अवाक्यनादरो ज्यायान्पृथिव्या' इत्यादिवाक्यशेषोक्तान्तरत्वज्यायस्त्वादिलिङ्गसङ्ग्रहः । सन्देहादीत्यादिपदेन पूर्वपक्षसङ्ग्रहः ।

**वा०र०— प्रसक्तौ वेति** । प्रतिपाद्यान्तरस्येति बुद्ध्या विवेकेन अनुवर्तनीयम् । सर्वगतत्वं त्विति भाष्योक्तप्रतिपाद्यापेक्षया प्रतिपाद्यान्तरमिति तथोक्तम् । **सति सम्भव इति** । अतिरिक्तप्रतिपाद्ये सम्भवति सतीत्यर्थः । प्रतिपाद्यान्तरशब्दा यथासम्भवं व्याख्येयाः । **सत्यकामत्वादीति** मूले सत्यकामत्वस्य ग्रहणं न युक्तम् । यदि चातद्गुणसंविज्ञानबहुव्रीहिणा सत्यसङ्कल्पत्वग्रहणस्वीकारस्तर्हि सत्यसङ्कल्पत्वमात्रसङ्ग्रहप्राप्त्या वाक्येनादरत्वादेर्वाक्यशेषोक्तस्य सङ्ग्रहो भवतीत्यतः सत्यकामपदेनैवोपलक्षणया सत्यसङ्कल्पत्वग्रहः । आदिपदेन चावाक्यानादरत्वादेर्ग्रह इति । मूलाभिप्रायं दर्शयति **सत्यकामत्वेत्यनेनेति** ।

**विठ्ठल०— मनोमयत्वादिनोपास्यत्वमिति** । तथा चास्मिन्नधिकरणे मनोमयत्वादिनोपास्यत्वलिङ्गमत्र समन्वीयत इति भावः । अवधारणलब्धमिह हेतुमाह **सत्यकामत्वादिति** । तत्रैव विषयवाक्ये सत्यकामः सत्यसङ्कल्प इत्यादिनोक्तानां परमेश्वरासाधारणधर्माणामित्यर्थः ।

**चषकः— मनोमयत्वादिनेति** । कर्मसाधनकृत्यप्रकृत्युपस्थाप्योपासनान्वयिप्रकारतानिरूपकत्वं तृतीयार्थः । **सत्यकामत्वादीति** । आदिपदं सत्यसङ्कल्पस्य, 'अवाक्यनादरः ज्यायान् पृथिव्या' इत्यादिवाक्यशेषोक्तावाक्यनादरत्वज्यायस्त्वादिलिङ्गस्य च परिग्राहकम् । **सन्देहाद्यनुपपत्तेरिति** । इहादिपदं पूर्ववादिमतसङ्ग्राहकं तथा च विशेषादर्शनघटितसामग्र्यभावेन सन्देहस्य पारमेश्वरलिङ्गबाहुल्याश्रवणेन पूर्ववादिमतप्रवृत्तेश्चानुदय इति भावः ।

**॥ इति मायावादिनां रामानुजीयानाञ्च व्याख्यानस्य अनुवादः, तन्निरासकतया अनुव्याख्यानार्थकथनञ्च ॥**





**॥ ततश्च उत्थाप्यशङ्का तत्समाधानश्च ॥**

**४ सु०— ननु मनोमयत्वादयः शारीरधर्मा अपि प्रतीयन्त इति चेन्न, तेषामानन्दमयाधिकरणन्यायेन सावकाशत्वात्, चरमप्रतीतेनापि निरवकाशेन प्रथमप्रतीतस्य सावकाशस्यान्यथात्वोपपत्तेः ।**

**परि०**— ननूपक्रमप्राबल्यस्य पूर्वतन्त्रे स्थितत्वात्सत्यकामत्वादिचरमधर्मेण कथं प्रबलस्य मनोमयत्वादिप्रथमश्रुतस्य बाध इत्यत आह **चरमेति** । 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमि'ति पूर्वतन्त्र एवोक्तेरिति भावः ।

**यादु०**— ननु मनोमय इत्याद्युदाहृतवाक्ये प्रथमप्रतीतानां मनोमयत्वादिशारीरधर्माणां कथं सावकाशत्वम् । असञ्जातविरोधितया प्रबलोपक्रमप्रतीतत्वात् । सत्यसङ्कल्पत्वादेश्चरमप्रतीतत्वादित्यत आह **चरमेति** ।

**वं०प०**— ननु मनोमय इत्याद्युदाहृतवाक्ये प्रथमप्रलीतानां मनोमयत्वादिशारीरधर्माणां कथं सावकाशत्वमसञ्जातविरोधित्वेन प्रबलोपक्रमस्थत्वात् । सत्यसङ्कल्पत्वादेश्चरमप्रतीतत्वादित्यत आह **चरमेति** ।

**आनन्दः— आनन्दमयाधिकरणन्यायेनेति** । प्राचुर्यादित्युक्तन्यायेनेत्यर्थः । ननु सावकाशस्यापि मनोमयत्वादेः प्रथमप्रतीतत्वेनानुपसञ्जातविरोधित्वेन प्राबल्यात्तेन चरमप्रतीतस्यापि सत्यकामत्वादेः बाधो भविष्यतीत्यत आह **चरमेति** । प्राबल्यापेक्षया निरवकाशत्वप्रयुक्तप्राबल्यस्य बलवत्वादिति भावः ।

**कं०रा०**— ननु मनोमयः प्राणशरीर इति वाक्ये मनःसम्बन्धित्वादयो जीवधर्मा अपि प्रतीयन्ते । अप्राणो ह्यमना शुभ्र इत्यादि श्रुत्या ब्रह्मणो मनःप्राणसम्बन्धादिरहितत्वात् । अतः सन्देहपूर्वपक्षयोरुपपत्तिरित्याशयेन शङ्कते **नन्विति । चरमेति** । चरमप्रतीतेनापि निरवकाशेन सत्यकामत्वादिति प्रथमप्रतीतस्य सावकाशस्य मनोमयत्वादेर्बाधोपपत्तेः पूर्वपक्षानुदय एवेति भावः ।

**शे०वा०**— ननु भवेत्सन्देहाद्यनुदयो यद्यत्र वाक्ये सत्यकामत्वादयो ब्रह्मधर्मा एव प्रतीयेरन् । न चैतदस्ति । मनोमयत्वादीनां शरीरधर्माणामप्यत्र प्रतीयमानत्वात् । तथा चोभयधर्मश्रवणाद्युक्तः सन्देहः । मनोमयत्वादीनामुपक्रमस्थत्वेन प्रथमावगतत्वात्सत्यकामत्वादीनां चोपसंहारस्थत्वेन चरमावगतत्वादुपक्रमाधिकरणन्यायेन प्रथमावगततया प्रबलैः शारीरधर्मैरेव चरमावगततया दुर्बलब्रह्मधर्मबाधया युक्तः पूर्वपक्षोऽपीत्यभिप्रेत्य शङ्कते **नन्विति** । मनोमयत्वादीत्यादिपदेनान्तर्हृदयेऽणीयानित्यादिवाक्यशेषोक्ताणीयस्त्वादेः सङ्ग्रहः । मनोमयत्वादिकं च जीवधर्म एव । तस्यैव मन आदिसम्बन्धात् । न तु ब्रह्मणः । तस्य 'अप्राणो ह्यमनाः शुभ्रः' इत्यादिश्रुतिभ्यस्तद्राहित्यावगतेरिति भावः । **आनन्दमयाधिकरणन्यायेनेति** । न मनोमये मनःशब्दोऽन्तःकरणपरो येनोक्तानुपपत्तिः





किन्तु मनु अवबोधन इत्यस्माद्भावे असुन्प्रत्यये मनोबोधस्तत्प्राचुर्यं च महाबोधत्वरूपं परमेश्वरे सम्भवत्येवेत्यानन्दमयाधिकरणन्यायेनेत्यर्थः । **सावकाशत्वादिति** । तथा च अतुल्यबलत्वान्न मनोमयत्वादीनां जीवत्वकोट्युपस्थापकत्वं नापि तत्कोट्यवधारकत्वमिति न सन्देहाद्यवसर इति भावः । ननु तर्हि सत्यकामत्वादीनां चरमश्रुततया दुर्बलत्वात् तैः प्रथमप्रतीततया प्रबलमनोमयत्वादिजीवधर्मबाधायोगात् सत्यकामत्वादिना ब्रह्मपरत्वनिश्चयोऽपि न स्यादित्यतो मनोमयत्वादीनामुक्तरीत्या सावकाशत्वात् सत्यकामत्वादीनां चरमप्रतीतत्वेऽपि निरवकाशत्वात् सावकाशनिरवकाशयोर्निरवकाशस्य बलवत्त्वाद्युक्तो निरवकाशसत्यकामत्वादिधर्मैः सावकाशमनोमयत्वादिजीवधर्मबाधया ब्रह्मपरत्वनिर्णय इत्याशयेनाह **चरमप्रतीतेनापीति** ।

**स०व्र०— नन्विति** । यथा सत्यकामत्वादीनां ब्रह्मधर्मत्वं स्फुटं तथा मनोमयत्वादीनां शारीरधर्मत्वमिति सदेहाप्तिरित्यर्थः । **न तेषामिति** । मनःशब्दस्यावबोधार्थत्वान्मयटः प्राचुर्यार्थत्वात् मनोमयशब्दस्य वाच्यं ब्रह्मैवेति तदुक्तमित्यर्थः । ननु जीवधर्मत्वसम्भवे कथं मनोमयत्वादीनां ब्रह्मधर्मत्वं सत्यकामत्वादिना निर्णयश्चेति चेत् न । पूर्वप्रतीतस्यानुपसञ्जातविरोधिनः पश्चात्प्रतीतेनोपसञ्जातविरोधिना बाधायोगादित्यत आह **चरमेति** । यथा पश्चाच्छ्रुतेनापि 'तेजो वै घृतमि'त्यनेन प्रथमप्रतीतस्याक्ताः शर्करा उपदधातीत्यस्य निर्णयः तत्र अक्ततासाधनद्रव्यमात्रक्षेपेण तैलवसादीनामपि प्राप्तौ घृतस्तावकेनार्थवादेन निर्णयविधेयस्यैव अक्ततासाधनत्वात् तथा सत्यकामत्वादिना मनोमयत्वादीनां निर्णयः । सावकाशत्वनिरवकाशत्वे प्राबल्यदौर्बल्यकारणे इत्यर्थः । घृतस्तुतेरुपलक्षणत्वेनापि तैलस्यापि ग्रहसम्भवात् सन्देहाप्तिरित्यर्थः । सत्यकामत्वादीनां कथञ्चिदन्यत्र सम्भवः ।

**विठ्ठल०— आनन्दमयाधिकरणन्यायेनेति** । प्राचुर्यार्थाश्च मयट इत्युक्तत्वेन मनःशब्दस्य च ज्ञानार्थकत्वेन प्राणशब्दस्य प्रणेतृत्वार्थत्वेन महाप्राणो महाबोध इत्यत्रोक्तन्यायेनेत्यर्थः । ननु मनोमयत्वादीनां शारीरधर्माणां (न) सत्यकामत्वादिबलेन सावकाशत्वमुचितम् । तेषामुपक्रमे प्रतीतत्वेन प्रबलत्वात् सत्यकामत्वादीनां चरमप्रतीतत्वेन दुर्बलत्वादित्यत आह **चरमेति** ।

**चषकः—** ननु सत्यकामत्वादिपारमेश्वरधर्माभिधायकपदसमभिव्याहारवन्मनोमयत्वादिशारीरधर्माभिधायकपदसमभिव्याहारस्यापि प्रकृतवाक्ये सत्त्वेन सत्प्रतिपक्षस्थल इव संशयावतारस्य मनोमयत्वादीनामुपक्रमगतपदबोध्यतानिबन्धनक्षिप्रोपस्थितिकत्वाधीनबलीयस्ताकतया सत्यकामत्वादीनां च निगमनगतत्वापादितमन्थरप्रतीतिकत्वायत्तदौर्बल्यकत्वेन उपक्रमाधिकरणन्यायेनौपक्रमिकपदोपस्थापितशारीरधर्मैर्नैगमनिकपदप्रतीतभागवतधर्मबाधया पूर्ववादिमतप्रवृत्तेश्च निरर्गलतया न क्षतिरित्याशङ्कते **नन्विति** । मनोमयत्वादीत्यादिपदं अन्तर्हृदयेऽणीयानित्यादिवाक्यशेषाभिहिताणीयस्त्वादिसङ्ग्राहकम् । अप्राणो ह्यमनाः शुभ्र इत्यादिश्रुतिभिर्ब्रह्मणो मन आदिसम्बन्धराहित्यावगतेस्तदादिसम्बन्धित्वरूपमनोमयत्वादेर्जीवधर्मताऽवधृतेरिति भावः । **आनन्दमयाधिकरणन्यायेनेति** । अवबोधनार्थस्य मनोर्भविऽसुनि तदन्तान्मयटि च प्राचुर्यार्थे निष्पन्नमनोमयशब्दप्रवृत्तिनिमित्तमहाबोधवत्वस्येश्वरे सम्भवेन सामञ्जस्यमित्यानन्दमयनयव्युत्पादितन्यायेनेत्यर्थः । **सावकाशत्वादिति** । तथा च





हेतुत्वं न स्यादिति भावः । द्वितीयमङ्गीकृत्य तर्हि तादृशार्थलाभार्थमेव अतच्छब्दादित्यपि वक्तव्यमेवेति न तद्वैयर्थ्यशङ्काऽवकाश इति भावेनाह **अत इति** ।

**वा०२०— अतच्छब्दादित्यस्येति** । सूत्रखण्डस्येत्युत्तरं श्रुतस्यात्रापि सम्बन्धः सूत्रखण्डस्येति स्थानेऽपि अतच्छब्दादिति सूत्रखण्डस्येत्यर्थः । **भाष्यकारीयेति** सूत्रभाष्यकारीयेत्यर्थः । इत्यभिप्रायेणार्थान्तर-वर्णनमिति नेति सम्बन्धः आक्षिप्य समाधातुमिति भाष्यकारीयव्याख्याने कानुपपत्तिः कथं च प्रकारान्तरेण तत्समाधानं यदपेक्षयेदं वर्णकान्तरमित्याशङ्कापरिहारायोक्तव्याख्यानमाक्षिप्य तदाक्षेपप्रदर्शनपूर्वकं समाधातुं समानान्तरप्रकारं दर्शयितुमित्यर्थः । आक्षिप्येति पाठः । **तत्तत्सूत्राण्युपन्यस्येति** । अनेनात्राधिकरणे मूले द्युभ्वाद्यायतनमिति प्रधानसूत्रोदाहरणमितराधिकरणेष्विवाधिकरणव्याख्यानाय तदारम्भार्थमिति न किन्तु प्रयो-जनान्तरार्थमिति शेषः सूचितः । अत एवात्र सूत्रं प्रतीकतयैवोपात्तं न तु टीकाकृतेतरत्र मूलानुसारेण सूत्रोदाहरण-पूर्वकं भाष्यव्याख्यानं करणादिह स्वातन्त्र्येण सूत्रमुदाहृतम् । एवमक्षरमम्बरान्तधृतेरित्यधिकरणेऽपि ज्ञेयम् । एवमेवैवंजातीयकेऽन्यत्रापि प्रसज्यप्रतिषेधरूपेति अभावस्यैवं विशेषणे न पर्युदासो व्यावर्त्यते । **क्रियासापेक्ष-त्वेनेति** । 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञि'ति भट्टैरुक्तत्वात् नञः क्रियान्वयस्यावश्यकतया तत्सापेक्षत्वे प्राप्तिरित्याशयः । अदृश्यत्वाधिकरणे सामर्थ्येनेत्येतन्मूलव्याख्यावसरे टीकायामेवमेव तत्सापेक्षत्वोपपादनात् प्रसज्यप्रतिषेधे हि घटो नास्ति घटौ न स्तः अहं तत्र नास्तीत्यादौ वचनपुरुषव्यवस्थादर्शनिन न त्वं पच्चसि न युवां पच्चथ इत्यादौ नञ्समभिव्याहारे क्रियाया एव निषेधप्रतीतेरनुभवसिद्धत्वेन च वाक्ये नञः त्रिधैव चान्वयं इत्यस्य सिद्धिः असूर्यं पश्या इत्यादावपि तथात्वमुपपादयिष्यते क्रियासापेक्षत्वानङ्गीकारेऽर्थाभावेऽव्ययीभावस्य अपरिहारापत्तेरित्याद्युपपादनं ज्ञेयम् । **तच्छब्दो नास्तीत्यादिवाक्यमेवेति** । अत्रादिपदेन यस्मादित्यर्थक-हिशब्दग्रहणं तथा च तच्छब्दो नास्ति हीति वाक्यमेव स्यात् तच्छब्दभावरूपार्थस्य तावतापि लाभात् वाक्य एव नञो समस्ततया क्रिययैवान्वय इति प्रसज्यप्रतिषेधाङ्गीकारक्रियान्वयनिमित्तेन वाक्यमेवेति निश्चेतुं शक्यमिति भावः । **सामर्थ्ये सत्येवेति** । सामर्थ्यं द्विविधं व्यपेक्षालक्षणं एकार्थीभावलक्षणं चेति । तत्र स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परसम्बन्धः स व्यपेक्षेत्युच्यते । सा च राज्ञः पुरुष इति वाक्य एव तत्र ह्यनियतसम्बन्धिविषयत्वादुक्तव्यपेक्षायां यो यः सन्निहितो योग्यश्च तेन सम्बध्यते । राज्ञः पुरुषोऽश्वश्च राज्ञो देवदत्तस्य च पुरुष इति राजपुरुष इति समासे तु विग्रहकाले पृथक् पृथक् तत्पदाभिहितस्यार्थस्य पदसमुदायात् परिस्फुरणात् वृत्तौ हि राजपदं राजानभिधाय न तावत्येष पर्यवस्यति किन्तु पुरुषमप्याचष्ट इत्यादि प्रथमभागमञ्जर्यानुसारेण विशेषविचारोऽदृश्यत्वाधिकरणीयटीकाप्रपञ्चे व्यक्तः । तदत्र राजपुरुष इति समस्ते ऋद्धस्येति पदस्य राजपदेन सम्बन्धो नास्ति । राज्ञः पदार्थैकदेशत्वादिकं समर्थ्य सूत्रीयग्रन्थेषु व्यक्तं तथा च समासप्रयोजकैकार्थीभावलक्षणसामर्थ्ये सत्येव समासविधानादित्यर्थः । सर्वसमासविधायकेषु लक्षणेषु समर्थः पदविधिरिति परिभाषया समर्थाधिकारसिद्धेरिति भावः । **इति वचनादिति** । इति न्यायादित्यर्थः । अदृश्यत्वा-धिकरणे उपपादितं चैतदिति ज्ञेयम् । अत्राधिकमदृश्यत्वाधिकरणीयास्मदीयविचारानुसारेण ज्ञेयम् । क्वचिदेव





भाष्यप्रामाण्यात् किमोदनः शालीनामित्यादौ केषां शालीनामोदन इत्यर्थानुसारेण सापेक्षत्वेऽपि समासोपलम्भेऽप्यधिकरणे तावत्त्वे चेति सूत्रे तत्त्वबोधिन्यां उपमितमिति सूत्रे सामान्ययोग इति ज्ञापकात् प्रधानस्य सापेक्षत्वेऽपि समासः । उक्तं च भाष्ये भवति वै प्रधानस्यापि वृत्तिरिति इत्युक्तत्वेन प्रधानस्य सापेक्षस्यापि समास इति एवं प्राप्तावपि चौत्सर्गिकं सापेक्षस्यासमर्थत्वमनिवार्यमेव देवदत्तस्य गुरुकुलमित्यादौ च नित्यसापेक्षे समासदर्शनं तु न दोषाय तदेतत्सापेक्षासमर्थतान्यायरूपं वचनं बहुभिर्वैय्याकरणैः समर्थसूत्रीयभाष्योक्तं स्वीकृतमस्तीति तद्वचनमत्र प्रमाणतयोक्तमिति ज्ञेयम् । मूले **छन्दोवत्सूत्राणि भवन्तीति वेति** । वृद्धिरादैजित्येतत्सूत्रव्याख्यानभाष्ये आदैजित्यत्र चोः कुरिति कुत्वं कस्मान्न भवतीत्याशङ्क्य पदान्तत्वाभावोपपादनाय भत्वमयस्मयादीनि छन्दसीत्यनेनाश्रयितुं तन्मूलछन्दस्त्वसिद्धये छन्दोवत्सूत्राणि भवन्तीतीष्टिरुक्ता । अत एवाह कैय्यटः इष्टिरेवेयमिति । सा च वार्तिककृदुक्तेष्टिवक्तव्यादिवत्साधकत्वादुक्तस्थलपरम्परया कुत्वाभावसाधिका भवति तद्वदेव छन्दोवदिति भाष्योक्तेष्टिवाक्येन छन्दस्त्वे सति परम्परया समासे सामर्थ्येऽपि भवतीत्याशयः । यद्यपि सूत्राणीत्यनेन प्रसक्तवैशेषिकादिसूत्राणां व्यावृत्तिः कैय्यटादावुक्ता तथापि न ब्रह्मसूत्राणां वेदसम्बन्धशून्यत्वयुक्तेरत्राभावादिति ज्ञेयम् । तत्र प्रकृतोपयुक्तां परम्परां दर्शयति **ततश्च छन्दसीति** । वैय्याकरणोक्तेरिति षष्ठीयुक्तछन्दसि वेति सूत्रे वेत्येव योगं विभज्य छन्दसीति पूर्वयोगादनुवर्त्य छन्दसि वेति योगस्वरूपं तद्वतादेव सर्वत्र छन्दसि सर्वविधीनां विकल्पप्रतिपादनं बहुलं छन्दसीत्यादिरपि छन्दसि वेति योगस्यैव प्रपञ्च इत्यपि षष्ठी युक्त इत्येतत्सूत्र एव व्याख्यातम् । तस्यायं सङ्ग्रहो भाष्यादावुक्तः । सर्वे विधयः छन्दसि विकल्पन्त इतीति भावः । ततश्च सामर्थ्ये समासनियमोपपादकसमर्थः पदविधिरिति परिभाषाविधेः छन्दस्त्वाद्विकल्पे सति तदप्रवृत्तिपक्षे सामर्थ्याभावेऽपि समासस्य सिद्धिरित्याह **असमर्थस्यापीति** । **अगतिकेति** । गत्यन्तरवर्जिता गमनिकेत्यर्थः । तादृश उपाय इति यावत् । अकर्तरीति सूत्रीयकाशिकामञ्जर्याद्यनुसृत्य समर्थसमासज्ञापकत्वमुपपादयति । अत्र हि संज्ञायामित्यादिना प्राप्त इति प्रास्यन्ति तमिति प्रासः असु क्षेपणे एवमाहरन्ति तस्माद्रसमित्याहार आदिपदेन प्रसीव्यन्ति तमिति प्रसेव इत्यादेर्ग्रहणम् । अतर्करीत्ययं प्रसज्यप्रतिषेध इत्याह **स च कर्तरीति** । तमेव स्पष्टयति **कर्तरीति** । कर्तरिनिषेधप्रयोजनमाशङ्कते **किमिति** । परिहरति **मिषतीति** । ननु मेष इत्यत्रापि घञो न प्रसक्तिः । तथा सति घञादिप्रत्ययान्तरव्यावृत्त्यर्थतया पचादिषु पाठोऽनर्थकः स्यादिति चेन्न । इगुपधज्ञाप्रीकिरः क इति सूत्रे देवसेवमेषादयः पचादिषु द्रष्टव्या इति काशिकायामुक्तत्वेन प्रत्ययान्तरव्यावृत्तिप्रयोजनकपचादिपाठस्य सद्भावे तस्य वक्तव्यत्वोत्त्यप्रयोगात् तत्र पाठाभावेन तद्विरोधाभावात् अथवा अस्य प्रत्युदाहरणत्वासम्भवेऽपि प्रत्युदाहरणान्तरमेव भविष्यतीत्याशयेनोक्तं **इत्यादाविति** । आदिपदेन बिभर्तीति भर्तेत्यस्य मञ्जर्युक्तस्य ग्रहणम् । तत्र तु अपवादाभावेन घञि सति भार इति रूपप्रसक्तेर्युक्तं प्रत्युदाहरणत्वमित्याशयः । अतद्गुणसंविज्ञानो बहुव्रीहिरिति तु न मेष इति उत्तरोपपादनायोगप्रसङ्गात् । उक्तं च मञ्जर्यां अथवा प्रत्युदाहरणदिगियं दर्शिता । इदं तु प्रत्युदाहरणं बिभर्त सौभर्ततीति ज्ञेयम् । अत्र क्वचित्पुस्तके तथा सति हिमिर्षा इति प्रसङ्गादिति वाक्यं तत्र मिष इति पाठः । मैष इति लेखकागतः । मिष इति प्रसङ्गादिति पचादिषु पाठस्य पचाद्यजपवादकतया प्राप्ततृजादिप्रत्ययान्तरव्यावृत्त्या पुनः पचाद्यजेवेत्येतदर्थकतायाः इगुपधज्ञेति सूत्रे मञ्जर्यामुक्तेरत्र तु तत्पाठे न घञः





प्राप्तस्याप्यङ्गीकारायोगः । तथाविधत्वं पचादिपाठेनाङ्गीकृत्य वा पाठमेव वाऽनङ्गीकृत्य घञ्प्रसक्त्यङ्गीकारे तु परत्वात् पचाद्यजपवादेनेगुपधेति विहितः कप्रत्यय एव स्यात् । तथा च क्षिपः लिखः बुध इत्यादिवद्गुणप्रसङ्गे मिष इति प्रसङ्गात् अत एव देव इत्यादौ दीव्यतेरिगुपधेति कः प्राप्त इति तदपवादेन पचाद्यजिति नवीनेनोक्तम् । तथा च मिष इति रूपापत्त्या पचादिषु पाठः तस्यापवादान्तराविषयत्वप्रयोजनकत्वं चाङ्गीकृत्य घञः प्रसङ्गस्य अनिष्टत्वमाश्रित्य तत्परिहारायाकर्तरीत्यवश्यं वाच्यमित्याशय इत्याहुः । वस्तुतस्तु मेष इत्यत्राद्युदात्तत्व-प्रसङ्गादित्येव पाठः । अभित्यं मेषं माषो ..... इत्यादिः प्रथमचतुर्थादौ वेदे मेषशब्दस्य पचाद्यजन्तस्य चित इत्यनेनान्तोदात्ततैवोपलभ्यते । कर्षः दायः पाकः इत्यादौ घञन्तेऽप्यन्तोदात्तता तु कर्षत्वतो घञोऽन्त उदात्त इत्यादिसूत्रेण कर्षतेराकारवतश्च घञन्तस्यान्तः उदात्त इत्याद्यर्थकेन ञित्यादिर्नित्यमित्यस्यापवादेनान्तोदात्तता-विधानाद्युक्ता । अत एव घञ्पक्षपचाद्यज्यक्षयोरूपा विशेषा तन्निराकरणायोग इत्यपि न शङ्कनीयं स्वरे विशेष-सद्भावादिति तु मम भाति । एतेन घञि मेष इत्यापत्तावपि मैष इति वा मिष इति वा कथमायातीति शङ्का गर्भस्रावेणैव गतेति ज्ञेयम् । मेष इत्यत्र घञिति मिषतीत्युक्तस्य कर्तृतया तद्भिन्नत्वाभावादित्याशयः । नञिव युक्तेति नञिव युक्तं तद्भिन्ने तत्सदृशे वर्तते तथा ह्यर्थगतिरिति निपात एका जना ञित्यादिसूत्रेषूक्तपरिभाषान्यायेन इत्यर्थः । अन्या ञित्यादि नञ्युक्तं तत्र तस्येवेत्यादिव युक्तं लोके त्वब्राह्मणमिवेत्यादिकं ब्राह्मणमित्यादिकं च क्रमेणोदाहरणम् । तथा चोक्तोभययुक्तं शब्दस्वरूपं स्वस्मादन्यस्मिन् सदृशाधिकरणे सदृशाभिधेये वाच्यता-सम्बन्धेन वर्तते हि यस्माल्लोके तथा तादृशी अर्थप्रतीतिरस्तीति लोकन्यायसिद्धेयं परिभाषेति दर्शितं भवति । तदेतन्मनसि कृत्वाह कर्तुरस्मिन्नित्यादि स्वार्थ एवेति धात्वर्थ एवेत्यर्थः । **पूर्वेणेति** । भाव इति पूर्वसूत्रेणेत्यर्थः । **सिद्धाख्ये धर्म इति** । द्रव्यधर्मलिङ्गसङ्ख्याकारकादिरूप इत्यर्थः । **साध्यरूप इति** । क्रियारूपमित्यर्थः । धात्वर्थश्च धातुनोच्यते यस्तत्र सिद्धता (?) नाधर्मस्तत्र घञादयो भवन्तीत्येतत् भाव इति पूर्वसूत्रीयकाशिकावाक्य-व्याख्यावसरे मञ्जर्यां तथा व्याख्यानात् । तत्रैवोक्तं च आख्यातशब्दे भागाभ्यां साध्यसाधनवार्तिता प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः साध्यत्वेन क्रियाधातुरूपनिबन्धना स त्वभागस्तु यस्तस्यास्स घञादिनिबन्धन इति समन्ति(?)कथनाच्चेति ज्ञेयम् । **असूर्यंपश्या इत्यादि** । अत्र दृशिना नञ्सम्बन्धात्सूर्यं न पश्यन्तीत्यसूर्यं-पश्या इति काशिकोक्तेरन्यत्रापि तदुपपादनानुसारेण च नञा दर्शनक्रियैव निषिध्यते न सूर्य एव । एवं नाम गुप्ता राजदाराः यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति किं पुनः पुरुषमिति राजदाराणामत्यन्तगुप्तत्वप्रतिपादनेऽस्य तात्पर्येण क्रियानिषेधादेरावश्यकत्वात् । एवमश्राद्धेत्यत्रापि नञा न श्राद्धमेव निषिध्यते किन्तु श्राद्धं न भुङ्क्ते इति श्राद्धभोजनक्रियैवं यदयं रागतः प्राप्तमपि श्राद्धभोजनं परित्यजतीति भोजनत्यागिप्रशंसाद्यर्थे तात्पर्यात् कर्म-ण्यणित्येतत्सूत्रीयभाष्ये तु पर्युदासमाश्रित्य विचारः **किमित्यादि** । तथा हि अश्राद्धपदेन हि श्राद्धान्य-न्माङ्गलिकभोजनमुच्यते । यदि ह्ययं श्राद्धान्यभोजी न तदास्य व्रतलोपः स्यात् तदेतत्कैयटाद्यवलोकेन सुबोधं तद्वर्णकान्तरमिति न दोष इति ज्ञेयम् । सुडनपुंसकस्येति सूत्रीयभाष्ये नञः प्रसज्यप्रतिषेधार्थतामाश्रित्यासमर्थ-समासे एतदेव ज्ञापकमित्युक्ता तेनासूर्यंपश्याः अश्राद्धभोजीत्युपपन्नमित्युक्तं तदप्यवलोकनीयम् । अन्यत्वमपि त ....... यद्यपि असूर्यललाटयोर्दृशितयोरिति सूत्रीयासूर्यंपश्या इत्युदाहरणे उक्तसूत्रेण दृशेः खशि खिदन्ते





तस्मिन्नुत्तरपदे अरुर्द्विषदजन्तस्य मुमित्यनेनासूर्यपदान्मुमि सति चासूर्यंपश्या इति भवति । तथा च तदुदाहरणे असमर्थसमास इति तज्ज्ञापकादन्यत्राप्यसमर्थसमास इति च तत्सूत्रे प्रतिपादनानुसारेणात्र स्वतन्त्रज्ञापकतयैव तत्सूत्रीयोदाहरणमप्युदाहर्तव्यम् । तथाप्यकर्तरीति मूलोक्तैकज्ञापकादेवाशेषप्रयोगनिवहि किं ज्ञापकान्तराश्रयणेने-त्याशयेनोक्तोदाहरणान्तरस्याप्यकर्तरीत्येतत्सूत्रनिर्देशज्ञापकादसमर्थसमास इत्यत्र अश्राद्धभोजीत्येतत्समकक्षतयै-वोदाहरणमिति न दोषः । मूलं उक्तलक्षणया व्याख्येयमित्याशयेन ज्ञापकान्तरतयापि तत्प्रयोगस्यात्रोदाहरणं सम्मतमित्यप्याहुः । एवं नञ्क्रियायोगे समर्थसमासाश्रयणं प्रसज्यतेऽतो घट इत्यादौ घटो न भवतीत्यघट इत्यादि प्रमादतोऽपि न वाच्यमिति ध्वनितम् । उत्तरपदार्थप्राधान्यादिविचारस्तु नञ्सूत्रे रमादौ ज्ञेयः । युक्तिपादे विरोधोऽत्र साध्यत इत्यत्रत्याविरोधपदविचाराबसरे टीकादौ च ज्ञेयः । अपञ्चम्या इतीममंशमज्ञात्वा चन्द्रिकानुसारेण शङ्कते **न चाव्ययादिति** । तमंशं शङ्कितारं रयति **तत्रैवेति** । मूले भाष्योक्तव्याख्यानमाक्षिप्य तत्र छन्दोवदित्यादिनैकं परिहारमभिधाय अथवेत्यादिना परिहारान्तरं कथितम् । तदुभयं न बहिरेव नाप्युत्तरो-त्तरानुव्याख्यानसूचितं किन्तु प्रथमं बहिरेवावधेयं द्वितीयं तु अनुव्याख्यासूचितमितीममर्थं दर्शयितुं विवेके-नाथवेति वाक्यमवतारयति । क्वचिद्वेति दर्शनादेवं प्रतिपादनम् । **एवं भाष्येति** । अथवेतीति पाठः । **यद्यप्यखण्डशक्त्येति** । एतच्च बहुलातिप्रयोगतः रूढिमित्येवेत्यानन्दमयनयानुव्याख्यानमूलटीकायां स्पष्टं इति यावयवार्थव्यावर्तकमात्रपदघटिता रूढिस्तदसम्भवेति योज्यम् । कुतस्तदसम्भव इत्यतस्तत्र हेतुं कथयन्नेव विशिष्टवाक्यार्थमाह **अनवधिकेति** । इदं च सप्तम्यन्तं विशेषणमाह **योगेत्यादि** । प्रतिज्ञाद्वयेऽपि साधकं अदर्शनाच्चेति वैय्यर्थ्यमिति पूर्वेणान्वयः । **अननुष्ठानात्प्रसक्तेति** । क्वचिदनुष्ठानेऽपि सर्वत्र तदनुष्ठानादित्यर्थः ॥

**स०व्र०— असामर्थ्येन समासेति** । नञः प्रसज्यप्रतिषेधार्थत्वे नञर्थस्य तच्छब्दरूपप्रतियोग्यन्विततया अस्तीत्यादिक्रियापदान्वितत्वेऽपि साक्षात्प्रतियोग्यन्वितत्वाभावेनासमर्थतया न तद्वाचकपदेन समासः सम्भवतीति भावः । टिप्पण्यां तु तच्छब्दपरित्यागेन अन्येन नञ्सम्बन्धो भवतीत्यर्थः । **तत्रेति** । **छन्दोवदिति** । नैव वैशेषिकादिसूत्राणि, अपि तु वेदाङ्गभूतान्येव । वेदाङ्गत्वं च ब्रह्मसूत्राणां तदर्थनिर्णायकत्वादिति द्रष्टव्यम् । **अकर्तरि च कारक इतीति** । कर्तृवर्जिते अन्यस्मिन्कारके संज्ञायां विषये धातोर्घञ्प्रत्ययो भवतीति सूत्रार्थः । प्रास्यतीति प्रास इत्युदाहरणम् । स च कर्तरि कारके निषिध्यते । मिषत्यसौ मेष इत्यत्र मा भूदिति । अत्र चाकर्तरीति पर्युदासाश्रयणे सामर्थ्यलब्धत्वात् कारकग्रहणमनर्थकं स्यात् । तदनर्थकं क्रियमाणं असूर्यंपश्या राजदारा अश्राद्धभोजी विप्र इत्यादिषु प्रसज्यप्रतिषेधेनासमर्थेनापि समासोऽस्तीति ज्ञापनार्थम्, इति काशिकादावुक्त-त्वादिति भावः । **असामर्थ्येऽपि क्वचिदिति** । प्रसज्यप्रतिषेधार्थकनञ् इति शेषः । **अर्थाभावे यदव्ययमिति** । अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाक-ल्यान्तवचनेषु । एतेष्वर्थेषु वर्तमानं यदव्ययं तत् समर्थेन सुबन्तेन सह समस्यते, स समासः अव्ययीभावसंज्ञो भवतीति सूत्रार्थः । तत्रार्थाभावे यदव्ययमित्येकदेशोत्कीर्तनमेव कृतं तावन्मात्रस्यैव प्रकृतोपयोगादिति ध्येयम् । अत्राव्ययीभावत्वेऽप्यमादेशो न भवति । अपञ्चम्या इति विशेषणादित्याशयः । यद्यपि नञः प्रधानक्रियान्वयेन





प्रसज्यप्रतिषेध एव न्याय्यः । अथाप्यनुपपत्तेरप्रधानप्रातिपदिकान्वयेन पर्युदास आश्रयणीय एव । यथा नेक्षेतो-द्यन्तमादित्यमित्यत्र व्रतप्रकरणसामर्थ्यात् नञः पर्युदासोऽर्थ इत्यभिप्रायः । **अनेकार्थत्वे तच्छब्द इति** । तस्य विष्णोर्वाचकः शब्द आत्मशब्द इत्यर्थः । अथवा यः शब्दो बोधकत्वेनोच्यते तस्येति शेषः । तच्छब्दो बोधकत्वेनोक्तः शब्द इत्यर्थः । स चासौ शब्द इति विग्रहः ।

**विठ्ठल०**— विष्णावेवेत्युत्तरमूले अतच्छब्दादित्यत्र समासानुपपत्तिपरिहारायार्थान्तरकथने भाष्योक्तार्थस्य दुर्घटत्वमेवेति भ्रमः स्यात् । अतः तन्निरासाय प्रस्तावपूर्वकमनुपपत्तिं प्रदर्शयन् समाधानमाह **अत्रेत्यादिना** । **असामर्थ्येति** । नञोऽर्थद्वयं संभवति । नास्त्यत्र घट इत्यादौ प्रसज्यप्रतिषेधार्थकत्वं पटादन्यो घट इत्यादौ पर्युदासार्थकत्वं चेति तत्राद्यं क्रियासापेक्षं 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञि'ति वचनात् तथा चातच्छब्दादित्यत्र नञः प्रसज्यप्रतिषेधार्थकत्वे क्रियासापेक्षतया तच्छब्दोऽत्र नास्ति यत इति वाक्यमेव स्यान्न तु समासः । क्रियान्वितत्वेन तत्सापेक्षस्य तस्योत्तरपदेन तच्छब्देन साकाङ्क्षत्वरूपसामर्थ्यविरहात् नञिति सूत्रेण नञ्पदं समर्थं समर्थेनोत्तरपदेन समस्यत इत्युक्तत्वेनात्रासामर्थ्येन समासानुपपत्तेरिति भावः । **छन्दोवदिति** । दृष्टानुविधिछन्दसीति छन्दोविषये असामर्थ्येऽपि नञः समासोक्तेः छन्दोवत्सूत्राणि भवन्तीति महाभाष्येऽभिहितत्वादसामर्थ्येऽपि समासोपपत्तिरित्यर्थः । **अकर्तरीति** । अकर्तरि च कारके संज्ञायां कर्तृवर्जितेऽन्यस्मिन्कारके संज्ञायां च विषये घञ्प्रत्ययः स्यादिति सूत्रार्थः । अत्र अकर्तरीति नञर्थः प्रसज्यप्रतिषेधः पर्युदासो वेति विचारे न पर्युदासः तथात्वे कर्तुरन्यस्मिन्नकर्तरीति अकर्तृपदेनैव योग्यतया कर्तृभिन्नसदृशकारकस्यैव ग्रहणसंभवेन कारकपदवैय्यर्थ्यात् । अतः अकर्तरीत्यत्र प्रसज्यप्रतिषेधार्थतया क्रिया-सापेक्षत्वेनासामर्थ्येऽपि समासदर्शनेन क्वचिदसामर्थ्येऽपि समासो भवतीति ज्ञायते । अत एवैतत्सूत्रव्याख्याने काशिकायां असूर्यंपश्या राजदाराः अश्राद्धभोजी विप्र इत्यादिषु प्रसज्यप्रतिषेधेनासामर्थ्येऽपि समासोऽस्ति इति ज्ञापनार्थमित्युक्तम् । तथा च तद्वदत्राप्यसामर्थ्येऽपि सोपपत्तिरिति भावः । **अर्थाभाव इति** । अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावा यया संप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु एतेष्वर्थेषु वर्तमानेषु यदव्ययं तदुत्तरपदेन समस्यते । समासोऽव्ययीभावसंज्ञो भवतीति सूत्रार्थः । अर्थाभावे यदव्ययमित्येकदेशसङ्कीर्तनमेव कृतम् । तावन्मात्रस्यैव प्रकृतोपयोगादिति ध्येयम् । तथा चात्र तच्छब्दाभावो तच्छब्दमित्यर्थकस्य नञः विवादस्याभावो अविवादमित्यादिवदुत्तरपदेनाव्ययीभावसमासः संभवतीति भावः । अव्ययीभावादतो पञ्चम्या इत्युक्तामभावस्तु अपञ्चम्या इत्युक्तत्वादिति ज्ञेयम् । एवं प्रसज्यप्रतिषेधार्थतया भाष्ये व्याख्यातत्वात्तदनुसारेण समाधानमभिधाय पर्युदासार्थत्वमङ्गीकृत्यापि व्याकुर्वन् मूलमवतारयति **अथवेति** । अस्मिन् व्याख्याने स्वशब्दादित्यनेनैव अस्यार्थस्य लाभादतच्छब्दादित्यस्य वैयर्थ्यमित्यतः प्रयोजनविशेष-सद्भावान्न दोष इत्याशयेन प्रयोजनोक्तिपरतया व्याख्याति **अथवेति** । ब्रह्मपरामर्श इति पूर्वसूत्रे साध्य-समर्पकत्वेन समन्वयसूत्रादनुवृत्ततत्पदनिर्दिष्टब्रह्मपरामर्श इत्यर्थः । **अनेकार्थत्व इति** । आत्मशब्दस्येति योज्यम् । **तच्छब्दः** तस्य वाचकः शब्दः आत्मशब्द इति यावत् । अन्यार्थोऽपि भवति न तु विष्णुनिर्धारक इति भावः ।





**प्रयुक्तमिति** । तेभ्यः शिवादिभ्योऽन्यदेतत् ब्रह्म तद्वाचकशब्दादित्युक्ते आत्मशब्दस्य ब्रह्ममात्रा असाधारण-शब्दत्वलाभादिति भावः ।

**चषकः— असामर्थ्येनेति** । नञः प्रसज्यप्रतिषेधार्थरूपाभावार्थत्वे क्रियामुख्यविशेष्यकान्वय-बोधोपगन्तॄणां पाणिनीयानां मते 'प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञि'ति वचनात् तच्छब्दोऽत्र नास्तीति तच्छब्दकर्तृका वर्तमानकालीना भवनक्रिया अभावप्रतियोगिनीति शाब्दबोधौपयिकविन्यासेनैव भवितव्यतया समासानुपपत्तेः । समर्थः पदविधिरिति समासाघटकपदार्थानन्वितस्वार्थप्रत्यायकत्वरूपसामर्थ्ये सत्येव समास-विधानात् । शरैः शातितपत्रः चैत्रस्य दासभार्येत्यादौ तु 'प्रतियोगिपदादन्यद् यदन्यत्कारकादपि । वृत्तिशब्दैक-देशेन न तस्यान्वय इष्यत' इति वचनात्पदमञ्जर्यां कथं देवदत्तस्य गुरूकुलमित्याशङ्क्य नात्र गुरुणा देवदत्तस्य सम्बन्धः । किन्तु गुरुद्वारकः कुलेन सम्बन्ध इत्यर्थाद्गुरुणापि योगो भवतीति हरदत्तोक्तेर्वा सामञ्जस्यं द्रष्टव्यम् । 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न सापेक्षमसमर्थमि'त्यादिवचनादिति भावः । छान्दसत्वाश्रयण-मनन्यगतिकमित्यरुचेः कल्पान्तरमनुसरति **अकर्तरीति** । प्रास्यन्त्येनेन प्रास इत्याद्युदाहरणानुरोधेन संज्ञायां विषये धातोर्घञ् विहितः । स च मिषत्यसौ मेष इत्यादिवारणाय कर्तरि कारके निषिध्यते । पर्युदासाश्रयणे नञिव युक्तन्यायेन अकर्तरि = कर्तृभिन्ने तत्सदृशे कारक एव भवतीति प्राप्त्या कारकग्रहणमनर्थकमापद्येत । प्रसज्य-प्रतिषेधे तु संज्ञायां घञ् भवति कर्तरि न भवतीति वाक्यभेदोपगत्याऽर्थः सम्पद्यते । तत्र प्रथमवाक्येऽर्थनिर्देशा-भावेन तद्विशेषजिज्ञासापूरणाय कर्तव्यमेव कारकग्रहणम् । तच्च क्रियमाणं प्रसज्यप्रतिषेधेऽसामर्थ्येऽपि समासो भवतीति ज्ञापयति । तेन असूर्यंपश्या राजदारा अश्राद्धभोजी ब्राह्मण इत्यादयः प्रसज्यप्रतिषेधार्थकनञ्समासाः सङ्गच्छन्त इति, तद्वत्प्रकृतेऽपि तदर्थकनञ्समासः सङ्गच्छत एवेति भावः । अत्रापि प्रतिपत्तिगौरवमनुसन्दधानः कल्पान्तरमनुधावति **अर्थाभाव इति** । अव्ययं विभक्तीति योगे अर्थाभावे यदव्ययं तस्य समर्थेन सुबन्तेन सह समासविधानात्, मक्षिकाणामभावो निर्मक्षिकमित्यादाविव तच्छब्दस्याभावोऽतच्छब्दमित्यर्थाभावे यदव्ययमि-त्यव्ययीभाव एव समासोऽस्त्वित्यर्थः । अव्ययादाप् इति विहितसुब्लोपापवादकस्य अम्भावस्य विधायके 'नाव्ययीभावादि'ति सूत्रे अपञ्चम्या इत्युक्त्या प्रकृते न पञ्चम्या अम्भावापत्तिरिति ध्येयम् ।

**।। इति एतदधिकरणे अभ्यधिका शङ्का, तन्निरासश्च ।।**

**(।। इति आत्मशब्दस्य विष्णावेव प्रसिद्धत्वात् श्रुतिः जगज्जन्मादिकर्तृत्वेन शिवादिकान् न वक्ति ।।)**

## ।। इति द्युभ्वाद्यधिकरणम् ।।

**।। १-३-१ ।।**

* * *



## ॥ अथ भूमाधिकरणम् ॥

## ॥ १-३-२ ॥

## ॥ ॐ भूमासम्प्रसादादध्युपदेशात् ॐ ॥

**॥ अथ एतदधिकरणे अभ्यधिका शङ्का, तन्निरासश्च ॥**

३ **सु०—** इदं कश्चिद्व्याख्याति । भूमा = परमात्मा । कुतः । संप्रसीदत्यत्रेति संप्रसादः = सुप्तिः । तत्र जाग्रत्प्राणः सम्प्रसादशब्देन लक्ष्यते । तस्मादूर्ध्वमुपदेशादिति । अपर आह— 'संप्रसादो = जीवात्मा । तस्मादूर्ध्वमुपदेशादिति ॥ तदुभयमप्यसत्, प्रसिद्धप्राणादिपदपरित्यागेनाप्रसिद्धसम्प्रसादपदोपादाने कारणाभावात्, अतोऽध्युपदेशादित्येव हेतुः । ननु कथं तस्य परमात्मत्वसाधकता, अन्यत्रापि सम्भवादित्यतो व्याख्याति— **अखिलेशत्वादिति ।**

**अनु०—** **अखिलेशत्वाद्भूमा विष्णुः सुखाधिकः ॥**

**अधिशब्दो हीश्वरवाची । तथा च विशेषानुक्तेरखिलेशत्वमेवोक्तं भवति । न च एतद् असिद्धम् । नामवागादीनां पूर्वपूर्वाधिपत्यस्योक्तत्वादिति ।**

**ननु तर्हि सम्प्रसादादित्येतदनाकाङ्क्षितत्वात् व्यर्थमापन्नमिति चेन्न, हेत्वन्तराभिधायकत्वादित्याशयेन व्याचष्टे— सुखाधिक इति । प्रसीदत्य(न्त्य)नेनेति प्रसादः सुखम्, सम्यक् प्रसादः सम्प्रसादः । गुणगुणिभावाभ्युपगमेन सुखाधिक इति तात्पर्यार्थोऽभिहितः । य(स्मात्तस्मा)तस्तस्मादिति शेषः ॥**

**परि०—** **कश्चिदिति** । रामानुजः । **अपरो** मायावादी । **प्रसीदत्यनेनेति** । प्रपूर्वात् 'षद्ऌविशरणगत्यवसादनेष्वि'त्यतो 'अकर्तरि च कारक' इति करणे घञिति भावः । प्रसिद्धसुखपदत्यागेन यौगिकसम्प्रसादपदोक्तिकृत्यं चन्द्रिकायां व्यक्तम् । सुखाधिक इत्यस्य हेतुत्वलाभाय पदद्वयमध्याहरति **(यतस्तस्मा)यस्मात्तस्मादिति** ।





**गु०दी०— अधिशब्दो हीश्वरवाची** इत्यत्र अधि अधिकत्ववानिति व्युत्पत्त्या ईश्वरवाचीत्यर्थः । **प्रसादः सुखम्** इति । ननु तर्हि भवतामपि प्रसिद्धसुखपदपरित्यागेन अप्रसिद्धप्रसादपदप्रक्षेपे किं बीजमिति चेत् भगवत्सुखं न लोकसुखसदृशं किन्तु सुखोद्रेकाज्जगत्सृष्ट्यादौ प्रवर्तमानस्य तस्य जगति प्रसादहेतुतां च सुखस्य सूचयितुमित्यभिप्रायसम्भवात् । तादृशमेव हि भूमत्वोपयोगीति सूत्रकृतो हृदयम् ।

**यादु०— इदं कश्चिदिति** । सङ्कर इत्यर्थः । **अपरो** रामानुजः । **अन्यत्रापीति** । नामाद्यपेक्षया वागादेरप्यूर्ध्वमुपदेशसद्भावादित्यर्थः । **ईश्वरवाचीति** । अधिरीश्वर इति ज्ञापकादिति भावः । **पूर्वपूर्वेति** । तथा च प्रायपाठाद्भूम्नोऽपि अखिलाधिपप्राणाधिपत्येऽखिलेशत्वमेव सिद्ध्यतीति भावः । **अनाकाङ्क्षितत्वादिति** । अधीत्यस्य ऊर्ध्वार्थत्वं परित्यज्य ईश्वरार्थत्वाङ्गीकारेऽवध्यनपेक्षणादिति भावः । **प्रसीदत्यनेनेति** । न च भवन्मतेऽपि प्रसिद्धसुखादिपदपरित्यागेनाप्रसिद्धसम्प्रसादपदोपादाने कारणाभावः । ईश्वरस्य सुखं चेत् दुःखमपि स्यादिति नाशङ्क्यम् । पूर्णानन्दकार्येण सम्यक् प्रसादेन दुःखाभावनिश्चयादिति ज्ञापनार्थत्वात् ।

**वं०प०— जाग्रदिति** । लक्षणाबीजसम्बन्धप्रदर्शनाय । **अन्यत्रापीति** । अध्युपदेशादित्यस्य हेतोः 'प्राणो वा आशाया भूयान्' इत्याद्युक्तरीत्या प्राणादावपि सम्भवादिति भावः । **पूर्वेति** । पूर्वापेक्षयोत्तरस्येत्यर्थः । **गुणगुणीति** । विशेषबलादित्यर्थः ।

**आनन्दः**— अत्र यो वै भूमेति वाक्यमुदाहृत्यात्रोक्तो भूमा विष्णुर्वा मुख्यप्राणो वेति सन्दिह्यमानाद्यांशावसानतारतम्यमुक्त्वा प्राणस्य भूयस्त्वमभिधाय तदुत्तममन्यदनुक्त्वा भूम्नं आम्नानात् मुख्यप्राण एवायमिति प्राप्ते विष्णुरेवायम् । भूमाः भूम्नः पूर्णसुखरूपाभिधानतन्नामादीनामुपरि सर्वोत्तमत्वेनोपदेशाच्चेति सिद्धान्तितम् । तत्र परकृतापव्याख्यां परित्यज्य किमित्येवं व्याख्यायत इत्यतः परकृतापव्याख्यां प्रत्याख्यातुमनुवदति **इदमिति** । **तत्र जाग्रदिति** । सुप्तौ जाग्रद्रूपेणावस्थानशक्यसम्बन्ध इति भावः । **प्रसिद्धेति** । सूत्रं चैवं लघु स्यादिति भावः । **अधिशब्द इति** । अधीश्वर इति पाणिनीयस्मरणादिति भावः । **नामवागादीनामिति** । उत्तरेषां पूर्वाधिपत्यस्योक्तत्वान्नासिद्धिरिति भावः ।

**कं०रा०— तस्मादूर्ध्वमिति** । प्राणो वा आशाया भूयानित्युक्तप्राणादुपरि यो वै भूमेति भूम्न आम्नातत्वात्प्राणादूर्ध्वं भूम्न उपदेशोऽस्तीति भावः । **सम्प्रसाद इति** । एष सम्प्रसादोऽस्माच्छरीरात्समुत्थायेति श्रुतौ सम्प्रसादशब्दस्य जीवे प्रयोगात्सम्प्रसादशब्दितो जीवात्मेति भावः । अस्मिन्पक्षे प्राणो वा आशाया भूयानित्यत्र श्रुतः प्राणशब्दो जीवपर इति द्रष्टव्यम् । **प्रसिद्धेति** । प्रसिद्धप्राणजीवपदत्यागेत्यर्थः । **नामेति** । वाग्वाव नाम्नो भूयसीत्यादिना वागादीनां नामाद्याधिपत्यस्योक्तत्वात् सर्वस्मादुपर्युपदिष्टस्य भूम्नोऽखिलेशत्वं सिद्ध्यतीति भावः । **हेत्वन्तरेति** । पूर्णसुखत्वरूपहेत्वन्तराभिधायकत्वादित्यर्थः ॥





**श्रीनिधि०— अधिशब्दो हीश्वरवाचीति**। अधिरीश्वर इति हि पाणिनिः। **अतोऽध्युपदेशात् इत्येव हेतुरिति**। स्वतन्त्रहेतुरयं न तु सम्प्रसादात् अध्युपदेशात् इति विशिष्टहेतुरित्यर्थः। अन्यस्य हेतुत्वनिषेधे उत्तरग्रन्थविरोधापत्तेः।

**शे०वा०— कश्चिदिति**। सङ्कर इत्यर्थः। सम्प्रसादशब्देन प्राणलक्षणायां हेतुभूतं सम्प्रसादशब्द-मुख्यार्थसम्बन्धं प्राणस्योपपादयितुं तच्छब्दमुख्यार्थं तावदाह **सम्प्रसादः सुप्तिरिति**। सम्प्रसादशब्दस्य सुप्तावरूढत्वात् कथं तस्याः सम्प्रसादशब्दार्थत्वमित्यतो योगेनेति भावेन तमाह **सम्प्रसीदतीति**। तत्र जाग्रदिति शक्यसम्बन्धकथनम्। एवं सम्प्रसादशब्दस्य प्राणे लक्षणामुपपाद्य सम्प्रसादादध्युपदेशादिति हेतुं व्याचष्टे **तस्मादिति**। प्राणादूर्ध्वमुपदेशादित्यर्थः। **अपर इति**। रामानुज इत्यर्थः। **सम्प्रसादो जीवात्मेति**। 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रुतेः सम्प्रसादो जीवात्मे-त्यर्थः। प्रसिद्धप्राणादीत्यादिपदेन जीवसङ्ग्रहः। तथा सति प्राणादूर्ध्वमुपदेशादिति वा, जीवादध्युपदेशादिति वा, वक्तव्यतया सम्प्रसादादिति लाक्षणिकपदप्रयोगोऽयुक्त इति भावः। उपलक्षणं चैतत्। प्राणादूर्ध्वमुपदेशस्यानन्द-मयप्रकरणे मनोमयादिषु भूमप्रकरणे च विज्ञानमतिश्रद्धादिषु च सत्त्वात्। मनोमयादीनां विज्ञानादीनां च तन्मतेऽब्रह्मत्वात्। तत्र व्यभिचारादित्यपि द्रष्टव्यम्। **अन्यत्रापीति**। नामादीश्वरत्वेन वागादेरुपदेशेऽपि ब्रह्मत्वा-भावेन व्यभिचारित्वादिति भावः। अध्युपदेशादिति सौत्रपदात्कथमीशत्वस्य लाभ इत्यत आह **अधिशब्दो हीति**। अधिरीश्वर इति पाणिनिस्मृतेरिति भावः। अस्त्वीश्वरत्वलाभस्तथाऽपीशत्वोपदेशत्वादित्येव वक्तव्यम्। अखिलत्वसमर्पकशब्दाश्रवणादित्यत आह **तथा चेति**। भूमनिष्ठतयाऽखिलेशत्वस्य श्रुतावश्रुतत्वाद्धेत्वसिद्धि-रित्याशङ्क्य निराकरोति **न चेति**। **पूर्वपूर्वेति**। तथा च प्रायपाठात् भूम्नोऽप्यखिलाधिपप्राणाधिपत्यलाभा-दखिलेशत्वसिद्धिरिति भावः। **अनाकाङ्क्षितत्वादिति**। अधीत्यस्योर्ध्वार्थत्वे तदपेक्षितावधिनिरूपकतया सम्प्र-सादादित्यस्य सार्थक्यसम्भवेऽपि तत्परित्यागेनाधीत्यस्येश्वरार्थत्वाङ्गीकारे तस्यावधिनिरूप्यतया तदनपेक्षणात् सम्प्रसादादित्यनर्थकमापन्नमित्यर्थः। **हेत्वन्तरेति**। धर्मोपपत्तेश्चेत्युत्तरसूत्रस्थचशब्दानुषङ्गेण भूम्नोऽत्र ब्रह्मत्व-पूर्णसुखत्वरूपहेत्वन्तराभिधायकत्वान्न वैयर्थ्यप्रसङ्ग इत्यर्थः। सम्प्रसादशब्दस्य सुखे रूढ्यभावेऽपि योग-सम्भवात् युक्तं तेन सुखग्रहणमित्याह **प्रसीदत्यनेनेति**। न च भवन्मतेऽपि प्रसिद्धसुखपदपरित्यागेनाप्रसिद्ध-सम्प्रसादपदोपादाने कारणाभाव इति वाच्यम्। ईश्वरस्य सुखं चेद् दुःखमपि स्यादिति नाशङ्क्यम्। पूर्णानन्द-कार्येण सम्यक् प्रसादेन दुःखाभावनिश्चयादिति ज्ञापनार्थत्वात्। तर्हि पूर्णसुखत्वादिति व्याख्यातव्यं तत्कथं सुखाधिक इति व्याख्यानमित्यत आह **गुणगुणिभावाभ्युपगमेनेति**। अखिलेशत्वस्येव सुखाधिकत्वस्य भाष्ये हेतुत्वगमकं न किञ्चिदस्तीत्यतः शेषं सम्पूरयति **यतस्तस्मादितीति**।

**वा०र०—** आनन्दमयगिर्यनुसारेण भाष्यानुवादरूपमङ्गलं व्याख्याति **सम्प्रसादशब्देनेत्यादिना**। **शब्दमुख्यार्थेति**। मुख्यार्थेन सम्बन्धं तच्छब्दः प्रसादशब्दः जीवसङ्ग्रह इति प्राणादिरूपं पदं प्राणादिरूपं इति





मूले विवक्षितत्वादादिपदेन जीवग्रहणोक्तिः । तथा च प्राणेति पदस्य जीवेति पदस्य चेति सूचितं चन्द्रिकानुसारेणाह **उपलक्षणं चैतदिति । मनोमयादिष्विति** । प्राणमयप्राणयोरैक्यात्प्राणादूर्ध्वमिति युक्तं श्राद्धादिष्वित्यादिपदेन कृतिनिष्ठादीनां ग्रहणम् । विज्ञानं त्वेव विजिज्ञासितव्यं मतिस्त्वेव विजिज्ञासितव्येत्यादिना विज्ञानादीनामुपदेशो द्रष्टव्यः । **अधिरीश्वर इतीति** । ईश्वरे विषयेऽधिः कर्मप्रवचनीयसंज्ञ इति सूत्रार्थः । यद्यपि स्वस्वामिभावसम्बन्ध इति काशिकादावुक्तं तथापीश्वरे विषय इत्यनेनैव स्तब्धमर्थमभिप्रेत्येतत् । तथा हि तत्र प्रतिपादनं अधिशब्दस्तावदीश्वरवाची । ईश्वरत्वं च स्वामित्वं स्वामी च स्वमपेक्षते तदयं स्वस्वामिभावसम्बन्धे कर्मप्रवचनीयसंज्ञो भवन्तीति । तथा यस्मादधिकमिति सूत्रे अधिकार्थे नेश्वरार्थे न च कर्मप्रवचनीयेन युक्ते सप्तमी विहिता तथैव कौमुद्यादौ प्रतिपादनात् । तत्र स्वस्वामिभाववाच्यधिशब्दस्य स्वामित्वमात्रवचनत्वमपीश्वरत्वस्योक्तिरीश्वरवचनमित्यादिना हरदत्तादिभिरुक्तं अर्थादाधिक्यादिकं कर्मप्रवचनीयद्योत्यमित्याशयेनाह **अधिकार्थेनेत्यादीति** । शेष्यामुक्तिरपि स्वामिवाचितामधेरनाक्षिपन्त्यपि स्वामिविषयतामात्रमाक्षिपत्येवेति न विरोधः । उदाहृतं चाधिपाञ्चालेषु ब्रह्मदत्त इति व्याख्यातं च हरदत्तेन पञ्चालानां ब्रह्मदत्तः स्वामीत्यर्थ इति स्वामिवाचिनः स्ववाचिनश्च सप्तम्या यस्य चेश्वरवचनमित्यनेन विधानस्याधिब्रह्मदत्ते पञ्चालाः अधिपञ्चालेषु ब्रह्मदत्तः अधिभुवि रामः अधिरामे भूरित्युभयत्र सप्तमीप्रयोगसद्भावनिमित्तेन व्याख्येयत्वादधेरत्राप्युभयार्थत्वमेव वाच्यमित्याशयेन स्वस्वामिभावसम्बन्धस्य विषयवाचीश्वरशब्देनोपादानं न त्वीश्वरविषयकत्वाभावादत एवेश्वरार्थेनेत्येव कौमुद्यामुक्तमिति सङ्क्षेपः । अरिवशत्वस्य कथं लाभ इति ईश्वरस्य नियम्यरूपस्वापेक्षत्वात् स्वमात्रसिद्ध्या यत्स्वं तदीशत्वसिद्धावपि अखिलं यत्स्वं तदीशत्वं न सेत्स्यति ईश्वरस्य स्वोक्षत्वेऽपि सकलाक्षेपत्वस्यादर्शनात् तदेतदभिप्रेत्यैवोपपादनमखिलसमर्पकशब्दाश्रवणादिति अन्यथाखिलसमर्पकिति भावप्रत्ययहीनमेव वदेत् । अनेन तथा च विशेषेति मूलवाक्यमेवं व्याख्यातं भवति ईशस्य स्वापेक्षत्वेनेश इत्युक्ते यस्त्वं तदीश इत्येतावन्मात्रप्राप्तावपि अखिलत्वसमर्पकाभावादखिलेशत्वात् प्राप्तिरिति चेन्न । यत्र हि किञ्चिदेव स्वपञ्चालादिनिर्देशानुसारेण तावन्मात्रेशत्वलाभेऽपि प्रकृते भगवत्स्वस्य व्यक्तिविशेषरूपेण निर्देशाभावेन सङ्कोचे कारणाभावेन चाखिले त्वप्राप्त्या तदीशत्वमेवोक्तं भवतीति अखिलाधिपप्राणेति अखिलाधिपो यः प्राणास्तदधिपत्यस्येत्यर्थः । **तदपेक्षितेति** । ऊर्ध्वं हि किञ्चिदपेक्षया भवति ऊर्ध्वमित्येवाप्रतीतेः ततश्चास्मादित्यवधिकसापेक्षत्वमित्यर्थः । **निरूपकतयेति** । समर्पकतयेति अर्थः । तत्परित्यागेन ऊर्ध्वार्थत्वपरित्यागेन तस्या ईश्वरत्वस्य हेत्वर्थसमर्पकाभावशङ्कावारणाय व्याचष्टे **धर्मेति** । चन्द्रिकानुसारेणाह **न च भवदिति । पूर्णेति** । पूर्णं यत्सुखं तद्रूपत्वादितीत्यर्थः । **गुणगुणीति** । सुखेनाधिक इत्यधिकसुखवत्वोक्तिः गुणगुणिभावाभ्युपगमेन तदनङ्गीकारे तदाधिक्यवचनायोगेऽपि तदङ्गीकारे तदुपपत्तेरिति आशयः ॥

**विठ्ठल०**— अत्र अध्युपदेशादिति पश्चात्तनपदस्य पूर्वं व्याख्यानं किंनिमित्तमित्यतः परैः सम्प्रसादात् अध्युपदेशादिति पदद्वयेनापि प्राणाद्युत्तमत्वस्य हेतुत्वेनोक्तेस्तस्य द्वितीयपदेनैव प्राप्तत्वात् तद्व्याख्यानमनुपपन्नमिति सूचनार्थत्वादित्याशयेनापव्याख्यानप्रदर्शनपूर्वकमुत्तरमूलमवतारयति **इदमित्यादिना** । **कश्चित्** मायावादी ।





**अपरो** रामानुजः । **अन्यत्रापीति** । नामाद्यपेक्षया वागादेरध्युपदेशसम्भवादिति भावः । सम्प्रसादः सुखमिति प्रसिद्धसुखपदपरित्यागेन सम्प्रसादपदप्रयोगकृत्यं चन्द्रिकायां व्यक्तम् । **न चैतदिति** । प्राणापेक्षया उत्तमस्य अखिलेशत्वमित्यर्थः । **नामवागादीनामिति** । तथा च प्रायपाठात्प्राणादुपर्युपदिष्टस्य भूम्नोऽखिले सत्त्वं सिद्ध्यत्येवेति भावः । ननु सूत्रे सम्प्रसाद इति सुखात्मकत्वेनोक्तत्वात् सुखाधिक इति कथमित्यत आह **गुणगुणिभावेति** । सुखाधिक इत्यस्य हेतुत्वलाभायाह **यतस्तस्मादिति** ।

**चषकः— कश्चित्** सङ्करः । **अपरः** रामानुजः । **अन्यत्रापीति** । नामादितो वागादेरप्यूर्ध्वमुपदेश-सद्भावादित्यर्थः । **ईश्वरवाचीति** । अधिरीश्वर इति ज्ञापकादिति भावः । **पूर्वपूर्वेति** । तथा च भूयः समभिव्याहाराद्भूम्नोऽप्यखिलाधिपतिप्राणाधिपतित्वलाभादखिलेशावमसैत्सीदिति भावः । **अनाकाङ्क्षितत्वादिति** । अधीत्यस्योर्ध्वार्थकतायां तदवधिप्रत्यायकतया सम्प्रसादादित्यस्यार्थवत्ता, ईश्वरार्थकतायां तु तस्य तदनिरू-पितताया तज्जिज्ञासाराहित्येन तत्पूरकमनर्थकमापद्यत इत्यर्थः । **हेत्वन्तरेति** । धर्मोपपत्तेश्चेत्युत्तरसूत्रघटक-चशब्दापकर्षेण भूम्नोऽत्र ब्रह्मत्वे पूर्णसुखत्वात्मकहेत्वन्तरावगमकतया नानर्थक्यं प्रसज्यत इत्यर्थः । सम्प्रसाद-शब्दस्य सुखनिरूपितसमुदायवृत्तिकत्वाभावेऽपि करणसाधनघञन्ततामाश्रित्य व्याचष्टे **प्रसीदन्त्यनेनेति** । उपदेशेजनुनासिक इदिति सूत्रव्याख्यावसरे घञः करणसाधनतायाः भाष्यकैयटयोः समर्थितत्वादिति भावः । अखिलावगतसुखनिरूपितसमुदायवृत्तिकसुखादिपदानुपादानेन, एतादृशप्रसादपदोपादानं निर्बीजमिति शङ्का तु दुःखाभावरूपकारणानुमापकपूर्णानन्दरूपकार्यलक्षणहेतुप्रत्यायनफलकतया निरसनीया ।

**॥ अथ एतदधिकरणे अभ्यधिका शङ्का, तन्निरासश्च ॥**

## ॥ इति भूमाधिकरणम् ॥

**॥ १-३-२ ॥**

✻ ✻ ✻



## ॥ अथ अक्षराधिकरणम् ॥

### ॥ १-३-३ ॥

### ॥ ॐ अक्षरमम्बरान्तधृतेः ॐ ॥

**॥ अथ 'अन्यभावव्यावृत्तेश्चे'ति सूत्रव्याख्यानम् ॥**
**॥ तत्र च 'एतद्वैतदक्षरं गार्गि' इत्यत्रोक्तमक्षरं ब्रह्मैव ॥**
**॥ तत्राप्यादौ 'नेदमक्षरं ब्रह्मे'ति पूर्वपक्षः ॥**

४ **सु०—** 'एतद्वै तदक्षरं गार्गी'त्यत्रोक्तमक्षरं ब्रह्मैवेत्युक्तम् । अत्र सूत्रम्— **ॐ अन्यभावव्यावृत्तेश्चेति** । तदिदमक्षरस्य ब्रह्मत्वोपपादनाय हेत्वन्तराभिधायकतया व्याख्यातं भाष्ये । आक्षेपनिवर्तकतयाऽपि 'अतो विरुद्धवदि'त्यादिना व्याख्यायते ।

तथा हि । नेदमक्षरं ब्रह्म, 'अस्थूलमनणवह्रस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमवागमनोऽचक्षुष्कमप्राणमसुखम(गोत्र)मात्रमनन्तरमबाह्यं न तदश्नाति किञ्च ने'त्यक्षरस्यास्थूलत्वादिश्रवणात् ।

न चैतद्ब्रह्मणः सम्भवति ॥ अस्थूलत्वादिपदैर्हि स्थूलत्वादिविपरीतम् अणुत्वाद्यभिधानं वा स्यात्, स्थूलत्वादिनिवृत्तिमात्रपर्यवसानं वा । आद्ये परस्परविरोधः । अस्थूलमित्यनेन ह्यणुपरिमाणं वक्तव्यम् । अनण्वित्यनेन च महत्त्वम्; न चोभयमेकत्र युज्यते, परस्परपरिहारेणैव वृत्तिदर्शनात् । एवमह्रस्वमदीर्घमित्यत्रापि विरोधो द्रष्टव्यः । न चैकपरिमाणोपेतमेवोत्कृष्टापेक्षयाऽणु महद्दीर्घं ह्रस्वं चेत्युच्यत इत्याश्रयणेन विरोधपरिहारः, घटादितुल्यत्वेनावक्तव्यत्वात्, उत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावाच्च । द्वितीये तु निःस्वभावं ब्रह्मेत्यापन्नम् । तथा च 'सर्वत्र प्रसिद्धोपदेशात्, अत्ता चराचरग्रहणात्, रूपोपन्यासाच्चे'त्युक्तविरोधः स्यादिति ।

**परि०—** **अत्रेति** । अक्षरं ब्रह्मैवेत्युक्तेः अर्थ इत्यर्थः । **हेत्वन्तरेति** । प्राकृतस्थौल्यादिराहित्यरूपहेत्वन्तरेत्यर्थः । वैशेषिकनये 'अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षये'त्यादिना वक्ष्यमाणेन गतार्थत्वमाशङ्क्य निराह **न चैकपरिमाणेति** । **उत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावाच्चेति** । ब्रह्मण

इति योज्यम् । तथैव वैशेषिकनये वक्ष्यमाणत्वादिति भावः । **इत्युक्तविरोध इति** । सर्वत्रेतिनये सर्वत्र सत्त्वस्य । अत्तेतिनये क्रियायाः । अदृश्यत्वनये रूपेतिगुणसूत्रे रुग्मवर्णमिति दिव्यविग्रहस्य गुणस्य चोक्तत्वात्तद्विरोध इत्यर्थः ।

**यादु०— उत्कृष्टापकृष्टपरिमाणेति** । ब्रह्मापेक्षयेति शेषः । **तथा च सर्वत्र प्रसिद्धेत्यादि** । निःस्वभावत्वे, सर्वत्रेत्यनेन सर्वत्र सत्त्वस्य । अत्तेति क्रियालिङ्गसमन्वयप्रतिपादकसूत्राणामुपलक्षणम् । तथा चात्तेत्यादिभिः क्रियायाः रूपेत्यनेन गुणस्य च, स्वभावत्वसमर्थनेन तद्विरोधः स्यादित्यर्थः ।

**वं०प०— स्थूलत्वादिविपरीतेति** । स्थूलपरिमाणभिन्नेत्यर्थः । **न चैकेत्यादि** । एवमेव वस्तु स्वापकृष्टवस्त्वपेक्षयापकृष्टं स्वोत्कृष्टवस्त्वपेक्षयाऽपकृष्टमित्यर्थः । **तुल्यत्वेनेति** । घटादावपि स्वोत्कृष्टापकृष्टवस्त्वपेक्षाऽणुमहत्त्वादेः सम्भवेन विशेषाभावाद्भगवतीदं न वक्तव्यमित्यर्थः । **उत्कृष्टेत्यादि** । भगवदपेक्षयेति शेषः ।

**आनन्दः— एतद्वा एतदक्षरं गार्गी**त्यत्र वाक्ये प्रतीतमक्षरं श्रीतत्त्वं वा विष्णुर्वेति संशये श्रीतत्त्वमेवाक्षरशब्द इति वाच्यम् । अक्षरशब्दस्य तत्र प्रसिद्धत्वात् । अहं सोममित्यादीनामाश्रितत्वलिङ्गत्वेन प्रसिद्धस्य चन्द्राद्याधारत्वस्य एतस्य वाक्षरस्य प्रशासने गार्गीत्यादि वाक्षरनिष्ठत्वेन श्रवणाच्चेति प्राप्ते इदमक्षरं ब्रह्मैव । अम्बरान्तस्य सर्वस्य धारकत्वलिङ्गादिति सिद्धान्तितम् । नन्वन्यभावव्यावृत्तेश्चेत्येतत्सूत्रं अतो विरुद्धवद्भातमित्यादिनाक्षेपनिवर्तनपरतया व्याख्यायते, तदयुक्तम् । भाष्ये हेत्वन्तरपरतया व्याख्यातत्वेन तद्विरुद्धत्वात् च शब्दानुपपत्तिश्चास्मिन्पक्षे इत्यत आह **तदिदमिति** । तथा च व्याख्यानान्तरत्वादस्य न दोषः । चशब्दसार्थक्यं तु अग्रे वक्ष्यत इति न दोष इति भावः । **उत्कृष्टापकृष्टेति** । परमात्मनः सर्वापेक्षयोत्कृष्टपरिमाणत्वस्य सर्वापेक्षयापकृष्टपरिमाणत्वस्य च 'अणोरणीयान्महतो महीयानि'त्यादिश्रुतिसिद्धत्वेन तादृशः परिहारो युज्यत इति भावः ।

**कं०रा०— एवमिति** । अह्रस्वमित्यनेन हि दीर्घपरिमाणं वक्तव्यम् । अदीर्घमित्यनेन ह्रस्वत्वम् । न चोभयमेकत्र युज्यते । परस्परपरिहारेणैव वृत्तिदर्शनादित्येवमह्रस्वमदीर्घमित्यत्रापि विरोधो द्रष्टव्य इत्यर्थः । **द्वितीय इति** । अस्थूलादिपदैः स्थूलत्वादिनिवृत्तिमात्रप्रतिपादने ब्रह्म स्थूलपरिमाणमात्रादिशून्यमित्यापन्नमित्यर्थः । ततः किमित्यत आह **तथा चेति** । ब्रह्मणोऽस्थूलपदोक्तस्थूलपरिमाणशून्यत्वस्याङ्गीकारे सर्वत्र प्रसिद्धोपदेशादित्युक्तसर्वगतत्वविरोधः । स्थूलपरिमाणरहितद्रव्यस्य सर्वगतत्वायोगात् । तथा न तदश्नाति किञ्चनेत्युक्तात्तृत्वशून्यत्वस्याङ्गीकारे अत्ता चराचरग्रहणादित्युक्तात्तृत्वविरोधः । तथाऽलैहितमित्युक्तलोहितरूपशून्यत्वस्याङ्गीकारे रूपोपन्यासाच्चेत्यत्र तस्य हैतस्य परमस्य नारायणस्य चत्वारं रूपाणि शुक्लं रक्तमित्युक्तरूपविरोधः स्यादित्यर्थः । यद्यप्यस्थूलादिवाक्येन तदश्नाति किञ्चनेत्यनत्तृत्वस्यान्तेऽभिहितत्वात् सर्वत्र





प्रसिद्धोपदेशात् रूपोपन्यासाच्च अत्ता चराचरग्रहणादित्युक्तविरोधः स्यादिति वक्तव्यम् । तथाऽपि तेषां सूत्राणां क्रममनुसृत्यैवमुक्तमिति द्रष्टव्यम् । **उभयेति** । अणुत्वमहत्त्वकार्यदर्शनरूपानुमानस्येत्यर्थः ।

**शे०वा०**— ननु अतो विरुद्धवद्भातमित्युत्तरानुव्याख्यानमनर्थकम् । न चैतदक्षराधिकरणव्याख्यानमिति वाच्यम् । अक्षरमम्बरान्तधृतेरित्यर्थकथनरूपत्वाभावेन तदसम्भवात् । न चान्यभावव्यावृत्तेश्चेत्येतदधिकरणीय-गुणसूत्रव्याख्यानमेतदिति वाच्यम् । तस्यापि भाष्योक्तरीत्याऽक्षरस्य ब्रह्मत्वे हेत्वन्तराभिधायकत्वस्थित्याऽस्य तद्व्याख्यानत्वस्याप्ययोगादित्यतोऽक्षरस्य ब्रह्मत्वरूपपूर्वसूत्रोक्तार्थे आद्याक्षेपनिवर्तकतयाऽस्योदाहृतगुणसूत्र-व्याख्यानत्वात् । तस्य च भाष्यकारीयहेत्वन्तरपरत्वव्याख्यानापेक्षया वर्णकान्तरत्वात् नानुपपत्तिरिति भावे-नोक्ताक्षेपप्रकारप्रदर्शनपूर्वकं तत्परिहारकतया सूत्रं योजयितुं पूर्वसूत्रोक्तार्थस्याबुद्ध्यारूढत्वे तदाक्षेपस्यापि बुद्ध्यारोहासम्भवात् । आक्षेपस्य सुबोधतासिद्ध्यै पूर्वसूत्रमुपन्यस्य विषयवाक्योदाहरणपूर्वकं तत्सिद्धमर्थं तावदाह **अक्षरमम्बरान्तधृतेरित्यादिना** । ॐ **अन्यभावव्यावृत्तेश्च** ॐ । **हेत्वन्तरेति** । लौकिकस्थौल्यादिराहित्यरूपे-त्यर्थः । **इदं** 'एतद्वै तदक्षरं गार्गी'त्यत्रोक्तम् । **एतत्** अस्थूलत्वादीत्यर्थः । कुतोऽस्थूलत्वादिकं ब्रह्मणो न सम्भ-वतीत्यतोऽस्थूलादिपदेषु किं नञः पर्युदासोऽर्थतयाऽभिमतः, किंवा प्रसज्यप्रतिषेधः, इत्यभिप्रेत्य विकल्पयति **अस्थूलादिपदैरिति** । **परस्परविरोध इति** । अस्थूलादिपदानामनण्वादिपदानां चेति शेषः । **अणुपरिमाणमिति** । अणुत्वपरिमाणमित्यर्थः । कुतोऽणुत्वमहत्त्वयोरेकत्रायोग इत्यतो यत्र महत्त्वं त्र्यणुकादौ न तत्राणुत्वं, यत्र चाणुत्वं परमाणुद्व्यणुकयोः न तत्र महत्त्वमित्यणुत्वमहत्त्वयोः परस्परात्यन्ताभावसामानाधिकरण्येनैव वृत्तिदर्शनान्न भगवति तयोः समावेश इत्याह **परस्परेति** । न च कालभेदेन विरोधपरिहारः । परिमाणस्य यावद्द्रव्यभावित्वेन तदसम्भवात् । **एवमिति** । अह्रस्वत्वमित्यनेन दीर्घत्वपरिमाणं वक्तव्यम् । अदीर्घमित्यनेन ह्रस्वत्वं तदुभयं च नैकत्र युज्यते । यतो यत्र ह्रस्वत्वं द्व्यणुके न तत्र दीर्घत्वं यत्र च दीर्घत्वं त्र्यणुकादौ न तत्र ह्रस्वत्वमिति ह्रस्वत्वदीर्घत्वयोः परस्परान्त्यन्ताभावसमानाधिकरणतयैव वृत्तेर्दृष्टत्वान्नैकत्र तत्समावेश इति भावः । स्यादयं महत्त्वाणुत्वदीर्घत्व-ह्रस्वत्वानां विरोधो यदि रूपे नीलत्वपीतत्वादिवत्परिमाणेऽणुत्वादिजातियोगः स्यान्न चासाविहास्ति । कल्पनैव किलैषा वैशेषिकाणां न तु परिमाणावान्तरभेदे प्रमाणमस्ति । अतः परिमाणमेकजातीयमेवोत्कर्षापकर्षवत् । यथा हि त्र्यणुकादिषु महत्त्वमेकजातीयमेव परेणोत्कर्षापकर्षवदङ्गीकृतम् । यथा वाऽणुत्वं परमाणुद्व्यणुकयोरेवं परिमाणमवान्तरजातिरहितमेव सर्वद्रव्येषूत्कर्षापकर्षवद्वर्तते । यथा चैकद्रव्ये वर्तमानं परिमाणं द्रव्यान्तर-वर्त्युत्कृष्टपरिमाणापेक्षयाऽणुत्वमित्युच्यते । तदेव द्रव्यान्तरवर्तिनोऽपकृष्टपरिमाणस्यापेक्षया महत्त्वमित्युच्यते । एवं ह्रस्वत्वदीर्घत्वयोरविरोधो द्रष्टव्यः । तत्कथं भगवति तदसम्भव इत्याशयेन शङ्कते **न चैकपरिमाणोपेतमेवेति** । अस्त्वेवं मध्यवर्तिद्रव्यपरिमाणस्य स्वापेक्षयोत्कृष्टापकृष्टद्रव्यवर्तिपरिमाणद्वयापेक्षयोत्कर्षापकर्षमात्रेणाणुत्वमहत्त्व-व्यवहारभाजनतयैकत्र महत्त्वाणुत्वसमावेशसम्भवस्तथाऽपि नासाविहाश्रयितुं शक्यः । तस्य ब्रह्मणीव घटादावपि सत्त्वेनातिप्रसक्ततया ब्रह्मण्यवक्तव्यत्वादित्यत आह **घटादीति** । अङ्गीकृत्य चैतदुक्तम् । वस्तुतस्तु न ब्रह्मण्यनेन प्रकारेण तत्समावेशो युज्यते । अन्यत्र स्वापेक्षयोत्कृष्टापकृष्टपरिमाणद्रव्यान्तरसद्भावेन तदपेक्षयोत्कर्षापकर्ष-





सम्भवेऽपि ब्रह्मापेक्षयोत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावेन न तदुत्कर्षापकर्षमात्रेणाप्यणुत्वमहत्त्वसमावेश इत्याह **उत्कृष्टापकृष्टेति**। अस्तु तर्ह्यस्थूलादिपदानां स्थूलत्वादिनिवृत्तिमात्रमर्थ इति द्वितीय इत्यत आह **द्वितीये त्विति**। परिमाणशून्यस्य द्रव्यस्य निःस्वभावत्वनियमादिति भावः। अस्तु निःस्वभावत्वं ब्रह्मण इतीष्टापत्तिं परिहरति **तथा चेति**। निःस्वभावत्वे चेत्यर्थः।

**वा०र०— धृतेरित्येतत्** अर्थकथनेति पाठः। इत्येतत्सूत्रस्य योऽर्थस्तत्कथनेति योजना इत्यर्थकथनेति योजना। इत्यर्थकथनेति पाठे इत्यस्य सूत्रस्य योऽर्थस्तत्कथनेति योज्यम्। **एतदधिकरणीयेति**। अन्यभावव्यावृत्तेश्चेति यदेतदधिकरणीयमक्षराधिकरणीयं गुणसूत्रमिति योजना। **तस्यापीति**। अन्यभावेति सूत्रस्यापीत्यर्थः। **अयोगादिति**। भाष्यविसंवादादिति भावः। **पूर्वसूत्रमन्यस्येति**। अनेनात्राधिकरणे अक्षरमिति प्रधानसूत्रोदाहरणमितरधिकरणेष्विवाधिकरणव्याख्यानाय तदारम्भार्थं न किन्तु प्रयोजनान्तरार्थमिति विशेषः सूचितः। अत एवात्र सूत्रमेव प्रतीकतयोपात्तं एवमेवंजातीयकेऽपि उत्तरत्र ज्ञेयम्। **पर्युदासोऽर्थतयाभिमत इति**। नन्वस्थूलपदे पर्युदासे कथमणुत्वाभिधानं स्थूलपदं हि स्थौल्यरूपपरिमाणवाची वा अभिप्रेतं परिमाणवाच्य एवादिशब्द इव भावप्रत्ययस्यावश्यकत्वात्। यद्वा तादृशपरिमाणोपेतधर्मिवाचिना(?)द्यः स भावप्रत्ययस्थूलपदेन स्थौल्यपरिमाणाभिधाने सति तत्सम्बन्धनञा स्थूलत्वभिन्नाणुत्वरूपविशेषस्य लक्षणया प्राप्तिसम्भवे.(?).-ऽप्यभिधाय तदभावेनाणुत्वाद्यभिधानमित्ययस्यायोगः। अन्विताभिधानवादे पदान्तरस्य विशेषस्थापकतया अघटः पट इत्यादावपि अघट इत्यनेनैव पटस्यापि सामान्यतोऽभिधानमित्याद्यङ्गीकारेऽपि तस्य स्वातन्त्र्येणाभिधानाप्राप्तावपि धर्मिविशेषसंसृष्टतया तत्प्रतिपादनलाभः। न ह्यत्राक्षरमणुत्वमित्यणुत्वाभेदोऽर्थतया प्रतिपादयितुमिष्टः विरुद्धैर्लक्षणैर्युतमित्युत्तरसमाधानग्रन्थतद्व्याख्यानानुरोधेन धर्मतयैवाणुत्वप्रतिपादनस्येष्टत्वात् न च उभयमेकत्र युज्यत इत्युत्तरोपपादनानुसारेण चाक्षरनिष्ठतयैव प्रतिपादनीयत्वाच्च। न द्वितीयः स्थूलत्वपरिमाणविशिष्टवाचिस्थूलपदसमभिव्याहृतनञा स्थूलत्वपरिमाणवद्भिन्नमात्रप्रतिपादनेऽपि तस्याणुत्वपरिमाणविशिष्टरूपविशेषप्रतिपादने सामर्थ्याभावात्। लक्षणाश्रयणे चाणुत्वाद्यभिधानमिति मूलस्यानुपपत्तिः अन्विताभिधानवाद इत्युक्तरीत्या सामान्याभिधानेन लक्षणानाश्रयणेऽपि धर्मिप्रतिपादनानुसारेणाणुत्वादिविशिष्टाभिधानमित्येव वक्तव्यत्वापत्त्या अन्यथावचनयोग एव अविरोधपदविचारयुक्तिपादीयटीकायामुत्तरपदार्थप्रधानतत्पुरुषे नञ्विशिष्टोत्तरपदेनाणुत्वलक्षणया एव प्राप्तेश्च। एषैव दिगनण्वित्यादि पदेऽपीति चेन्न। अस्तु तावदाद्यः न च अणुत्वपरिमाणमात्रप्रतिपादनापत्तिरित्युक्तमिति वाच्यम्। स्थूलपदसमभिव्याहृतनञा अणुत्वमात्रसवर्णेऽपि तत्समर्थकास्थूलपदोत्तरं मत्वर्थीयाच्प्रत्ययाङ्गीकारेण धर्मिसंसृष्टतया प्रतिपादनलाभात्। अत एवोभयमेकत्रेत्यादिग्रन्थोपपत्तिः अणुत्वविशिष्टस्योक्तरीत्या मुख्ययैव वृत्त्या प्रतिपादनाभ्युपगमादेव नाभिधानपदविरोधोऽपि। अथ तर्हि तद्विशिष्टाभिधानमिति वक्तव्यतया अणुत्वाद्यभिधानमित्युक्तिः कथमिति चेन्न। घटाभावतद्भूतलमित्यादौ भूतलविशेष्यकतया व्याख्यानस्य सिद्धत्वेऽपि अत्र भूतले घटाभावोऽवभासत इत्यादि व्यवहाराणां प्रामाणिकप्रवर्त्यतया शक्यतावच्छेदकस्यापि शक्तिविषयत्वपक्षानुसारेण चाणुत्वाभिधानमिति वचनोपपत्तेः।





न च दुःखादिशब्दो नियमेन दुःखादिसमवायस्य वाचक इत्याद्यानुमानिकाधिकरणीयमूले समवायसम्बन्धादेः धर्मस्य पुरस्कारेणैव व्यवहाराच्च भोग्यत्वमत्र चाद्यत्वमित्यानन्दमयाधिकरणाणुभाष्यमूले तस्मादन्नशब्दोऽयं भावप्रधानो भूताद्यत्वं भूतातत्वं च वक्तीति भावप्रधानतया भाववाचकत्वोक्त्येहाणुत्वादिमद्धर्मभूता(?)भूताणुत्वादिकं स्थूलत्वादिविपरीताणुत्वादिविशिष्टवाचिभूरिस्थलादिपदैर्भावप्रधानैरभिधीयत इत्यभिप्रायस्तु न कश्चिद्दोषः। भावप्रधानत्वं च भावे लक्षणया वृत्तिरिति प्रागेवोक्तं धर्मपुरस्कारेण प्रवर्तमानोतत्ववाचीत्यादि तत्तद्ग्रन्था-तत्तदुक्तीनामप्ययमेवाशयः। अतो यत्किञ्चिदेतत्। एवमेव द्वितीयोऽपि साधुः उक्तरीत्यैव नञ्समभिव्याहृतपदे गुणत्वस्य मुख्ययैव वृत्त्या प्रतिपादनात् यद्वा स्थूलत्वाभावाणुत्वयोरविनाभावेनैकोक्तावार्थादपरप्राप्तिः पुरुषपर इति पुरुषस्य परत्वोक्तावर्थादव्यक्तस्यावसरत्वलाभाभिप्रायेणानुमानिकाधिकरणे पुरुषावरत्वस्य प्राप्तिमालम्ब्य पूर्वपक्षप्रवृत्तेः अवरशब्दस्य ब्रह्मणि सम्भवप्रतिपादनाच्च तथात्राप्युपपत्तिः। पर्युदासस्यार्थाभावेऽव्ययीभावेन कल्पदर्थे भेदाभावान्मत्वर्थीयान्तत्वाश्रयणेन चाभिधानपदस्यापि नानुपपत्तिः। वस्तुतस्त्वभिधानपदस्य तत्र तत्र शक्यलक्ष्यार्थसाधारण्येनापि प्रयोगादत्र प्रतिपादनमात्रार्थकत्वमिति न दोषः। धर्मपुरस्कारेणोक्तिस्तु सर्वतन्त्रानुमता न विरुद्धेत्युक्तम्। तत्राणुरूपधर्मिप्रतिपादने सति सद्गतीन्योन्याभावरूपधर्मविवक्षया भावप्रत्ययोपपत्तिरत एवास्य पर्युदास्यपक्षत्वमित्यप्याहुः। एवं मन एवादिपदेऽपीत्यलं प्रसज्यप्रतिषेध इति न स्थूलं स्थौल्यमत्रेत्यादि प्रसज्यप्रतिषेधे स्थौल्यादिरूपधर्मराहित्यमात्रप्राप्तेरिति भावः। यत्र धर्मतयात्यन्ताभावप्रतीतिः तत्र तद्वता धर्मतया विवक्षितेति मूले प्रागुक्तमेवेति ज्ञेयम्। क्रियायोगाभावेऽव्ययीभावापत्त्या तद्योगस्यावश्यकत्वादित्यादिकं तु अदृश्यत्वादिनये प्रागुक्तम्। **अहस्वमित्यनेनेति**। अत्रापि ह्रस्वं नेति नञ्समभिव्याहृतभावप्रधानह्रस्वशब्देन दीर्घत्वपरिमाणे अभिहिते मत्वर्थीयाच्प्रत्ययान्तेन ह्रस्वपदेन दीर्घत्वपरिमाणविशिष्टमुच्यत इत्यादिकं पूर्ववत् ज्ञेयम्। अणुत्वं च महत्वं चेति वैशेषिकाधिकरणीयानुव्याख्यानरूपैतदुक्तं भवति। **स्यादयमि**त्यादिमूलानुसारेण न चैकपरिमाणोपेतमित्येतदाशयकथनपूर्वकं वाक्यमवतारयति **स्यादयं महत्वाणुत्वेत्यादिना**। महत्वाणुत्वेति महत्वाणुत्वयोर्दीर्घत्वह्रस्वत्वयोश्चेत्यर्थः। विरोधद्वयमेकीकृत्य बहुवचननिर्देशः। **द्रव्यान्तराभावेनेति**। अणोरणीयानिति श्रुत्या सर्वापेक्षया प्रकृष्टत्वस्य तदपेक्षयैवोत्कृष्टत्वस्य च प्रतिपादनादिति भावः। **परिमाणशून्यस्येति**। परिमाणस्य द्रव्यसामान्यगुणतया तच्छून्यद्रव्यस्यैवाभावादिति भावः।

**स०व्र०**— किं नञा, पर्युदासोऽर्थः उत प्रसज्यप्रतिषेध इति विकल्पार्थः। **उत्कृष्टापकृष्टपरिमाणद्रव्यान्तराभावाच्चेति**। सर्वापेक्षया परमात्मन्येव उत्कृष्टापकृष्टपरिमाणद्रव्यत्वस्य सिद्धान्तिभिरभ्युपगतत्वादिति भावः। **तथा च सर्वत्रप्रसिद्धोपदेशादित्यादि**। निःस्वभावत्वे 'सर्वत्रप्रसिद्धोपदेशादि'त्यनेन सर्वत्र सत्त्वस्य, 'अत्ता' इत्यनेन क्रियायाः 'रूपे'त्यनेन गुणानां,च तत्स्वभावत्वस्य समर्थितत्वेन तद्विरोधः स्यादित्यर्थः। अथवा अस्थूलमित्यस्य स्थौल्यनिषेधपरत्वे सर्वत्रेत्यनेन 'न तदश्नाति किञ्चने'त्यस्य; 'अत्ता' इत्यनेन 'अलोहितम्' इत्यस्य 'रूपोपन्यासाच्च' इत्यनेन विरोध इत्यर्थः।

**विठ्ठल०**— उत्तरमूलस्य सूत्रव्याख्यानताप्रतीतेः सोपोद्घातं सङ्गमयति **एतद्वै तदक्षरमित्यादिना** । **आक्षेपेति** । अक्षरस्य विष्णुत्वाक्षेप इत्यर्थः । **व्याख्यायत इति** । सौत्रचशब्दाभिप्रायकथनेनेत्यर्थः । अत एव शब्दसूचितं परिहारमाहेति वक्ष्यति । पूर्वव्याख्यानं चशब्देन समुचितवानिति च अणुत्वमहत्वादेर्यत्किञ्चित्प्रतियोगिनिरूप्यत्वेन पितृत्वपुत्रत्वादिवत् ब्रह्मण एकपरिमाणवत्वेऽपि तत्र समावेशः सम्भवतीत्याशङ्क्य निराह **न चैकेति** । **उत्कृष्टापकृष्टपरिमाणेति** । परमात्मनः सकाशादिति शेषः । **तथा च सर्वत्र प्रसिद्धेति** । अस्थूलमित्यस्य स्थौल्यनिषेधपरत्वे सर्वत्रेत्युक्तविरोधः । न तदश्नाति किंचनेत्यस्य अत्तेत्युक्तविरोधः । अलोहितमित्यस्य रूपोपन्यासादित्युक्तविरोधः । यद्वा एतैः सूत्रैः गुणक्रियादिस्वभावत्वस्य समर्थितत्वात् निस्वभावत्वे तद्विरोध इति भावः ।

**॥ इति 'नेदमक्षरं ब्रह्मे'ति पूर्वपक्षः ॥**

* * *

**॥ अथ च एतत्पूर्वपक्षस्य परिहारः ॥**

**॥ तत्र चादौ 'अस्थूलमनण्वि'ति श्रुत्युक्तानां अस्थूलादिपदानां अणुत्वाद्यभिधायकत्वात् अक्षरं ब्रह्मैवेति उत्तरपक्षः ॥**

५ **सु०**— तत्र तावत्प्रथमपक्षमभ्युपेत्य चशब्दसूचितं परिहारमाह— **अत इति** ।

**अनु०— ॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥**

**अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।**
**योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ॥**
**ब्रह्मैव**

**यतो ब्रह्म विरुद्धैर्लक्षणैर्युतमेव अतो, विरुद्धवत्** = उक्तोभयविधविरुद्धार्थप्रतिपादकमिव, **भातं** = प्रतीतम् **अपि** वाक्यं **तत्त्वतो व्याख्याय हरौ योजनीयम्** योजयितुं शक्यमिति योजना ।

यतोऽम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुत्वं निश्चितम् **अतो विरुद्धवद्भातमपि** वाक्यं





**तत्त्वतो व्याख्याय हरौ योजयितव्यमिति** वा । कथं तत्त्वतो व्याख्यानमित्यपेक्षायां विरुद्धैरिति सम्बध्यते ।

अथवा अत इत्यस्य पूर्वत्रैव(त्र) सम्बन्धः । यतः सुखाधिकोऽतो भूमा विष्णु-रि(विष्णुरतो भूमे)ति विरुद्धवदिति प्रतिज्ञाया(यां) विरुद्धैरिति हेतुतया सम्बध्यते ।

एतदुक्तं भवति । नाक्षरस्य ब्रह्मत्वेऽस्थूलमित्यादिवाक्यस्यानवकाशः, अस्थूलादि-पदैस्तद्विपरीताणुत्वाद्यभिधानमिति व्याख्यानस्याङ्गीकारात् । न चैवं सति परस्परविरोध इति वाच्यम्, विरुद्धधर्माणां ब्रह्मण्यवस्थानस्य श्रुत्यादिसिद्धत्वादिति ।

**परि०— उक्तोभयविधेति** । स्थूलत्वादिविपरीतमणुत्वादीति स्थूलत्वादिनिवृत्तिमात्रे चोक्तो-भयविधेत्यर्थः । विरुद्धैर्लक्षणैर्युतमित्येतत् पूर्वं हेतुतया योजितमिदानीं व्याख्यानप्रकारार्पकतया योजयति **यतोऽम्बरान्तेत्यादिना** । **विरुद्धवदितीति** । विरुद्धवदित्यादित्रिपादीत्यर्थः । **विरुद्धैरितीति** । ब्रह्मैवेत्यन्तमित्यर्थः । तावतोक्तशङ्कानिरासः कथमित्यत आह **एतदुक्तमिति** । **श्रुत्यादीति** । 'योऽसौ विरुद्धोऽविरुद्धः', 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ती'त्यादिसिद्धत्वादित्यर्थः । सर्वधर्मेति वक्ष्यमाण-श्रुत्यादिसिद्धत्वादित्यर्थः ।

**वं०प०**— भातशब्दार्थकथनं **प्रतीतमपीति** । आद्ययोजनायामत इत्यस्य हेतुसापेक्षत्वाद्विरुद्धैर्लक्षणै-र्युतमित्येतद्धेतुत्वेन सम्बध्यत इत्यभिप्रेत्य यतो ब्रह्मेत्यादि व्याख्यातम् । द्वितीययोजनायां त्वतो विरुद्धत्वा-दित्यादिसाध्ये हेतुरध्याहार्य इत्यभिप्रेत्य यतोऽम्बरान्तेत्यादि व्याख्यातम् । ननु तर्हि द्वितीययोजनायां विरुद्धै-र्लक्षणैर्युतं ब्रह्मेत्यनुव्याख्यानस्य कथं सम्बन्ध इत्यत आह **कथं तत्त्वत इति** । विरुद्धत्वादित्यर्थः । **विरुद्ध-त्वादितीति** । इत्यादिप्रतिज्ञायामित्यर्थः । न त्वेतावन्मात्रमेव प्रतिज्ञायामित्यर्थः । **विरुद्धैरिति** अनुव्याख्याने इत्यर्थः । **श्रुत्यादीति** । 'अस्थूलमनणु', *'अस्थूलोऽनणुरूपोऽसौ'* इति भाष्योदाहृतश्रुतिस्मृतीत्यर्थः ।

**आनन्दः**— अत्र कारिकायां हेतुहेतुमद्भावो न प्रतीयतेऽतो व्याख्याति **यत इति** । **विरुद्धार्थ-प्रतिपादकमिवेति** । विरुद्धोऽर्थो विद्यते यस्य तद्विरुद्धमित्यर्श आद्यच् प्रत्ययान्तत्वेनावरुद्धार्थप्रतिपादकत्वं विरुद्धशब्दार्थो लभ्यत इति भावः । **विरुद्धवदिति प्रतिज्ञायामिति** । एवं च परमात्मा विरुद्धार्थप्रतिपादक-वाक्यप्रतिपाद्यः विरुद्धलक्षणयुक्तत्वादित्यनुमानमुक्तं भवति । नन्वत्र लक्षणविरुद्धलक्षणयुक्तत्वमसिद्धं प्रमाणा-भावादित्यत आह **एतदुक्तं भवतीति** । **श्रुत्यादीति** । अणोरणीयानित्यादि श्रुत्यादीत्यर्थः ।





**शे०वा०**— अन्यवस्तुस्वभावानामित्यादिना द्वितीयस्याप्यभ्युपगमात्तावदित्युक्तम् । अतो विरुद्धव-द्भातमित्याद्युक्तप्रतिज्ञायां हेत्वनुक्तेर्न्यूनतामाशङ्क्य विरुद्धैर्लक्षणैर्युतमित्येतदेव तत्र हेतुतया सम्बध्यत इति भावेनात इत्येतद्बललब्धयत इति हेतुत्वसमर्पकपदाध्याहारेण वाक्यं योजयति **यत इत्यादिना** । तत्र तस्येवेति सूत्रस्य प्रायिकत्वेनाभियुक्तैर्व्याख्यानत्वाद्विरुद्धवदिति द्वितीयान्ताद्वतिरिति भावेन तदनुवादेन तथा विग्रहमाह **विरुद्ध-वदिति** । अस्मिन्पक्षे विरुद्धैर्लक्षणैर्युतत्वस्य साध्यवत्सन्दिग्धस्यैव साधनतयाऽऽश्रयणीयत्वादेतत्परित्यागेन अपेक्षितयोग्यहेतुपूरणेनोक्तप्रतिज्ञामुपपादयति **यत इत्यादि** । तर्ह्यध्याहृतहेतुबलेनैवोक्तप्रतिज्ञानिर्वाहात् विरुद्धै-रित्यादिभाष्यखण्डवैयर्थ्यमित्यतः प्रतिज्ञाततत्त्वतो व्याख्यानप्रकारोपदर्शकत्वान्न तदित्याशयेन तत्प्रकारोप-दर्शकतया तद्योजयितुं तदाकाङ्क्षामुत्थापयति **कथमिति** । अत्र पक्षे (अश्रुतेत्यस्य हेतुत्वायोग्येत्यस्य च निश्चयस्येत्युत्तरेण सम्बन्धः । हेतुत्वायोग्यत्वे हेत्वभिधानं बाधकाभावेत्यादि । बाधकं विरोधरूपम् । साधक-मम्बरान्तधृत्यादिकम् । साध्यमक्षरस्य विष्णुत्वम् । **ततःपूर्वमिति** । बाधकाभावसिद्धेः पूर्वमित्यर्थः । बाधका-भावसिद्ध्यर्थतयेति यावत् । **अन्योन्याश्रयेति** । अम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुत्वनिश्चये विरुद्धवत्प्रतीत-स्यापि तत्त्वतो व्याख्याय हरौ योजनीयत्वसिद्धिः । तत्त्वतो व्याख्याने च विरोधाभावादम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुत्वनिश्चय इत्यन्योन्याश्रयापत्त्येत्यर्थः ।) अश्रुतस्य, बाधकाभावसहकृतसाधकस्यैव साध्यनिश्चायकत्वात् ततःपूर्वं साधकतयोपन्यासे अन्योन्याश्रयापत्त्या, हेतुत्वायोग्यस्य बाधकाभावसहकृतसाधकस्येव साध्य-निश्चयस्य, अम्बरान्तधृत्यादिनाऽक्षरस्य विष्णुतानिश्चयस्य, हेतुत्वकल्पनं, प्रतिज्ञापूर्वकव्याख्यानप्रकारप्रदर्शनस्य प्रयोजनविशेषाभावश्चेति पूर्वत्रापरितोषात्पक्षान्तरमाह **अथवेति** । पूर्वत्रसम्बन्धप्रकारमेव दर्शयति **यत इति** । अस्मिंश्च पक्षे न **पूर्ववाक्ये** यतस्तत इत्यनयोरध्याहारः किन्तु यत इत्यस्यैवेति **द्रष्टव्यम्** । कथं तर्हि प्रकृतवाक्ययोजनेत्यत आद्यव्याख्यानमाश्रित्य विरुद्धैर्लक्षणैर्युतमित्यस्य हेतुगर्भविशेषणत्वं चाश्रित्य भाष्य-योजनामाह **विरुद्धवदितीति** । तत्त्वतो व्याख्यानस्य प्रयोजनप्रकारयोरनुक्तेः सन्दिग्धत्वेन हेतुत्वोपपादक-प्रकारानुपलम्भेन विरुद्धैर्लक्षणैर्युतत्वस्योक्तप्रतिज्ञायां हेतुत्वानुपपत्तेर्विरोधपरिहारप्रकारोपायानुक्त्या प्रथमपक्षा-समर्थनाच्चापर्याप्तमिदं भाष्यमित्यतो वाक्यतात्पर्यमाह **एतदुक्तं भवतीति** ।

**वा०र०**— इतीष्टापत्तिं इति प्राप्तां विरुद्धार्थप्रतिपादकमिव प्रतीतवाक्यं व्याख्यायेति द्वितीयात्वेन योजनाघटनायाह **तत्र तस्येवेतीति** । सप्तमीसमर्थात् षष्ठीसमर्थाद्वा इवार्थे वतिप्रत्ययविधायकस्येत्यर्थः । एतच्च सर्वथा अपि तु त एवोभयलिङ्गादित्यधिकरणीय तत्र तस्येति लक्षणस्येत्यादि मूलटीकायां पूर्ववत् स न इत्यादि सूत्रगतपूर्वस्मादिवेति पूर्ववदित्यादिव्याख्यानानुसारि पञ्चम्यर्थे वतिरित्याद्युपपादनात् तदनुसारेण ज्ञेयम् । जिज्ञासाधिकरणटीकायामनिर्वचनीयपदान्मूलोक्तविकल्पलाभप्रतिपादनाय अनीपरप्रत्ययस्यार्थकथनात् तदनुसारेण शक्यार्थोऽनीपरमभिप्रेत्य व्याचष्टे **योजयितव्यमिति** । अर्हार्थे प्रत्यय इति भावः । विधार्थत्वाश्रयणेनापि योजितं योजयितव्यमितीति मूलयोजना । **आश्रयणीयत्वादिति** । तत्प्रसङ्गादित्यर्थः । अश्रुतस्येत्यस्य हेतुत्वायोग्य-स्येत्यस्य च निश्चयस्येत्युत्तरेण सम्बन्धः । हेतुत्वायोग्यत्वे हेत्वभिधानं बाधकाभावेत्यादि बाधकं विरोधरूपं





साधकमम्बरान्तधृत्यादिकं साध्यम् । अक्षरस्य विष्णुत्वं ततःपूर्वमिति बाधकाभावसिद्धेः पूर्वमित्यर्थः । बाधकाभावसिद्ध्यर्थतयेति यावत् । केवलसाधकेन साध्यनिश्चयस्य साधकतयोपन्यास इत्यर्थः । **अन्योन्याश्रयेति** । अम्बरान्तधृत्यादिना अक्षरस्य विष्णुत्वनिश्चये विरुद्धवत्प्रतीतिस्यापि तत्त्वतो व्याख्याय हरौ योजनीयत्वसिद्धिः । तत्त्वतोऽव्याख्याने च विरोधाभावादम्बरान्तधृत्यादिना अक्षरस्य विष्णुत्वनिश्चय इत्यन्योन्याश्रयापत्त्येत्यर्थः । **कल्पनमित्यस्येति** । पूर्वत्र परितोषादित्युत्तरेणान्वयः । **प्रतिज्ञेति** व्याख्याय **योजनीयमिति** प्रतिज्ञाय कथं व्याख्यानमित्याकाङ्क्षायां विरुद्धैरित्यनेन तत्प्रकारप्रदर्शनमिति हि प्रागुक्तम् । तत्कथं हेतोः प्रतिपूर्वकत्वनियमेऽपि व्याख्यानस्य तत्पूर्वकत्वनियमाभावादिति भावः । **इत्यस्यैवेति** । इत्येकस्यैवेत्यर्थः । तेन पूर्वोक्तविरोधो नेति भावः । **आद्येति** । यतो ब्रह्मेत्यादि व्याख्यानमित्यर्थः । **हेतुगर्भेति** । अत इत्यस्याभावेऽपीति पूरणीयम् । **तत्त्वतो व्याख्यानस्येति** । अस्थूलमित्यादिवाक्यानवकाशाभावरूपप्रयोजनस्य तद्विपरीताणुत्वेत्यादिना व्याख्यानप्रकारस्य चोक्तेस्तदुभयव्यावर्त्यं शङ्काद्वयमेतत् । अयमित्युत्तरेण सम्बन्धः । सन्दिग्धत्वेन साध्यवदिति शेषः । पूर्वं तथोक्तेः हेतुत्वानुपपत्तेरित्युत्तरेण सम्बन्धः । **हेतुत्वोपपादकप्रकारेति** । उक्तप्रकारेण तत्त्वतो व्याख्येयत्वे विरुद्धलक्षणैर्युतत्वस्य साक्षाद्धेतुत्वायोगात् तदुपपादकप्रकारान्तरस्य चानुपलम्भेन तस्योक्तप्रतिज्ञायां हेतुत्वानुपपत्तेरित्यर्थः । लम्भेन चेति पाठः । पञ्चम्यन्तस्यापर्याप्तमित्यनेन सम्बन्धः । एतच्च न चैवं सति परस्परेति मध्ये विरोधमाशङ्क्य तत्परिहारकतया विरुद्धलक्षणयुतत्वकीर्तनव्यावर्त्यतयोक्तं तेन व्याख्याने प्राप्तविरोधपरिहारोपायतयोक्तहेतुकीर्तनाद्धेतुत्वोपपादकप्रकारप्रदर्शनसिद्धिरिति ज्ञेयम् । **विरोधपरिहारेति** । विरुद्धधर्माणां ब्रह्मण्यवस्थानादिति यः विरोधपरिहारप्रकारस्तदुपायस्य तत्साधकस्यानुक्त्येत्यर्थः । अश्रुत्यादीत्येतत्साधकोपन्यासव्यावर्त्यशङ्केयम् । **श्रुत्यादिसिद्धत्वादिति** मूलम् । वक्ष्यमाणाणोरणीयानित्यादि श्रुत्या यशोदादिप्रत्यक्षेण च सिद्धत्वादित्यर्थः ।

**स०व्र०**— पर्युदासाश्रयेण न तावदस्थूलादिवाक्यस्यानवकाशत्वं परिहरति **एतदुक्तं भवतीति** ।

**विट्ठल०**— विरुद्धलक्षणयुक्तत्वस्य पूर्वं सप्तकृतत्वेऽपि बुद्धिस्तत्परामर्शार्थिकतया अतःशब्दं व्याख्याय साक्षात्प्रकृतपरामर्शार्थिकतयापि व्याख्याति **यतोऽम्बरान्तेति** । मास्त्वतःशब्दस्यात्र सम्बन्ध इत्याशयेन तमन्यत्र सङ्गम्यावशिष्टं योजयति **अथवेति** । अस्मिन्पक्षे विरुद्धैर्लक्षणैर्युतमित्येतद्धेतुगर्भविशेषणमिति बोध्यम् । नन्वनेन कः पक्षोऽङ्गीक्रियते । आद्यः पक्ष इति चेत् तस्योक्तविरोधेनाङ्गीकारानर्हत्वात् । विरुद्धधर्माणामपि ब्रह्मणि सम्भवान्न दोष इति चेत् तत्र प्रमाणाभावादित्यत आह **एतदुक्तं भवतीति** । **श्रुत्यादीति** । योऽसौ विरुद्धोऽविरुद्ध इति यस्मिन्विरुद्धगतयोऽपीति स्मृतेः तत्सिद्धत्वादित्यर्थः ।

**॥ अथ विरुद्धैर्लक्षणैर्युतं ब्रह्म इत्युक्त्या प्राप्ता व्याहतत्वशङ्का, तत्परिहारश्च ॥**

**६ सु०— विरुद्धैर्लक्षणैर्युतं ब्रह्मेत्युक्तम्, मे माता वन्ध्येतिवद् व्याहतत्वात् । यदि हि महत्त्वाणुत्वादीनि विरुद्धानि, कथं तर्हि तैर्युतमेकं स्यात्, विरोधस्य सहानव-**





स्थानात्मकत्वात् । यदि चैकं तैर्युतं कथं तर्हि तानि विरुद्धानि स्युः, सहावस्थानस्य अविरोधरूपत्वादित्याशङ्क्योक्तं विवृणोति— **तानीति** ।

**अनु०—** तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि ।
अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च ॥

विरुद्धैर्लक्षणैर्युक्तं ब्रह्मेत्यनेनैतदस्माभिरभिप्रेतम् । **तानि अस्थूलादिकानि** अणुत्वमहत्त्वादिकानि **लिङ्गानि तस्माद्** ब्रह्मणः **अन्यत्र** सह **असन्त्यपि गोविन्दे अविरोधेन** एव सहैवेति यावत् **सन्तीति** । न पुनर्विरोधमभ्युपेत्यैकत्रावस्थानमुच्यते येन व्याघातः स्यात् इत्यवधारणार्थस्य **च**शब्दस्यार्थः । गोविन्द इत्यनेन यशोदादिप्रत्यक्षमप्यत्रार्थे प्रमाणमिति सूचयति।

अयमभिसन्धिः । अणुत्वमहत्त्वादिकं ब्रह्मणि किं प्रमाणाभावान्नाभ्युपेयम् । किंवा विरुद्धत्वात् । नाद्यः, 'अणोरणीयान्' इत्याद्यागमस्योभयकार्यदर्शनानुमानस्योदाहृतप्रत्यक्षस्य च तत्र प्रमाणत्वात् । द्वितीयेऽपि किं विरोधः प्रमाणेनाथ परस्परम् । न प्रथमः, विपरीतप्रमाणादर्शनात् । द्रव्यत्वादेस्तूक्तप्रमाणविरुद्धत्वेन कालात्ययापदिष्टत्वात् ।

**परि०—** एतदभिप्रेतमित्युक्तं व्यनक्ति **तानीति** । तान्यस्थूलादिकानीति मूलपदयोरन्वयेन अनुवादः । अणुत्वमहत्त्वादिकानीति व्याख्या । मूलस्थचशब्दार्थमाह **न पुनरित्यादि** । **यशोदादिप्रत्यक्षमिति** । तच्च, 'पीतप्रायस्य जननी सुतस्य रुचिरं स्मितम् । मुखं लालयती राजन् जृम्भतो ददृशे इदम् । खं रोदसी' इत्यादिना भागवते प्रसिद्धमिति भावः । आदिपदादर्जुनादेः, विश्वरूपादिग्राहकप्रत्यक्षग्रहः । **उभयकार्येति** । 'गोपिकोलूखले दाम्ना बबन्ध प्राकृतं यथा । तद्दाम बध्यमानस्य स्वार्भकस्य कृतागसः । द्व्यङ्गुलोनमभूदि'त्यादिना सिद्धस्य यशोदयोलूखले बद्धुमनेकदामभिरुद्योगेऽपि तैर्दामभिरबद्धत्वरूपकार्यस्यान्ते अत्यल्पदाम्ना बद्धत्वरूपकार्यस्य च दर्शनेन विष्णुरणुः अल्पदामबद्धत्वात् वत्सादिवत् 'विष्णुः महान् अनेकदामभिरप्यबद्धत्वात्' पर्वतादिवत् इत्यनुमानस्येत्यर्थः । **तत्रेति** । 'अणुत्वमहत्त्वादौ', 'विष्णुः न स्थौल्यादिपरिमाणद्वयवान् द्रव्यत्वात्' इत्याद्यनुमानमेव विपरीतप्रमाणमित्यत आह **द्रव्यत्वादेरिति** ।





**गु०दी०— उभयविधकार्यदर्शनानुमानस्य** इत्यत्र अणोरन्तरवस्थानस्य तत्रैव स्वान्तर्ब्रह्माण्डधारणस्य यशोदाङ्कनिवासस्य तत्रैव स्वान्तर्ब्रह्माण्डदर्शनस्येत्युभयविधकार्यस्येत्यर्थः ।

**यादु०— उभयकार्यदर्शनेति** । यथैकस्मिन्नेव कृष्णेऽणुत्वकार्यं, वत्सपाशबद्धत्वं, महत्त्वकार्यं दामसञ्चयाबद्धत्वं, दृश्यते तदुभयं तत्र स्वकारणीभूतपरिमाणद्वयानुमापकमिति भावः ।

**वं०प०—** व्याहतिमुपपादयति **यदि हीत्यादिना** । चशब्दार्थमाह **न पुनरिति** । नन्वीश्वरो न विरुद्धपरिमाणद्वयवान् द्रव्यत्वात् घटादिवदित्यनुमानस्यैव विपरीतप्रमाणस्य दर्शनादित्यत आह **द्रव्यत्वादेस्त्विति** ।

**आनन्दः—** नन्वेतान्यणुत्वमहत्त्वादीनि सह न सन्ति नरौ सहैवं सन्ति इत्युक्तं तत्र न प्रतिज्ञामात्रेणार्थसिद्धिरित्यत आह **अयमभिसन्धिरिति । उभयकार्येति** । ईश्वरः अणुत्ववान् तत्कार्यकर्तृत्वात् एवं ईश्वरो महत्त्ववान् तत्कार्यकर्तृत्वादित्यनुमानस्येत्यर्थः । **द्रव्यत्वादेस्त्विति** । ईश्वरः अणुत्वे सति महत्त्ववान् न द्रव्यत्वादित्याद्यनुमानस्येत्यर्थः ।

**कं०रा०— उदाहृतेति** । यशोदादिप्रत्यक्षस्येत्यर्थः । **प्रमाणेनेति** । अणुत्वमहत्त्वाभावग्राहकप्रमाणेन इत्यर्थः । **अथ परस्परमिति** । अणुत्वमहत्त्वयोः परस्परं विरोधोऽपीत्यर्थः । **विपरीतेति** । ब्रह्मण्यणुत्वमहत्त्वाभावग्राहकप्रमाणादर्शनादित्यर्थः । ननु ब्रह्माणुत्वमहत्त्वरहितं द्रव्यत्वात् घटवदित्यादेरनुमानस्यैव विपरीतग्राहकप्रमाणस्य सत्त्वात् कथं तद्दर्शनमित्यत आह **द्रव्यत्वादेरिति** । **उक्तेति** । अणोरणीयान्महतो महीयानित्याद्यागमविरोधेनेत्यर्थः ।

**शे०वा०—** विरुद्धैर्लक्षणैर्युतमित्येतद्विवरणरूपत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य किं विवरणेनेत्यतो व्याघातशङ्कापरिहारस्तत्प्रयोजनमिति भावेन तच्छङ्कामुत्थापयति **विरुद्धैरित्यादि** । व्यवहितत्वात्सम्बन्धमाह **तान्यस्थूलादिकानीति** । प्रथमपक्षसमर्थनरूपत्वं मूलारूढं कर्तुं तत्परतयाऽस्थूलादिकानीत्यस्यार्थमाह **अणुत्वेति** । तत्रान्यत्रेति सामानाधिकरण्ये तदित्यस्य वैयर्थ्यं चशब्दाध्याहारेण तत्रान्यत्र च सहासन्त्यपीति वैयधिकरण्येन योजनायामविरोधेनेत्युत्तरविरोधापत्तेस्तदविरोधेन योजयति **तस्मादिति** । चशब्दोऽवधारणेऽविरोधेनेत्यनेन च सम्बध्यत इत्याशयेनाह **अविरोधेनैवेति** । ब्रह्मैवेति पूर्ववाक्यानुसारेण ब्रह्मणीति वक्तव्ये गोविन्द इति विलक्षणशब्दप्रयोगोऽनर्थक इत्यतोऽभिमतार्थे प्रमाणान्तरसूचकत्वान्नानर्थकत्वमित्याशयेनाह **गोविन्द इतीति** । यशोदादीत्यादिशब्देनार्जुनादिसङ्ग्रहः ।

किं विवक्षितार्थे प्रत्यक्षप्रमाणसूचनेनापि प्रयोजनमविरोधेनेति सहावस्थानोक्त्यैव विरोधशङ्कापरिहारसिद्धेरित्यतोऽभिप्रायमाह **अयमिति** । आद्येऽपि किमागमोऽपि नास्तीत्यभिप्रायः, किंवाऽनुमानं नास्तीति, अथवा प्रत्यक्षं नास्तीति, विकल्पान्मनसि निधाय क्रमेण दूषयति **अणोरणीयानित्यादिना** । आदिपदेन महतो





महीयानित्यादेः सङ्ग्रहः । **उभयकार्यदर्शनेति** । एकदामबद्धत्वरूपाणुत्वकार्यस्यानेकदामाबद्धत्वरूपमहत्त्वकार्यस्य ब्रह्मणि सत्त्वात्कार्यस्य च स्वस्वकारणीभूतपरिमाणं विनाऽयोगादणुत्वमहत्त्वरूपपरिमाणद्वयवत्त्वे तत्कार्यमेव लिङ्गमिति भावः । यद्यप्यत्रोभयकार्यरूपानुमानस्येत्येव वक्तव्यम् । तथाऽपि कार्यस्यासिद्धिशङ्कापरिहारार्थं दर्शनानुसरणं कृतमिति ध्येयम् । **उदाहृतप्रत्यक्षस्येति** । अणुन्येव कृष्णस्य मुखे गर्भीकृतब्रह्माण्डे महत्त्वग्राहकस्य यशोदादिप्रत्यक्षस्येत्यर्थः । **तत्रेति** । ब्रह्मणोऽणुत्वमहत्त्वादिसद्भाव इत्यर्थः । आद्येऽपि किं विरोधिप्रमाणमनुमानातिरिक्तं किं वाऽनुमानमिति विकल्पं मनसि निधायाद्यं दूषयति **विपरीतेति** । अस्तु तर्हि विमतं नाणुत्वमहत्त्वादिरूपपरिमाणवद् द्रव्यत्वात्पदार्थत्वाद्वा घटवदित्यनुमानं मानमित्यत आह **द्रव्यत्वादेरिति** । **उक्तप्रमाणेति** । यशोदादिप्रत्यक्षादिप्रमाणेत्यर्थः ।

**वा०र०**— यत्तु टीकान्तरे अविरुद्धो विरुद्धः यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्तीत्यादिसिद्धत्वादित्यर्थवर्णनं तत्तु विरुद्धैरित्येतद्विवरणरूप 'तानि लिङ्गानी'त्यनुव्याख्यानव्याख्यानपरोत्तरमूले विरुद्धाणुत्वादिधर्मावस्थानावेदकतया अणोरित्यादेरुपन्यासतद्विरुद्धं न ह्यत्र विरुद्धसमावेशोपपादनविचारः प्रकृतः । तस्योत्तरत्र प्रकृतमात्रमवशिष्यत इत्यादिना करिष्यमाणत्वात् द्वितीयाध्यायगीताभाष्ये तु प्रकारान्तरेण विरोधपरिहार इति तत्र भवदुक्तवाक्योपन्यासस्यार्थवत्त्वं अविरोधेनैवेति योजितस्यावधारणार्थचब्दस्यार्थमाह मूले **न पुनरिति** । अर्जुनादीत्यादिपदेन वसुदेवदेवक्यादि सङ्ग्रहः । **आद्येऽपीति** । प्रमाणाभावादित्याद्येऽपीत्यर्थः । **महीयानित्यादेरिति** । अत्र मूले मध्यमपरिमाणमप्युपलक्षणयाभिप्रेतमिति दर्शयितुं तत्साधकस्य भाष्योदाहृतस्य मध्यमोऽमध्यम इति प्रमाणस्य सङ्ग्रह्यादिपदोपपादनं एकदामबद्ध वेत्यादि उलूखल इति शेषः । 'गोपिकोलूखले दाम्ना बबन्ध प्रकृतं यथे'त्यादि भागवते तथैवोक्तेः । **अनेकदामेति** । तत्रैव द्व्यङ्गुलोनमभूदित्युक्तेरनेकदामभिर्गोपिकया बन्धार्थं यत्नकरणेऽपि तदबद्धत्वमेवास्तीति ज्ञेयम् । यद्यपि प्रथमतोऽनेकदामाबद्धत्वदर्शनं पश्चादेकदामाबद्धत्वदर्शनमिति क्रमानुसारेण तथैव निर्देष्टुमुचितं तथाप्यणुत्वमहत्वेति निर्देशक्रमस्य मूले सत्त्वात्तदनुसारेण विधिरूपत्वेन प्राधान्यं चाश्रित्यायव्यत्यासेन निर्देश इति न दोषः कार्यमेवेति भगवानणुत्वपरिमाणवान् तत्कार्यैकदामबद्धत्वात् प्राकृतकृतान्यायबालकवत् तथा महत्त्वपरिमाणवान् तत्कार्यनिकदामाबद्धत्ववत्वात् मेर्वादिपर्वतादिवदित्यनुमानप्रकारो ज्ञेयः । तत्र प्रयोजकताशङ्कावारणायोक्तं **कार्यस्य चेत्यादि** । **अणुत्वे वेति** । एतच्च प्रीतप्रायस्य जननीसुतस्य रुचितं मितं मुखं खरोदसीत्यादि भागवते स्फुटम् । एवं गीतास्थविश्वरूपाध्यायोक्तप्रकारेणादिपदोक्तमर्जुनप्रत्यक्षमपि मध्यमपरिमाणे तथाविधं ज्ञेयम् । **आद्येऽपीति** । प्रमाणेन विरोध इत्याद्येऽपीत्यर्थः । द्रव्यत्वादेरित्यापदार्थमाह **पदार्थत्वाद्वेति** । **प्रत्यक्षादीति** । आदिपदेनाणोरणीयानित्यादिना प्रागुक्तागमानुमानपरिग्रहः ।

**स०व्र०**— **यशोदादिप्रत्यक्षमिति** । दामबन्धनसमये अन्येषाम् अपि प्रत्यक्षमादिशब्देन ग्राह्यम् । एतावता कथं पूर्वपक्ष्युक्तपर्युदासपक्षानुपपत्तिपरिहार इत्यतः विरुद्धवद्भातमित्यारभ्य सन्त्यस्थूलादिकानि च इत्यन्तस्य भाष्यस्य तात्पर्यमाह **अयमभिसन्धिरित्यादिना** । **उभयकार्यदर्शनानुमानस्येति** । वत्सपाशकान्तरङ्गे





तत्वबहुदामानन्तर्गतत्वमित्याद्युभयकार्यदर्शनानुमानस्येत्यर्थः । ननु विरुद्धपरिमाणस्यागमस्याभावेऽपि परमात्मा परिमाणद्वयोपेतो न द्रव्यत्वात् । घटादिवदिति अनुमानं भविष्यतीत्यत आह **द्रव्यत्वादेरिति** ।

**विठ्ठल०**— मूलगतश्च शब्दोऽविरोधेनैवेति व्याख्यातः तद्व्यावृत्त्यमाह **न पुनरिति** । गवां विन्दत इति व्युत्पत्त्या गोविन्दशब्दस्य कृष्णपरतायाः गोविन्दमेनमभिध्येत्यादिना सिद्धत्वात् तदभिप्रायेणाह **गोविन्द इत्यनेनेति** । **यशोदेति** । तदुक्तं सन्न्यायरत्नावल्याम् । दृष्टश्चैवंविधः प्रभावो यशोदया गोविन्दे । तथाहि । भागवतवचनतया यस्य जननीसुतस्य रुचिरस्मितं मुखं लालयती राजन् जृंभतो ददृशे इदं खं रोदसीत्यादि कथमनेन व्याहतिपरिहार इत्यत आह **अयमभिसन्धिरिति** । **उभयकार्यदर्शनेति** । एकस्मिन् अणुत्वकार्यवित्सदामबद्धत्वमहत्वकार्यदामसंचयात् बद्धत्वदर्शनानुमानस्येत्यर्थः । ननु कथं प्रमाणाभावः ब्रह्म न परिमाणद्वयोपेतं द्रव्यत्वाद्धटवदिति विपरीतप्रमाणस्य सत्त्वादित्यत आह **द्रव्यत्वादेरिति** ।

**चषकः**— **यशोदादिप्रत्यक्षमिति** । आदिपदमर्जुनादिसङ्ग्राहकम् अणुत्वमहत्वयौगपधे यशोदादिप्रत्यक्षं प्रमाणमित्यर्थः । **उभयकार्यदर्शनमिति** । अणुत्वकार्यस्यैकदामबद्धत्वस्य महत्वकार्यस्यानेकदामबद्धत्वस्य च ब्रह्मणि सत्वात्स्वस्वकारणीभूतपरिमाणमन्तरेण न तत्कार्यतादृशपरिमाणद्वयवैशिष्ट्ये तत्कार्यमेव लिङ्गमिति भावः ।

७ **सु०— किञ्चाकाशस्य परमाणुसंयोगः किमाकाशैकदेशो वर्तते, उताकाश एव । (आद्ये) आद्येऽपि किमेकदेशो नामावयवः, प्रदेशो (प्रदेशभेदो) वा । नाद्यः, अनभ्युपगमात् । द्वितीये किमसावाकाशस्वरूपमेवाथार्थान्तरम् । आद्योऽन्त्येऽन्तर्भवति । द्वितीयोऽप्यभ्युपगमविरुद्धः, औपाधिकाङ्गीकारे त्वात्माश्रयादिकम् । न द्वितीयः, भेरीसंयोगस्यापि तथात्वापत्तेः, तथा च सर्वत्र शब्दोपलब्धिप्रसङ्गात्, अतः परमाणुसंयोगार्थमाकाशोऽणुरभ्युपगन्तव्य इति व्यभिचारश्च । न द्वितीयः, परस्परविरोधासिद्धेः । स हि सर्वत्र सहानवस्थानदर्शनाद्वा कल्पनीयः, उत क्वचित्, किंवा विमतिपदादन्यत्र सर्वत्र । नाद्यः, ब्रह्मणि श्रुत्यादिना सहावस्थानस्य दर्शनात् । न द्वितीयः, आकाशमनसोः परस्परपरिहारेण वर्तमानयोरपि भूतत्वमूर्तत्वयोर्विरोधाभावात्, अन्यथा पृथिव्यादौ तदुभयं न स्यात् । न तृतीयः, नित्यत्वज्ञानत्वयोरशरीरत्वकर्तृत्वयोश्चान्यत्र सर्वत्र सहानवस्थितयोरीश्वरबुद्धावीश्वरे च समावेशाभावप्रसङ्गात् ।**

**परि०**— व्यभिचारं च द्रव्यत्वादेः वक्तुमाकाशेऽप्यणुत्वमहत्त्वे 'महतोऽल्पत्वम् अपि तु व्योमवत्प्राह वेदवित्' इत्यादिवैशेषिकनयानुव्याख्यानं हृदि कृत्वा उपपादयति **किञ्चेत्यादिना** ।





**आद्योऽन्त्य इति** । आकाश एवेति विकल्पदोषेण दुष्टो भविष्यतीति भावः । **अभ्युपगमविरुद्ध इति** । अपसिद्धान्त इत्यर्थः । **आत्माश्रयादिकमिति** । उपाधिखण्डनाद्युक्तदिशेति भावः । **आकाशोऽणुरपीति** । संयोगस्य स्वाभाविकप्रदेशावृत्तित्वात् प्रदेशस्याणुत्वात् प्रदेशप्रदेशिनोर्भेदाभावात् आकाशो अणुरित्युक्तम् । अथ परस्परं विरोध इति कल्पं निराह **न द्वितीय इति** ।

**यादु०**— ईश्वरो न परिमाणद्वयवान् द्रव्यत्वात् इत्यनुमानस्याकाशे व्यभिचारमपि वक्तुमाह **किञ्चाकाशस्येत्यादिना** । **अवयव इति** । तन्त्वादिवद्द्रव्यसमवायिकारणरूप इत्यर्थः । **प्रदेशभेद इति** । पटे हस्तवितस्त्यादिपरिमितः प्रदेशो यादृशः पटैकदेशः तादृशः प्रदेशविशेषो वेत्यर्थः । **अनभ्युपगमादिति** । आकाशकारणीभूतद्रव्यानभ्युपगमादित्यर्थः । **अभ्युपगमविरुद्ध इति** । त्वन्मते आकाशस्य निरंशत्वेन स्वाभाविकप्रदेशाङ्गीकारेऽपसिद्धान्त इत्यर्थः । **आत्माश्रयादिकमिति** । उपाधिः किं स परमाणुरेव अन्यो वा । नाद्यः, आत्माश्रयात् । नान्त्यः, सोऽप्याकाशैकदेशसम्बन्ध्येव तमेकदेशं सम्पादयतीति वाच्यम् । अन्यथाऽतिप्रसङ्गात् । तस्य चैकदेशस्य स्वाभाविकत्वेऽपसिद्धान्तप्रसङ्गेन औपाधिकत्वे तत्राप्युक्तविकल्पप्रसरेणानवस्थाप्रसङ्ग इत्यर्थः । **आकाशोऽणुरिति** । तथा चैकस्मिन्नेवाकाशे परिमाणद्वयप्राप्त्या व्यभिचार इति भावः ।

**वं०प०**— व्यभिचारं च वक्तुमाह **किञ्चेति** । **आकाश एवेति** । सर्वस्मिन्नप्याकाश एवेत्यर्थः । **अन्त्ये** = आकाश एवेति पक्षे । स्वाभाविकप्रदेशानभ्युपगमान्नाकाशैक्यहानिः औपाधिकतदभ्युपगमाच्च संयोगस्य प्रदेशवृत्तित्वं सम्भवति इति चेत्तत्राह **औपाधिकेति** । किं घटाद्युपाधिरसम्बद्ध आकाशभेदकः, उत सम्बद्धः । आद्येऽतिप्रसङ्गः । द्वितीये स उपाधिसम्बन्धः सर्वाकाशवर्ती, आकाशैकदेशवर्ती वा । नाद्यः, अभेदकत्वप्रसङ्गात् सर्वस्यैवोपाधिना ग्रस्तत्वात् । द्वितीये एकदेशस्यौपाधिकत्वात्सोऽप्यौपाधिकेनैव प्रदेशेन सम्बध्यत इति वाच्यम् । तत्रापि स एवोपाधिरन्यो वेत्यादि विकल्पापत्त्याऽऽत्माश्रयानवस्थादिकं स्यादिति भावः । **न द्वितीय इति** । उताकाश एवेति द्वितीयः पक्षो नेत्यर्थः । **भेरीति** । यथा परमाणुसंयोग आकाश एव वर्तते । सर्वत्राकाशे तिष्ठतीति यावत् । तथा भेरीसंयोगोऽपि सर्वत्राकाशे स्यादित्यर्थः । इष्टापत्तिरिति चेत्तत्राह **तथा चेति** । **शब्देति** । भेरीसंयोगकार्यभूतशब्देत्यर्थः । असमवायिकारणस्य सर्वत्र सत्त्वादिति भावः । **सः** विरोधः । **सर्वत्र** ईश्वरेऽन्यत्र चेत्यर्थः । **अणुरपीति** । स्वाभाविकाणुप्रदेशवानित्यर्थः । क्वचित् सहानवस्थानदर्शनाद्वा कल्पनीय इत्यर्थः । **विमतीति** । विप्रतिपत्तिविषयीभूतेश्वरादन्यत्र सहानवस्थानदर्शनाद्वा कल्पनीय इत्यर्थः । **अन्यथा** विरोधाङ्गीकारे **तदुभयं** भूतत्वमूर्तत्वोभयसमावेश इत्यर्थः ।

**आनन्दः**— उक्तप्रमाणविरुद्धत्वेन अणोरणीयानित्याद्युक्तं प्रमाणविरुद्धत्वेन नभः न वक्री जडत्वादित्याद्यनुमानविरुद्धत्वेन मृदब्रवीदित्यादिवाक्यानां अभिमानदेवतापरत्वमिवात्राप्युक्तानुमानविरुद्धत्वेन श्रुतेरेवार्थान्तरं वर्णनीयमित्यत आह **किञ्चेति** । **अनभ्युपगमादिति** । सावयवत्वेऽनित्यत्वं स्यादिति भावः । **अन्त्ये** आकाश





एवेत्यन्ते । औपाधिकः प्रदेशो भेदोऽङ्गीक्रियत इत्यत आह **औपाधिकेति** । उपाधेरसम्बन्ध्यभेदकत्वेऽतिप्रसङ्गात् । सम्बन्ध्यैव भेदक इति वक्तव्यम् । स सम्बन्धः किमेकदेशे वा सर्वदेशे वा तथा सति सर्वस्यैवाकाशस्यौपाधिना ग्रस्तत्वात्केन सह भेदं कुर्यात् । आद्येऽप्येकदेशः किं स्वाभाविक औपाधिको वेति वक्तव्यम् । नाद्योऽनभ्युपगमात् । द्वितीये किं स्वेनैव कृते एकदेशे स्वयं सम्बन्ध्य भेदं करोति उतोपाध्यन्तरकृते । नाद्यः । तथा सति स्वस्मिन्नपि स्वस्यावस्थानं प्रत्यात्माश्रयात् । द्वितीये सोऽप्युपाधिः सम्बध्यैव भेदं करोति स सम्बन्धः पुनरेकदेशे स एकदेशोऽपि पुनरौपाधिकः । अत्रोपाधिद्वयापेक्षायां अन्योन्याश्रयः । तत्परम्परायान्तो(?)ऽनवस्थेत्यर्थः । **तथात्वापत्तेरिति** । सर्वस्मिन्नाकाशः स्यादित्यर्थः । ततः किमित्यत आह **तथा चेति** । विभुकार्याणां असमवायिदेशे सत्त्वमिति नियमादिति भावः । **अन्यथेति** । सति विरोध इत्यर्थः ।

**कं०रा०— उताकाश एवेति** । कृत्स्नाकाश एवेत्यर्थः । **आद्य इति** । परमाणुसंयोगाधिकरणाकाशप्रदेशविशेष आकाशस्वरूपमेवेत्याद्यः पक्षः परमाणुसंयोगः कृत्स्नाकाशवृत्तिरित्यन्त्यपक्षेऽन्तर्भवति । तथा च अन्त्यपक्षे वक्ष्यमाणदूषणेनैव स दूषितो भविष्यतीति भावः । नन्वर्थान्तरपदेनौपाधिकप्रदेशविशेषस्य विवक्षितत्वान्नाभ्युपगमविरोध इत्यत आह **औपाधिकेति** । आकाशे परमाणुसंयोगाधिकरणत्वेनौपाधिकप्रदेशविशेषाङ्गीकारे स उपाधिर्यदि परमाणुरेव तदाऽऽत्माश्रयः । यद्यन्यस्तथा तत्संयोगार्थं परमाणुरूपोपाधिकृतप्रदेशविशेषाङ्गीकारेऽन्योन्याश्रयः । उपाध्यन्तरकृतप्रदेशविशेषाङ्गीकारे चोपाध्यन्तरसंयोगस्य परमाणुरूपोपाधिकृतप्रदेशविशेषवृत्तित्वे चक्रकम् । उपाध्यन्तरसंयोगस्योपाध्यन्तरकृतप्रदेशविशेषवृत्तित्वम् । तथा तत्संयोगस्याप्युपाध्यन्तरकृतप्रदेशविशेषवृत्तित्वम् । एवं तस्य तस्यापीत्यङ्गीकारेऽनवस्थेत्यर्थः । **तथात्वापत्तेरिति** । कृत्स्नाकाशवृत्तित्वापत्तेरित्यर्थः । इष्टापत्तिमाशङ्क्याह **तथा चेति** । **व्यभिचार इति** । द्रव्यत्वादेरिति शेषः । **परस्परेति** । अणुत्वमहत्त्वयोः परस्परविरोधासिद्धेरित्यर्थः । **स हीति** । अणुत्वमहत्त्वयोः परस्परविरोधो हि सर्वत्र सहानवस्थानदर्शनाद्वा कल्पनीयः । किंवा क्वचित्सहानवस्थानदर्शनात्कल्पनीयः । किंवा विमतिविषयादन्यत्र सहानवस्थानदर्शनात्कल्पनीय इत्यर्थः । **श्रुत्यादिनेति** । अणोरणीयान्महतो महीयानिति श्रुत्यादिनेत्यर्थः ।

**श्रीनिधि०— द्वितीयोऽप्यभ्युपगमविरुद्धमिति** । आकाशे अर्थान्तररूपप्रदेशस्य तैरनङ्गीकारादिति भावः । **औपाधिकानङ्गीकारे तु आत्माश्रयादिकमिति** । उपाधिः सम्बन्ध एव प्रदेशभेदसम्पादक इति वक्तव्यम् । अन्यथातिप्रसङ्गात् । तत्सम्बन्धश्च किमाकाशैकदेश एव वर्तते उताकाश एव एवेत्यादिविकल्पप्रसरणात् (औपाधिकप्रदेशो सम्बन्ध इति वक्तव्यम् ?) एवं च स एवोपाधिश्चेत् आत्माश्रयः । उपाध्यन्तरमादाय परस्परं सम्बन्धघटकत्वाङ्गीकारे अन्योन्याश्रयः । तत्राप्यन्यान्यस्याङ्गीकारे अनवस्थेति विवेकः । अत एव न मीमांसावैयर्थ्यमिति वाक्यव्यवस्थार्थत्वादेवेति भावः ।

**शे०वा०—** आकाशे द्रव्यत्वादेर्व्यभिचारश्चेत्याह **किं चेति** । अत्र किञ्चेत्ययं निपातोऽन्यार्थकः । व्यभिचारश्चेत्यत्रत्यचशब्दश्चात्र सम्बन्धनीयः । तथा च किञ्च चेत्यस्यान्यच्चेत्यर्थलाभान्न व्यभिचारश्चेत्युत्तर-

वाक्यस्थचशब्दवैयर्थ्यमिति ध्येयम् । **अवयव इति** । तन्त्वादिवद् द्रव्यसमवायिकारणरूप इत्यर्थः । **अनभ्युपगमादिति** । आकाशसमवायिकारणीभूतद्रव्यानभ्युपगमादित्यर्थः । **आद्य इति** । आकाशस्वरूपमेवेति, आद्यः, आकाशो वर्तत इति द्वितीयेऽन्तर्भवतीत्यर्थः । तथाच तत्पक्षोक्तदोषेणैवायमपि पक्षो दूषित इति भावः । अर्थान्तरप्रदेश इति द्वितीयेऽपि, स किं स्वाभाविकः किं वौपाधिक, इति विकल्पं मनसि निधायाद्यं दूषयति **द्वितीयोऽभ्युपगमविरुद्ध इति** । आकाशनिरंशतायाः त्वत्सिद्धान्तत्वेन स्वाभाविकप्रदेशाङ्गीकारेऽपसिद्धान्त इति भावः । प्रदेश औपाधिक इति द्वितीयेऽपि, न तावदौपाधिकत्वमुपाधिगम्यत्वमिति शक्यते वक्तुम् । तथा सति प्रदेशानां स्वाभाविकत्वप्रसङ्गेनापसिद्धान्तापातात् । किन्तूपाधिजन्यत्वमेव । तत्र किं परमाणुरेवोपाधिः तदतिरिक्तो वा । आद्येऽपि न तावदसम्बद्धस्य परमाणोर्जनकत्वं सम्भवति । तथा सति काश्मीरस्थमहारजनस्य केरलदेशवर्तिवाससोऽवच्छेदकत्वप्रसङ्गात् । अतः सम्बद्धस्यैव तस्य जनकत्वमभ्युपेयम् । तत्रापि न परमाणोः सर्वदेशसम्बद्धस्य भेदकत्वं सम्भवति । तथा सति कृत्स्नस्यैवोपाधिनैव ग्रस्तत्वेन उपाधेराकाशभेदकत्वाभाव-प्रसङ्गात् । तस्मादेकदेशेन सम्बद्धस्यैव परमाणोराकाशभेदकत्वं वाच्यमित्याकाशैकदेशे परमाणुसंयोगोपपादक-त्वेनाकाशैकदेशस्यैव परमाणुसंयोगापेक्षणादात्माश्रयत्वम् । न द्वितीयः । उपाध्यन्तरस्योक्तरीत्याऽसम्बद्धस्य भेदकत्वेऽतिप्रसङ्गात्सर्वदेशसम्बद्धत्वे च भेदकत्वायोगादेकदेशसम्बद्धत्वमेव वाच्यम् । तस्य चैकदेशस्य स्वाभाविकत्वेऽपसिद्धान्तात् । औपाधिकत्वेऽपि तद्गम्यत्वाभिप्राये उक्तदोषानतिवृत्तेः तज्जन्यत्वेऽपि स्वजन्यत्वे उक्तरीत्याऽऽत्माश्रयप्रसङ्गात् । पूर्वोपाधिजन्यत्वे चान्योन्याश्रयप्रसङ्गात् । उपाध्यन्तरजन्यत्वे च तस्यापि पूर्वोपाधिजन्यत्वे चक्रकप्रसङ्गात् उपाध्यन्तरजन्यत्वे तस्याप्युपाध्यन्तरस्योपाध्यन्तरकृतैकदेशसम्बद्धस्यैव भेदकत्वमित्यनवस्था स्यादित्याशयेनाह **औपाधिकेति** । **भेरीसंयोगस्येति** । भेरीशब्दासमवायिकारणस्य हन्यमानभेर्याकाशसंयोगस्येत्यर्थः । **तथात्वापत्तेरिति** । कृत्स्नाकाशवृत्तित्वापत्तेरित्यर्थः । अस्तु भेर्याकाश-संयोगस्य कृत्स्नाकाशवृत्तित्वं किं तावतेत्यत आह **तथा चेति** । त्वन्मते जन्यविभुविशेषगुणानां देशनियम-स्यासमवायिकारणकृतत्वात् भेर्याकाशसंयोगस्य कृत्स्नाकाशवृत्तित्वे आद्य एव भेरीशब्दः कृत्स्नव्यापीति, तस्य सर्वत्रोपलब्धिप्रसङ्गादित्यर्थः । उपलक्षणं चैतत् । वीचीतरङ्गन्यायेन शब्दपरम्परोत्पत्तिप्रक्रियाभङ्गश्च स्यादित्यपि द्रष्टव्यम् । न च संयोगस्य स्वात्यन्ताभावासमानाधिकरण्यादयमदोष इति वाच्यम् । अणुत्वमहत्त्वयोरसामाना-धिकरण्यनियमे भावाभावयोः सुतरां सामानाधिकरण्यायोगात् । किञ्च भेर्यवष्टब्धप्रदेशे संयोगवत् तदत्यन्ता-भावस्याप्यङ्गीकारेऽन्यत्र च तदत्यन्ताभाववत् संयोगस्यापि धीप्रसङ्गादित्यभिप्रायात् । **अत इति** । सूच्यग्रादिना पर्वतादेः संयोगस्य सूच्यग्रसमपरिमाणपर्वतादिप्रदेशवृत्तित्वदर्शनेन संयोगस्य प्रतिसम्बन्धितुल्यपरिमाणतत्त-त्प्रदेशवृत्तित्वसिद्धाऽऽकाशे परमाणुसंयोगस्य प्रतिसम्बन्धिभूतपरमाणुतुल्यपरिमाणाकाशादिप्रदेशवृत्तित्वस्यैव वाच्यतया परमाणुसंयोगार्थमाकाशेऽणुत्वं परिमाणमपि वाच्यमेवेति परिमाणद्वयवत्याकाशे वर्तमानतया द्रव्य-त्वादेर्व्यभिचार इत्याशयः ।

नन्वणुत्वमहत्त्वादीनां परस्परपरिहारेणैव वृत्तेः कथं न परस्परविरोध इत्यत आह **स हीति** । **श्रुत्या-दिनेति** । 'अणोरणीयान्' इत्यादिश्रुत्या उभयकार्यरूपानुमानेन यशोदादिप्रत्यक्षेण चेत्यर्थः । **आकाशमनसोरिति** ।





मूर्तत्वपरिहारेण भूतत्वस्य, आकाशे भूतत्वपरिहारेण मूर्तत्वस्य, मनसि वृत्त्या भूतत्वमूर्तत्वयोरपि सहानवस्थानेन क्वचित्सहानवस्थानदर्शनस्य विरोधकल्पकत्वे, भूतत्वमूर्तत्वयोरपि स स्यादिति भावः । ननु च तयोरपि विरोधस्यैवाभ्युपगमादिष्टापादनमेतदित्यत आह **अन्यथेति** । **नित्यत्वज्ञानत्वयोरिति** । यद्यपीश्वरज्ञानमनित्यमिति वैशेषिकाणां मतम् । अग्रे यद्वक्ष्यत्यात्रेयस्य ज्ञानानित्यत्वमपीति । तथाऽपि न तन्मुख्यमतमिति युक्तमीश्वरज्ञाने ज्ञानत्वनित्यत्वयोः समावेशाभावापादनमिति द्रष्टव्यम् । यद्वा । एतदस्वरसादेवाह **अशरीरत्वकर्तृत्वयोरिति** । **अन्यत्रेति** । विमतिपदादीश्वरज्ञानादीश्वराच्चान्यत्रेत्यर्थः ।

**वा०र०—** किञ्चाकाशस्येत्यारभ्याभ्युपगन्तव्यमिति व्यभिचारश्चेत्येतद्ग्रन्थप्रतिपाद्यं दूषणमेकमेवेति तद्दूषणस्य पूर्वोक्तदूषणेन समुच्चयस्य प्रथमशब्देनैव सिद्धेत्यस्य तस्य वैय्यर्थ्यमित्यतो योजयति **अत्र किञ्चेत्ययमिति** । **तन्त्वादिवदितीति** । द्रव्यसमवायिकारणमवयव इति परैरवयवलक्षणाभिधानादिति भावः । **तत्पक्षोक्तेति** । भेरीसंयोगस्यापीत्यादिना वक्ष्यमाणेत्यर्थः । **प्रदेश इति** । द्वितीयेऽपीत्यादौ तत्र तत्राकाशपदं संयोज्यमिति ज्ञेयम् । **स्वाभाविकत्वेति** । सिद्धस्यैव पटे हस्तवितस्त्यादिप्रदेशस्य महारजनाद्युपाधिनावगमादिति भावः । केरलदेशवर्तिवास इति कर्मणि चेयं षष्ठी वाससो यदवच्छेदकं तस्य भावस्तत्त्वं वासो निरूपितमवच्छेदकत्वमिति यावदित्यर्थो ज्ञेयः । कृत्स्नस्यैकोपाधिनैवेति पाठः मूलकोशादुपयोगाच्च । कृत्स्नस्यैवेति तु लेखकागतः । आकाशैकदेशस्य यः परमाणुसंयोगस्तस्यैवेत्येवकारयोजना । **स्वजन्यत्व इति** । वक्ष्यति च परमाणुव्यतिरिक्तोपाध्यभावादिति भावः । चन्द्रिकानुसारेण व्याचष्टे **भेरीशब्देति** । एवं चन्द्रिकानुसारो ज्ञेयः । उत्तरत्रापि तत्र तत्र जन्यविभुविशेषेति । एतच्च उपपादयिष्यते **किञ्च भेरीति** । किञ्चेत्यनन्तरं संयोगस्य स्वात्यन्ताभावसामानाधिकरण्यं चेदङ्गीक्रियत इति शेषः । केचित्तु प्रसङ्गादित्यत्र किञ्चेत्यस्य योजनया प्रसङ्गाच्चेति हेतोः न च वाक्यमिति पूर्वेणान्वयमाहुः । कथं न परस्परविरोधेत्यतःपरं सिद्धिरिति पूरणीयम् । यद्वक्ष्यति अत्रेयस्येति नित्यज्ञानप्रयत्नेच्छमित्येतदनुभाष्यकारीयवैशेषिकमतोपन्यासनिरूपणावसरेऽस्य मुख्यमतत्वाभावान्नोपन्यस्तमिदं मतमित्यस्यापिपदेन प्रागुक्तार्थसमुच्चायकेऽभिधानादिति भावः । **यद्वैतदस्वरसादेवेति** । मयोद्भावितास्वरसस्य न केवलं मदुक्तरीत्या परिहारः किन्तु तदस्वरसं मनसि निधायोदाहरणान्तरं मूले उक्तमित्यपि परिहारः इति समुच्चयाशयेन यद्वेत्युक्तम् । एतेन स्वयं प्रकारान्तराकथनाद्यद्वेत्युक्तमयुक्तमिति परास्तम् । एवमेवंजातीयके सर्वत्र वृक्षादि सावयवेति वृक्षादिरूपं यत्सावयवं सावयववृक्षादीति योजना । अत एवोत्तरवाक्ये सावयववृक्षादीत्येव व्यवहार इति ज्ञेयम् ।

**स०व्र०—** अनुमानस्य व्यभिचारमप्याह **किञ्चेति** । किञ्चेत्ययं निपातसमुदायः । व्यभिचारश्चेत्यत्रत्यः चशब्दः अत्र सम्बध्यते तथाचान्यच्चेत्यर्थः । तेन किञ्चेत्यनेनैव समुच्चयस्य लब्धत्वेन व्यभिचारश्चेति चशब्दो व्यर्थ इति चोद्यानवकाशः । **आद्योऽन्त इति** । उताकाशेत्यस्मिन्नित्यर्थः । ननु स्वाभाविकप्रदेशानभ्युपगमान्नाकाशैक्यहानिः औपाधिकतदभ्युपगमाच्च संयोगस्य प्रदेशवृत्तित्वं सम्भवतीति तत्राह **औपाधिकेति** । तत्रेद-





माकूतम् । उपाधिः किं सम्बद्धः, प्रदेशकारक उतासम्बद्धः । अन्त्येऽतिप्रसङ्गः । आद्येऽपि किं एकदेशसम्बद्धः । उत सर्वदेशसम्बद्धः । द्वितीये प्रदेशकारकत्वं न स्यात् । आद्ये किं एकदेशः सः स्वाभाविकः उतोपाधिकः । आद्येऽपसिद्धान्तः द्वितीये किं अनेनौपाधिना कृतः उतोपाध्यन्तरेण आद्ये आत्माश्रयः द्वितीये किं तदुपाध्यन्तरं एतदुपाधिकृतप्रदेशसम्बद्धं सत् भेदकं उतोपाध्यन्तरकृतप्रदेशसम्बद्धम् । आद्ये चक्रकं द्वितीये अनवस्थेति ।

अणुत्वमहत्वादीनां परस्परपरिहारेण वर्तमानानां कथं परस्परविरोधासिद्धिरित्यत आह **स हीति** । सहानवस्थानदर्शनात् । कल्पनीयो हि स विरोधः किं क्वचित् किं वा सर्वत्र विमतिपदादन्यत्रेति योजना ।

**विठ्ठल०**— अस्यानुमानस्याकाशे व्यभिचारं वक्तुमाह **किञ्चेति** । **आकाश एव** समस्ताकाश एवेत्यर्थः । **अवयव इति** । तन्त्वादिवत् द्रव्यसमवायिकारणरूप इत्यर्थः । **प्रदेशभेद इति** । हस्तवितस्त्यादिरूपः अवयववत्वे नित्यताप्रसङ्गेनानभ्युपगमादित्यर्थः । **आद्य इति** । आकाशस्वरूपमेवेत्याद्यः पक्षः परमाणुसंयोगः समस्ताकाशनिष्ठ इत्यन्त्यपक्षेऽन्तर्भवतीत्यर्थः । **अभ्युपगमविरुद्ध इति** । त्वन्मते आकाशस्य निरंशत्वेन स्वाभाविकप्रदेशा-न्तराङ्गीकारेऽपसिद्धान्त इत्यर्थः । **आत्माश्रयेति** । न चेदुपाधिसम्बन्ध इत्याद्युपाधिखण्डनटीकायामुक्तरीत्या आपादिकमित्यर्थः । **न द्वितीय इति** । उताकाश एवेति द्वितीय इत्यर्थः । **व्यभिचारश्चेति** । इत्युक्तरीत्या-काशस्य स्वाभाविकाणुप्रदेशवत्वस्याङ्गीकर्तव्यत्वात् प्रदेशस्य च प्रागुक्तरीत्या भिन्नत्वायोगात् प्रदेशप्रदेशिनो-रभेदेन द्रव्यत्ववतोऽप्याकाशस्य परिमाणद्वयोपेततया व्यभिचार इत्यर्थः । परस्परविरोध इति पक्षं निराह **न द्वितीय इति** । विमतिपदादिवादस्थात् अन्यथोद्भूतत्वमूर्तत्वयोर्विरोधाङ्गीकार इत्यर्थः ।

**चषकः**— ईश्वरपक्षकतादृशपरिमाणद्वयराहित्यसाध्यकद्रव्यत्वहेतुकानुमानस्याकाशेऽनैकान्त्यमभि-धित्सते **किञ्चेति** । **आकाश एव** = कृत्स्नाकाश एव । **अवयवः** = द्रव्यसमवायिकारणरूपः । **प्रदेशभेदो वेति** । हस्तवितस्त्यादिपरिमितः पटे यादृशः, प्रदेशस्तादृशप्रदेशविशेषो वेत्यर्थः । **अनभ्युपगमात्** । आकाशकारणी-भूतद्रव्यानभ्युपगमात् । **अभ्युपगमविरुद्धः** = निसर्गेणाकाशस्यानंशत्वाङ्गीकर्तृस्वाचार्याभ्युपगमविरुद्धः । **आत्माश्रयादिकमिति** । आदिपदमनवस्थापरिग्राहकम् । तत्परमाणुरेवोपाधित्वेनाभिप्रेयते तदितरो वा । आद्ये आत्माश्रयः । द्वितीये सोऽप्यतिप्रसङ्गभङ्गाय तदेकदेशं सम्बध्नाति इति तस्य औपाधिकतायां च तत्राप्युक्त-वितर्कप्रसरेणानवस्था प्रसज्यत इत्यर्थः । **तथात्वापत्तेः** = कृत्स्नाकाशगतत्वापत्तेः । **अन्यधर्मस्य** = अवयवि-धर्मस्य । **अन्यधर्मत्वे** = अवयवधर्मत्वे । **अतिप्रसङ्गात्** = घटधर्मस्यापि पटधर्मत्वप्रसङ्गात् । **वाक्य-व्यवस्थेति** । होमादौ विरुद्धोदयानुदयकालीनत्वस्यापि प्रामाणिकतयोपेतव्यत्वापत्त्या उदितानुदितहोमादि-वाक्यव्यवस्थाऽप्यधिकारिभेदेन अनाश्रयणीया प्रसज्येतेत्यर्थः । **प्रमाणस्वरूपेति** । उदितादिवाक्यं नैकत्र तादृशकालद्वयादिविधायकं किन्तु व्यवस्थयैवेति मीमांसया— 'अणोरणीयानि'त्यादिवाक्यं तु तामन्तरेणैव प्रत्यक्षसंवादेन तादृशपरिमाणद्वयविधायकमिति निर्णीतमित्यर्थः । **अत एव** = प्रमाणस्वरूपनिर्णयौप-यिकत्वादेव ।





८ **सु०— किञ्च । संयोगादीनां प्रदेशवृत्तित्वमङ्गीकुर्वता न तावत्प्रदेशवृत्तित्वमवयववृत्तित्वमङ्गीकर्तुमुचितम्, आकाशादीनां तदभावात्, अन्यधर्मस्यान्यवृत्तित्वाभ्युपगमेऽतिप्रसङ्गाच्च; किन्तु स्वात्यन्ताभावसमानाधिकरणत्वमेव वक्तव्यम् । तथा च भावाभावयोरन्यत्र सर्वत्र सहानवस्थितयोः कथं विरोधो न भवेत् । दर्शनादिति चेत्समं प्रकृतेऽपि । तस्मादन्यत्र सर्वत्र सहानवस्थितं कथं नाम सहावतिष्ठत इत्येवं प्रश्नमात्रमवशिष्यते । तत्र वस्तुस्वभाव एव तादृश इति परिहारः । न चैवमतिप्रसङ्गः, प्रमाणभावाभावाभ्यां तद्व्युदासात् । एवं सति वाक्यव्यवस्था न क्वाप्याश्रयणीयेति चेन्न, प्रमाणस्वरूपावधारणे त्वेवमेतदित्यङ्गीकारात् । अत एव न मीमांसावैयर्थ्यमिति ।**

**परि०— अन्यधर्मस्यान्यवृत्तित्वेऽतिप्रसङ्गाच्चेति** । प्रदेशपक्षेऽपि न्यायमते प्रदेशिनोः भेदादिति भावः । ननु घटादावप्यन्यत्र अदृष्टविरुद्धधर्मा अङ्गीकार्याः । वस्तुस्वभावस्य तादृशत्वेन विरोधपरिहारसम्भवादित्याशङ्क्य निराह **न चैवमिति** । **एवं सतीति** । वस्तुस्वभावत्वेनैव विरोधपरिहारे सतीत्यर्थः । **वाक्यव्यवस्थेति** । सगुणनिर्गुणवाक्य-निष्क्रियसक्रियवाक्य-जगत्सत्यत्वासत्यत्वादिवाक्यानां भिन्नविषयत्वादिना व्यवस्था न स्यात् । एकविषयत्वेऽपि वस्तुस्वभावस्यैव तादृशत्वादिति विरोधपरिहारस्य सुवचत्वादिति भावः । **प्रमाणस्वरूपेति** । अस्य प्रमाणस्यैतदेव तात्पर्यं नान्यदिति निर्धारणे सत्येव वस्तुस्वभावानुसरणमित्यर्थः । **अत एवेति** । प्रमाणस्वरूपावधारणार्थत्वादेव इत्यर्थः ।

**यादु०— अन्यधर्मस्येति** । तथा च तार्किकमतेऽवयवस्यावयवितोऽन्यत्वेन संयोगस्यावयववृत्तित्वेऽवयविधर्मत्वं न स्यादिति भावः । **वाक्यव्यवस्थेति** । उदिते होतव्यमनुदिते होतव्यमित्यादौ अधिकारभेदादिना व्यवस्था नाश्रयणीया, किन्तु होमादौ विरुद्धं कालद्वयादिकमपि प्रामाणिकत्वादङ्गीकार्यं स्यादित्यर्थः । यद्वा 'प्राण एवाधस्तात्प्राण उपदिष्टात्प्राणो मध्यतः प्राणः सर्वतः । प्राणो वाऽणुः' इति मुख्यप्राणस्यापि व्याप्त्यणुप्रतिपादकवाक्ययोर्व्यवस्था अणुश्चेत्यत्र रूपभेदेन नाश्रयणीया किन्तु प्राणेऽपि विरुद्धं परिमाणद्वयं प्रामाणिकत्वादङ्गीकार्यं स्यादित्यर्थः । **प्रमाणस्वरूपेति** । उदितहोमादिवाक्यं नैकत्र विरुद्धकालद्वयादिविधायकं, किन्तु व्यवस्थयैवेति मीमांसया निर्णीतम् । अणोरणीयानित्यादिवाक्यं तु व्यवस्थां विना नैकत्रैव प्रमाणद्वयविधायकमिति प्रत्यक्षादिसंवादेनैव निर्णीतमित्यर्थः । **अत एवेति** । प्रमाणस्वरूपनिर्णयार्थमावश्यकत्वादेवेत्यर्थः ।

**वं०प०— भावाभावयोः** संयोगतदत्यन्ताभावयोः । **सहानवस्थितयोः** । सामानाधिकरण्याङ्गीकार इति शेषः । **दर्शनादिति** । अग्रे संयोगस्य मूले तदभावस्य च दर्शनादित्यर्थः । ननु अस्थूलादीनामविरोधेनैकत्र समावेशे एतन्न्यायेनैव क्वापि विरोधाभावप्रसङ्गाद्भावभेदो न स्यादित्यत आह **न चेति** । **प्रमाणेति** । यत्र विरुद्धतया





प्रतीयमानानामप्येकत्र समावेशो प्रमाणमस्ति, तत्राविरोधः यत्र नास्ति तत्र विरोधः, इत्यङ्गीकारेणातिप्रसङ्ग-व्युदासः सम्भवतीत्यर्थः । नन्वेवं तर्हि 'उदिते होतव्यमनुदिते होतव्यम्' इत्युदितानुदितहोमयोरुभयोरपि एतत्प्रमाणसिद्धत्वेनैवाविरोधात् एकपुरुषविषयकत्वमेव स्यात् । तथा च शाखाभेदेन व्यवस्थाश्रयणं न स्यात् । प्रमाणसिद्धस्यान्यथात्वशङ्काया अभावेन तदविरोधसाधकमीमांसावैयर्थ्यं च स्यादित्याशङ्क्य निषेधति **एवं सतीति** । **प्रमाणेति** । यद्युदिते होतव्यमिति प्रमाणाद्भिन्नमुदितानुदितहोमयोरेकपुरुषविषयकत्वेनाविरोधसाधकं प्रमाणमेतादृशमिति तत्प्रमाणस्वरूपं निश्चितं स्यात्तदा ह्येवमेतत् । भिन्नशाखिविषयत्वेन व्यवस्था नाश्रयणीयेति चोद्यं स्यात् । न च तत्प्रमाणस्वरूपं निश्चितम् । अतो विरुद्धसमवाये एकस्य कर्मणोऽनुष्ठातुमशक्यत्वाद्युक्तं व्यवस्थाश्रयणमित्यर्थः । **अत एवेति** । अविरोधसाधकप्रमास्वरूपस्यानिर्धारणादेवेत्यर्थः । प्रकृते तु भगवतो लोकविलक्षणत्वात्तत्राणुत्वमहत्त्वयोरविरोधेन समावेशघटकम् अणोरणीयानित्यादि प्रमाणस्वरूपं निश्चितमस्तीति तद्वैषम्यमस्तीति न कोऽप्यतिप्रसङ्ग इति भावः ।

**आनन्दः— तदभावादिति** । अवयवाभावादित्यर्थः । अस्तु वा आकाशादीनामवयवाः तथाप्यवयव-वृत्तिधर्मस्यनाकाशवृत्तित्वं सम्भवति । अन्यधर्मस्यान्यत्र वृत्तेरसम्भवात् । तथा सति घटधर्मस्य पटेऽपि वृत्तिः स्यादित्याह **अन्यधर्मस्येति** । **न चैवमतिप्रसङ्ग इति** । गोत्वाश्वत्वयोरपि क्वचित् व्यक्तौ समावेशमङ्गीकृत्य वस्तुस्वभाव एव तादृश इति परिहारः स्यादिति प्रसङ्गो नेत्यर्थः । नन्वेवं तर्हि जीवब्रह्मणोर्भेदोऽपि स्यात् । अभेदोऽपि । न च विरोधः । वस्तुस्वभावस्यैव तादृशत्वात् । उभयत्रापि प्रमाणसद्भावेनातिप्रसङ्गाभावात् । तथा च वाक्यव्यवस्था नाश्रयणीयेति शङ्कते **एवं सतीति** । **प्रमाणेति** । अभेदप्रमाणस्वरूपस्य नावधारणमिति भावः । **अत एवेति** । प्रमाणस्वरूपावधारणार्थत्वादेवेत्यर्थः । तथा च व्यवस्थानाश्रयणनिमित्तप्रसक्तमीमांसा-वैयर्थ्यलक्षणो दोषो नेत्यर्थः ।

**कं०रा०— तदभावादिति** । अवयवाभावादित्यर्थः । **अन्येति** । अवयववृत्तिसंयोगस्यान्यत्रावयविनि वृत्त्यभ्युपगमेऽतिप्रसङ्गाच्चेत्यर्थः । **अतिप्रसङ्ग इति** । अन्यत्र सहानवस्थितयोर्गोत्वाश्वत्वयोरपि क्वचित्सहाव-स्थानप्रसङ्गः । अन्यत्र सहानवस्थितं गोत्वादिकं कथं नाम सहावतिष्ठत इति प्रश्ने वस्तुस्वभाव एव तादृश इति परिहारस्य सुलभत्वादिति भावः । न हि वयं निष्प्रमाणकमणुत्वमहत्त्वयोः सहावस्थानमङ्गीकृत्य अन्यत्र सर्वत्र सहानवस्थितमणुत्वादिकं कथं सहावतिष्ठत इति प्रश्ने वस्तुस्वभाव एव तादृश इति परिहारं ब्रूमः । येनोक्ताति-प्रसङ्गः स्यात् । किं नाम प्रमाणेनाणुत्वादेः सहावस्थाने प्रमिते सति । न च गोत्वादेः सहावस्थानं प्रमितम् । अतो नातिप्रसङ्ग इत्याह **प्रमाणेति** । **एवं सतीति** । प्रमाणसद्भावेनाणुत्वमहत्त्वयोरेकस्मिन् ब्रह्मणि सहाव-स्थानाङ्गीकारे 'यः सर्वज्ञः सर्ववित्' 'साक्षी चेता केवलो निर्गुणश्चे'ति सगुणत्वनिर्गुणत्वयोः ब्रह्मणि सहावस्थाने प्रमाणसद्भावेन तत्र तयोः सहावस्थानस्याङ्गीकार्यत्वावश्यंभावान्निर्गुणवाक्यं हेयसत्त्वादिगुणनिषेधपरमिति व्यवस्था नाश्रयणीया स्यादित्यर्थः । **प्रमाणेनेति** । अणुत्वमहत्त्वोभयकार्यदर्शनरूपन्यायानुसन्धानपूर्वकोभयपरत्वनिश्चय-बलात् अणोरणीयान्महतो महीयानिति प्रमाणेन ब्रह्मणोऽणुत्वमहत्त्वाधारतेत्यत्र सर्वत्र सहानवस्थितमप्यणु-





त्वादिकं ब्रह्मणि सहावतिष्ठते इत्यङ्गीकारात् सगुणनिर्गुणवाक्यस्थले चोभयपरत्वग्राहकन्यायानुसन्धानपूर्वकोभयपरत्वनिश्चयाभावात् । प्रत्युत सगुणज्ञानस्य सफलत्वेन निर्गुणज्ञानस्य तु निष्फलत्वेन सगुणवाक्यस्यैव स्वार्थे तात्पर्यं न निर्गुणवाक्यस्येति निश्चयाच्चोभयाङ्गीकारायोगेन निर्गुणवाक्यस्य हेयसत्त्वादिगुणराहित्यार्थान्तराश्रयणेन वाक्यव्यवस्थैवाङ्गीकार्येति भावः । प्रमाणस्वरूपावधारण इति पाठे अणोरणीयान्महतो महीयानिति प्रमाणस्योभयकार्यदर्शनरूपन्यायानुसन्धानपूर्वकोभयपरत्वावधारणेऽन्यत्र सहानवस्थितमणुत्वादिकं ब्रह्मणि सहावतिष्ठत इत्यङ्गीकारात् । सगुणनिर्गुणवाक्यस्थले च तदभावात् प्रत्युत वैपरीत्याच्चोक्तव्यवस्थैवाश्रयणीयेत्याशयो द्रष्टव्यः । ननु प्रमाणेन प्रतीतिमात्रमलम् । किं तत्परत्वावधारणेनेत्यत आह **अन्यथेति** ।

**शे०वा०**— अणुत्वमहत्त्वयोर्विमतिविषयादन्यत्र परस्परपरिहारेणैव वृत्तिदर्शनेनान्यत्र तयोः सहानवस्थाननियमेऽपि विमतिविषये सहदर्शनान्न तत्र विरोध इत्याशयेन विमतिविषये सहदर्शनस्याविरोधोपपादकत्वं परमुखेनैवानेतुमन्यत्र सहानवस्थानदर्शनादीश्वरेऽणुत्वमहत्त्वयोर्विरोधे भावाभावयोरन्यत्र सहानवस्थानदर्शनात्संयोगतदत्यन्ताभावयोरपि वृक्षे विरोधः स्यादिति प्रतिबन्दीं वक्तुकामः संयोगतदत्यन्ताभावयोरपि असामानाधिकरण्यस्यैव सत्त्वादिष्टापादनमित्याशङ्कापरिहाराय परीत्या तयोः सामानाधिकरण्यं तावदुपपादयति **किञ्चेति** । संयोगस्य प्रदेशवृत्तित्वाङ्गीकारात् तस्य च स्वात्यन्ताभावसामानाधिकरण्यरूपत्वात् संयोगतदत्यन्ताभावयोः सामानाधिकरण्यसिद्धिरिति भावेन कुतः प्रदेशवृत्तित्वस्योक्तप्रकारतेत्यतोऽन्यस्यासम्भवादित्याह **संयोगादीनामिति** । प्रदेशवृत्तित्वं यद्यवयववृत्तित्वं, तर्हि इह पक्षी नेह पक्षीति प्रतीत्या सिद्धस्याकाशनिष्ठपक्षिसंयोगादेः प्रदेशवृत्तित्वं न स्यात् । तत्राकाशावयववृत्तित्वरूपप्रदेशवृत्तित्वस्यायोगात् । आकाशादेरवयवाभावात् । अतो नावयववृत्तित्वं तदित्याह **आकाशादीनामिति** । अङ्गीकृत्य च वृक्षादिसावयववृत्तिसंयोगादेर्वृक्षाद्यवयववृत्तित्वं निरवयवगगनादिवृत्तिसंयोगादेरवयववृत्तित्वाभाव उक्तः । वस्तुतस्तु सावयववृक्षादिवृत्तिसंयोगस्यापि, न वृक्षाद्यवयववृत्तित्वं परेणाङ्गीकर्तुं शक्यमित्याह **अन्यधर्मस्येति** । वृक्षधर्मत्वात्संयोगस्य न तदवयववृत्तित्वं युक्तम् । न चैवं प्रतिवादिमतेऽपि अवयवसंयोगस्य तदनुपपत्तिरविशेषादिति वाच्यम् । तेनावयवावयविनोः अभेदाङ्गीकारेणातिप्रसङ्गपरिहारसम्भवेन तदुपपत्तावपि न त्वन्मते तदुपपत्तिः । त्वयाऽवयवावयविनोर्भेदाभ्युपगमेन अन्यवृत्तेरन्यधर्मत्वायोगात् । अन्यथाऽवयववृत्तिरूपादेरप्यवयविधर्मत्वं स्यादविशेषादिति भावः । माऽस्तु प्रदेशवृत्तित्वस्यावयववृत्तित्वरूपत्वं किं तावतेति पृच्छति **किं त्विति** । प्रतिवादिरीत्या प्रसक्तस्यावयववृत्तित्वस्य निरासेऽन्यस्याप्रसङ्गात् वाद्यभिमतस्वात्यन्ताभावसामानाधिकरण्यस्य सिद्धिरित्याशयेन परिहरति **स्वेति** । एवमनिष्टापादनत्वमुपपाद्येदानीं प्रतिबन्दीमाह **तथा चेति** । कथं नाम सहावतिष्ठतामिति प्रमाणप्रश्नश्चेद्दत्तमुत्तरम् । अथ सम्भावकं किमित्याशयस्तत्राह **तत्रेति** । देशभेदेन कालभेदेन प्रतियोगिभेदेन च विरुद्धद्वयसमावेशदर्शनिन भेदस्य विरोधशान्तिहेतुत्वात् तत्प्रतिनिधिना विशेषेणापि युक्तो विरोधपरिहार इति भावः । आशयमजानानः शङ्कते **न चेति** । **अतिप्रसङ्गः** सर्वज्ञत्वासर्वज्ञत्वादिधर्माणामपि विरोधाभावप्रसङ्गः । स्वभावभेदेन तत्रापि विरोधस्य उत्सादयितुं शक्यत्वात् । तथा च विरुद्धधर्माधिकरणतया भावभेदसाधनमनुपपन्नमित्याशयः । दृष्टिप्रमाणतश्चेति





समयपादीयमनुव्याख्यानं मनसि निधाय समाधत्ते **प्रमाणेति** । न स्वेच्छामात्रेण विरुद्धधर्मद्वयमभ्युपेत्य विशेषेण विरोधाभावोऽभिधीयते येनातिप्रसङ्गः स्यात् । किन्तु प्रमाणेन तदर्थप्राप्तावेवेति प्रमाणेन समुचितस्यैव तस्य विरोधपरिहारकत्वम् । न चातिप्रसङ्गस्थले प्रमाणेन समुचितो विशेषोऽस्तीति नातिप्रसङ्ग इत्याशयः । न प्रमाणसमुचितस्यापि विशेषस्य विरोधशामकत्वं व्यभिचारादित्याशङ्कते **एवं सतीति** । **वाक्येति** । सादित्वानादित्वाणुत्वव्यापकत्वादिप्रतिपादकवाक्येत्यर्थः । **व्यवस्थेति** । अनादित्वश्रुतिर्गौणानादित्वपरेत्यादिव्यवस्थेत्यर्थः । **क्वापीति** । जीवपरमात्माधिभूताधिदैवतादिष्वित्यर्थः । **अनाश्रयणीयेति** । आकाशादीनां प्रमाणद्वयेन सादित्वानादित्वबोधनेन तत्र प्रमाणसमुचितविशेषेणैव विरोधस्योत्सादयितुं शक्यत्वान्न व्यवस्थया प्रयोजनमिति तत्परमीमांसावैयर्थ्यं स्यादिति भावः । यत्र व्यवस्थाऽनाश्रयणेऽपि प्रमाणस्वरूपावधारणमस्ति तत्र प्रमाणसमुचितविशेषेणैव सर्वविरोधपरिहाराद्व्यवस्थाऽनाश्रयणमिष्टमेव । यत्र च न प्रमाणस्वरूपावधारणं, तत्र प्रमाणसमुचितविशेषस्याभावेन तेन विरोधशान्तेरसम्भवात्प्रमाणस्वरूपावधारकत्वेन व्यवस्थाऽऽश्रयणमप्यर्थवदेवेत्याशयेन समाधत्ते **प्रमाणेति** । **अत एवेति** । प्रमाणस्वरूपनिर्णयार्थमवश्यमपेक्षितव्यवस्थोपपादकतया मीमांसाया अर्थवत्त्वादेवेत्यर्थः ।

**वा०र०— भावभेदेति** । जीवेश्वररूपपदार्थभेदेत्यर्थः ।

**स०व्र०—** सावयवेष्वर्थेषु अवयववृत्तित्वे संयोगस्यावयववृत्तित्वं न स्यात् त्वयाऽवयवावयविनोर्भेदाभ्युपगमात् इत्याह **अन्यधर्मस्येति** । नन्वस्थूलत्वादीनामविरोधेनैकत्र समावेशे क्वापि विरोधाभावप्रसङ्गाद्भावभेदो न स्यादित्यत आह **न चेति** । **एवं सतीति** । उदितानुदितहोमयोरपि प्रमाणप्रमितयोरविरोधाध्यवस्थाऽश्रयणं न स्यात् । प्रमाणसिद्धस्यान्यथाभावाभावात् मीमांसापि व्यर्था स्यादिति भावः । **न प्रमाणेति** । विरुद्धसमवाये एकस्य कर्मणोऽनुष्ठातुमशक्यत्वात् श्रुतिस्वरूपस्यैवानवधृतत्वात् व्यवस्था यत्र तत्राव्यर्था मीमांसा भगवतस्तु लोकविलक्षणत्वात् अविरोधेनैव प्रमाणस्वरूपमवधृतानिति भावः । **अत एवेति** । प्रमाणस्वरूपावधारणार्थत्वादेवेत्यर्थः ।

**विठ्ठल०— अन्यधर्मस्येति** । तन्मते अवयवावयविनोरन्यधर्मस्यावयवधर्मस्यावयविनिष्ठत्वाभ्युपगम इत्यर्थः । नन्वेवं तर्हि विष्णौ सदोषित्वनिर्दोषित्वादिकमप्यङ्गीकर्तव्यमित्याशयेन शङ्कां निराह **न चैवमिति** । 'ननु प्राण एवाधस्तात् प्राण उपरिष्टात् प्राणो मध्यतः प्राणः सर्वतः प्राणो वा अणुरि'ति मुख्यप्राणस्यापि व्याप्त्यणुत्वप्रतिपादकवाक्ययोर्विद्यमानत्वात् तस्मिन्नपि विरुद्धपरिमाणद्वयं प्रामाणिकत्वादङ्गीकार्यं स्यात् । तथा च तद्वाक्यव्यवस्थापकाणुश्चेत्यादि मीमांसावैय्यर्थ्यं स्यादित्याशयेन शङ्कते **एवं सतीति** । **स्वरूपेति** । अस्य प्रमाणस्य एतदेव तात्पर्यं नान्यदिति निर्धारण इति भावः ।

**॥ इति विरुद्धैर्लक्षणैर्युतं ब्रह्म इत्युक्त्या प्राप्ता व्याहतत्वशङ्का, तत्परिहारश्च ॥**

**॥ इति 'अस्थूलमनण्वि'ति श्रुत्युक्तानां अस्थूलादिपदानां अणुत्वाद्यभिधायकत्वात् अक्षरं ब्रह्मैवेति उत्तरपक्षः ॥**





**।। अथ च अस्थूलादिपदानां स्थूलत्वादिनिवृत्तिपरत्वात् अपि अक्षरं ब्रह्मैव इति चोत्तरपक्षः ।।**

९ **सु०—** एवं तावदस्थूलादिपदानामणुत्वाद्यभिधायकत्वपक्षमुपादाय श्रुतेर्ब्रह्म-विषयत्वमुपपादितम् । इदानीं स्थूलत्वादिनिवृत्तिपरत्वेऽपि न दोष इत्येवंपरतया सूत्रं व्याचष्टे **अन्येति** ।

**अनु०—** अन्यवस्तुस्वभावानां स्थौल्यादीनामपाकृतिम् ।
नारायणे श्रुतिर्वक्ति न तु तस्यास्वभावताम् ।।

ब्रह्मणोऽन्यानि वस्तूनि घटादीनि, तत्स्वभावभूतानि यानि स्थौल्यादीनि जडानि परतन्त्राणि कार्याणि विनाशवन्त्यणुत्वादिभिः सहानवस्थितानि च, तथाविधानां स्थौल्या-दीनामभावं नारायणे 'अस्थूलमनणु' इत्यादिश्रुतिर्वक्ति, न तु तस्य निःस्वभावत्वं, येनोक्त-विरोधः स्यादित्यर्थः ।

कुत एवं श्रुतेरर्थसङ्कोचः क्रियते, निःस्वभावत्वमेवार्थः किं न स्यात्; इत्यत आह **सर्वधर्मेति** ।

**अनु०—** सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः ।
दोषाः श्रुतास्तु(श्च) नेत्याद्याः प्रमाणं श्रुतिरत्र च ।।

**अत्र** = परमेश्वरस्य सस्वभावत्वे, न केवलमत्र किं नाम पूर्वोक्ताणुत्वमहत्त्वादौ चेत्यर्थः । इहाच्छायमतम इत्यादेरसंकुचितवृत्तित्वमेव ज्ञेयम् । बहुपदविषयत्वादिदं व्याख्यानं स्वशब्देन विधाय, सूत्रकारः, कतिपयपदविषयं पूर्वव्याख्यानं चशब्देन समु-च्चितवानिति ।।

परि०— **सूत्रमिति** । पूर्ववच्चशब्दार्थोऽयमिति भावः । अत्रेत्यनुवादः । परमेश्वरस्य सस्वभावत्व इति व्याख्या । सूत्रे चशब्दसङ्गृहीतं व्याख्यानं विधिरूपत्वात् स्वशब्देन कर्तुमुचितम् इत्यनौचित्य-माशङ्क्य निराह **बहुपदेति** । इदं स्थौल्यादिराहित्यार्थत्वरूपं व्याख्यानं श्रुतिगतास्थूलादिसर्वपदविषयत्वात् अन्यभावव्यावृत्तेरिति वा चशब्देन कृतमित्यर्थः । **कतिपयेति** । अस्थूलादिपदचतुष्टयेत्यर्थः ।

**गु०दी०— अच्छायमतम इत्यादेरसंकुचितवृत्तित्वम्** इत्यत्र यथा 'अस्थूलमनणु' इत्यादौ जडानां परतन्त्राणां कार्याणां च स्थौल्याणुत्वादीनां नारायणे श्रुतिरभावं वक्ति तथा अच्छायातमस्त्वादीनामन्यस्वभावानां व्यावृत्तिर्न, किन्तु सर्वथा व्यावृत्तिमेव परमात्मनि प्रतिपादयतीति भावः । **बहुपदविषयत्वात्** इति 'अस्थूलमनण्वह्रस्वमदीर्घमलोहितमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमवागमनोऽचक्षुष्कमप्राणमसुखममात्रमि'ति श्रुतौ बहुभिरस्थूलादिपदैः प्राकृतस्थौल्यादीनां व्यावृत्तिप्रतिपादनस्य सम्भवादिदं व्याख्यानं बहुपदविषयकमिति भावः ।

**यादु०—** अतम इत्यादेरित्यत्रादिपदेनावाय्वनाकाशमित्यनयोर्ग्रहणम् । **कतिपयेति** । अस्थूलमनण्वदीर्घमह्रस्वमिति पदचतुष्टयमात्रविषयत्वात्पूर्वव्याख्यानं कतिपयपदविषयमित्यर्थः ।

**वं०प०— अणुत्वाद्यभिधायकत्वेति** । अस्थूलं स्थूलपरिमाणभिन्नपरिमाणोपेतं तच्चाणुपरिमाणमेवेति नञः पर्युदासार्थत्वमङ्गीकृत्येत्यर्थः । **निवृत्तीति** । नञः प्रसज्यप्रतिषेधार्थत्वेऽपीत्यर्थः । **उक्तविरोध इति** । सर्वत्रेत्यादिनोक्तसर्वगतत्वात्तृत्वादिविरोधः स्यादित्यर्थः । चशब्दार्थमाह **न केवलमिति** । ननु यथास्थूलमित्यादौ प्राकृतस्थौल्यादिकं नास्ति अपि तु अप्राकृतं स्थौल्यादिकमस्तीत्यर्थः क्रियते । एवमच्छायमतम इत्यत्रापि प्राकृतछायातमोनिषेधेऽप्राकृततत्सद्भावः प्रसज्येत । तच्च विरुद्धं तस्मात्कथमेतदित्यत आह **इहेति** । श्रुतौ प्रसज्यप्रतिषेधपक्ष इत्यर्थः । **असंकुचितेति** । सर्वात्मना निषेध इत्यर्थः । ननु 'अन्यभावव्यावृत्तेश्च' इति सूत्रे सूत्रकारः प्रसज्यप्रतिषेधाङ्गीकारेण श्रुतिव्याख्यानं कण्ठतो विधाय पर्युदासाङ्गीकारेण व्याख्यानं चशब्देन कुतः समुच्चितवान् । निमित्ताभावादित्यत आह **बह्विति** । इदं प्रसज्यप्रतिषेधार्थत्वेन व्याख्यानम् । **कतिपयेति** । अस्थूलमनण्वह्रस्वमदीर्घमिति पदचतुष्टय एव स्थूलपरिमाणभिन्नपरिमाणोपेतमिति प्राप्नोति । परस्परविरुद्धपरिमाणरूपार्थाभिधायकपदत्वादेषाम् । अलोहितमित्यादौ नैवंरूपेणार्थो युक्तः । तद्विरोध्यनुक्तेरिति पर्युदासस्य कतिपयपदविषयकत्वं ज्ञेयम् । यद्यपि लोहितादिभिन्न इत्यर्थः कर्तुं शक्यस्तथाऽप्यस्थूलादिपदेषु यथाऽधिकार्थत्वमायाति न तथा । अपि त्वल्पार्थतेति ध्येयम् ।

**आनन्दः—** नन्वस्थूलमित्यादौ प्रकृतस्थौल्यादिराहित्येऽपि अप्राकृतस्थौल्यादिमत्त्वं हरौ सिद्ध्यति । तथाऽच्छायामतम इति वादावपि प्राकृततद्राहित्येऽपि अप्राकृतच्छायाद्यायत इत्यत आह **इहाच्छायेति** । परमात्मनः छायादिमत्वस्य सर्वथा प्रतिषिद्धत्वादिति भावः । नन्वाद्यं श्रुतिव्याख्यानं चशब्दसूचितं द्वितीयं तु स्वशब्देनोक्तमिति वैरूप्यं किं निमित्तमत्राह **बहुपदेति** ।

**कं०रा०—** ननु सूत्रकारोऽन्यवस्तुस्वभावभूतानां स्थौल्यादीनामभावं नारायणेऽस्थूलादिश्रुतिर्वक्तीति इदं व्याख्यानमन्यभावव्यावृत्तेरिति स्वशब्देन विधाय विरुद्धैर्लक्षणैर्युतमिति पूर्वव्याख्यानं किमर्थं चशब्देन सूचितवानित्यत आह **बह्विति** । **कतिपयपदविषयमिति** । अस्थूलमित्यनेन तद्विपरीतमणुत्वमुच्यते । अनण्वित्यनेन तद्विपरीतं स्थूलत्वम् । तथाऽह्रस्वमित्यनेन तद्विपरीतं दीर्घत्वमदीर्घमित्यनेन तद्विपरीतं ह्रस्वत्वम् ।





न च विरोधः । ब्रह्मणो विरुद्धैर्लक्षणैर्युतत्वादिति पूर्वव्याख्यानस्यास्थूलमनणवमह्रस्वमदीर्घमित्येतावन्मात्रविषयत्वात् कतिपयपदविषयत्वमिति भावः ।

**शे०वा०**— नन्वस्थूलादिपदानां स्थूलत्वादिविपरीताणुत्वाद्यभिधायकत्वाङ्गीकारेणास्वभावत्वाप्राप्तेस्तन्निरासकोत्तरकारिकानर्थक्यमित्यतो नोत्तरवाक्यं पूर्ववाक्यशेषो येनासङ्गतिः स्यात् । किन्तु प्राग्विकल्पितपक्षद्वयमध्ये द्वितीयपक्षमभ्युपेत्य तत्रोक्तदोषपरिहारकतया सूत्रव्याख्यानार्थमिति नासङ्गत्यादीत्याशयेन पूर्वोत्तरवाक्ययोरर्थभेदं दर्शयन्नेव तद्वाक्यं तथैवावतारयति **एवं तावदिति** । **उक्तविरोध इति** । 'सर्वत्र प्रसिद्धोपदेशात् । अत्ता चराचरग्रहणात् । रूपोपन्यासाच्चे'त्युक्तविरोधः स्यादित्यर्थः । ननु यद्यस्थूलादिपदानां लौकिकस्थौल्यादिराहित्यार्थकत्वेनालौकिकस्थौल्यादिसिद्धिः तर्हि अच्छायमतमोऽवाय्वनाकाशपदानामपि लौकिकछायातमोवाय्वादिराहित्यार्थकत्वापत्त्याऽलौकिकतमोऽवाय्वादिसिद्धिः स्यादित्यत आह **इहेति** । अस्थूलमनण्वित्यादिवाक्येऽस्थूलादिपदानां प्राकृतस्थौल्यादिमात्रनिषेधकतया सङ्कुचितार्थत्वेऽपि अच्छायमतमोऽवाय्वनाकाशमित्यादीनां सर्वात्मना तमआदि निषेधकतयाऽसङ्कुचितार्थत्वमेव ज्ञेयम् । अदुःखमसुखमित्येकस्मिन्नपि वाक्येऽसुखमित्यनेन बाह्यसुखनिषेधेऽप्यदुःखमित्यनेन दुःखमात्रनिषेधदर्शनेन योग्यत्वायोग्यत्वयोरेव सङ्कोचासङ्कोचनियामकतयैकवाक्यस्थत्वादेरप्रयोजकत्वादिति भावः । ननूक्तरीत्याऽस्थूलादिश्रुतिव्याख्यानद्वयस्याप्युपपन्नत्वेनाविशेषात् द्वयोरपि स्वशब्देनैव विधेयतया कुतः सूत्रे एकस्यैव स्वशब्देन विधानं द्वितीयस्य चशब्देन समुच्चय इत्यतो ब्रह्मणि सुखादीनामपि व्यावृत्तिसम्भवेन प्रसज्यप्रतिषेधार्थतया व्याख्यानस्य एतच्छ्रुतिगतासुखादिपदसाधारणतया सकलपदविषयकत्वात् ब्रह्मणि सुखान्यस्य सुखादिसदृशान्यस्यासम्भवेन पर्युदासार्थतया व्याख्यानस्यासुखादिपदसाधारणत्वाभावेनैतच्छ्रुतिगतास्थूलादिकतिपयपदमात्रविषयकत्वात् । बहुविषयकत्वाल्पविषयकत्वाभ्यां विशेषाद्युक्तमेव स्वशब्देन विधानादिकमित्याह **बह्विति** ।

**वा०र०**— **अङ्गीकारेणेति** । अङ्गीकारपक्षस्य प्रागुपवर्णनेन तत्पक्षे स्वभाववत्वस्य निस्वभावत्वस्याप्राप्तेरित्यर्थः । **अनाकाशपदानामिति** । अनाकाशमित्यादिपदानामित्यर्थः । तथापाठस्तु स्वरस एव । तमोवाय्वादीनां सर्वात्मना निवृत्तिरदुःखसुखमित्यादिवदिति तत्त्वप्रकाशिकानुसारेणातम इत्यादेरित्यादिपदविवरणमवाय्वनाकाशमित्यादीनामिति सर्वात्मनेति वाय्वादिविषये तत्त्वप्रकाशिकाप्रपञ्चेऽस्माभिः शङ्का दर्शितास्ति । तदनुसारेणेहापि लेख्यम् । उक्तानुसारेणैव परिहाराभिवर्णनं टीकायामिति ज्ञेयम् ।

**स०व्र०**— **इदानीमिति** । प्रसज्यप्रतिषेधेनेति शेषः । पर्युदासपक्षस्य च शब्देन सूचने अस्य स्वशब्देनोपादाने तु नियामकमाह **बह्विति** । प्रसज्यप्रतिषेधपक्षे सुखादीनामपि व्यावृत्तिसम्भवात् बहुपदविषयत्वं पर्युदासपक्षे तु नञस्तत्समं तदन्यदर्थः स्यात् न हि सुखान्यत्तु सुखसमं सम्भवतीति अल्पपदविषयत्वं बोध्यम् । **समुच्चितवानिति** । अनेन सौत्रचशब्दस्य समुच्चयोऽप्यर्थ इत्युक्तं भवति ।





**विठ्ठल०— असंकुचितवृत्तित्वमिति** । अस्थूलत्वादिवदन्यस्वभावछायादिनिवृत्तिमात्रं न भवति किन्तु सर्वात्मना छायादिकं नास्तीति भावः । ननु स्थूलमित्यादिश्रुतेरेतद्व्याख्यानं किमर्थमन्यभावव्यावृत्तेरिति साक्षाद्वाचकपदेन कृतवान् किमर्थं च पूर्वव्याख्यानमनुक्तसमुच्चयार्थेन चशब्देन कृतवानित्यतः तत्र निमित्तमाह **बहुपदेति** । **कतिपयेति** । अस्थूलमनणु अदीर्घमह्रस्वमिति पदचतुष्टयविषयमित्यर्थः ।

**चषकः— अतम इत्यादेरिति** । आदिपदमेवाण्वित्यादिग्राहकम् । **कतिपयपदविषयम्** । अस्थूलमित्यादिपदचतुष्टयविषयम् ।

**॥ इति अस्थूलादिपदानां स्थूलत्वादिनिवृत्तिपरत्वात् अपि अक्षरं ब्रह्मैव इति चोत्तरपक्षः ॥**

**॥ इति 'नेदमक्षरं ब्रह्म' इति पूर्वपक्षस्य परिहारः ॥**

**॥ इति 'एतद्वैतदक्षरं गार्गि' इत्यत्रोक्तमक्षरं ब्रह्मैव ॥**

**॥ इति 'अन्यभावव्यावृत्तेश्चे'ति सूत्रव्याख्यानम् ॥**

## ॥ इति अक्षराधिकरणम् ॥

**॥ १-३-३ ॥**





## ॥ अथ वामनाधिकरणम् ॥

### ॥ १-३-७ ॥

॥ अथ सप्रयोजनमेतत्पादाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायान् सङ्ग्रहेण दर्शयति ॥

॥ तत्रादौ सूत्रसूचितन्यायाः ॥

१० **सु०**— अतःपराणि सूत्राणि भाष्य एव स्पष्टार्थानीति न तत्र वक्तव्यमस्ति, परमाख्यविद्याव्याख्यां करोमीति च प्रतिज्ञातम्, तदुभयसिद्ध्यर्थमेतत्पादाधिकरणविषय-पूर्वपक्षसिद्धान्तन्यायान् सङ्ग्रहेण दर्शयति— **लिङ्गमिति** ।

**अनु०**— लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ॥

बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता ।
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥

लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा ।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥

समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः ।
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥

सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः ।

एतच्च न्यायविवरणे स्वयमेवाचार्येण व्याख्यातमिति तत्रैवावगन्तव्यम् ।

**परि०**— **तदुभयेति** । भाष्ये स्पष्टव्याख्यानं पुनर्व्याख्यानप्रतिज्ञेत्युभयसिद्ध्यर्थमित्यर्थः । यद्वा अवक्तव्यत्वप्रतिज्ञातत्वोभयसिद्ध्यर्थमित्यर्थः । **विषयेति** । विषयान् पूर्वपक्षन्यायात्सिद्धान्त-





न्यायांश्चेत्यर्थः । **तत्रैवावगन्तव्यमिति** । तदस्माभिः किञ्चिदत्र विव्रियते । 'द्युभ्वादी'त्यत्र सर्वाधारत्वं लिङ्गं, 'भूमाक्षर'नययोर्भूमाक्षरनामनी, 'ईक्षती'त्यत्र सृष्टिस्थानं, 'दहर' इत्यत्र हृत्पद्मस्थत्वलिङ्गं 'अनुकृतेरि'त्यत्रानुकूल्येन गृह्यमाणत्वलिङ्गं, पुनरपि 'शब्दादेव प्रमितः', 'कम्पनात्', 'ज्योतिः', 'आकाश' इति चतुर्षु नयेषु क्रमेण ईशान-वज्र-ज्योतिः-आकाशशब्दाः, 'सुषुप्ती'त्यत्र स्वप्नादिद्रष्टृत्वं लिङ्गम्, 'पत्यादी'त्यत्र ब्राह्मणशब्दश्चेहपादे विचार्यन्त इत्यर्थः । विचार्यपदं यथायोगं विपरिणामेन सर्वत्रान्वेति । अत्र लिङ्गवचनविपरिणामेन सर्वविशेषणेन साधारणशब्देन सर्वेषामुभयत्र प्रसिद्धिः, द्विस्थिता इत्यनेन तु 'पूर्वोत्तरपक्षहेतुमत्तोक्तेति भेद' इति चन्द्रिका । 'साधारणपदस्य विपरिणामेन सर्वत्रान्वयद्योतनाय अन्तेऽपि द्विस्थिता इत्युक्तमिति' न्यायविवरणटीका । बाहुल्यं लिङ्गशब्दानामिति रुद्रादिप्रापकश्रुतिलिङ्गबाहुल्यम् । 'भूमे'त्यत्र प्राणाद्भूयसोऽनुक्तिः, चशब्देनोत्क्रमणलिङ्गं समुच्चीयते, 'अक्षर'नये अत्तेत्युक्त्वा 'न तदश्नाति किञ्चने'ति विरुद्धता, 'ईक्षति'नये अन्यस्यान्यथाभावादृष्टिः, 'दहर'नये वाक्यान्वयाभावः 'अनुकृति'नये 'कथं नु तदि'ति तच्छब्दश्रुतिर्ज्ञानिसुखपरामर्श इति भ्रमः, 'शब्दादेवे'त्यत्र प्राणापाननेतृत्वादिलिङ्गस्यान्यत्र विष्णोरनवकाशभ्रमः, 'कम्पनादि'त्यत्र वज्रश्रुत्यु-द्यतत्वरूपनिरवकाशश्रुतिलिङ्गाख्यद्वयं, 'ज्योति'र्नये बहूनां जीवप्रापकाणां तादृक्त्वं निरवकाशत्वं, 'आकाश'नये उक्तस्य यौगिकार्थस्य विष्णोः स्वीकारे वैनामेति निपातविरोधः, 'सुषुप्ति'नये जीवेशाभेदेनेश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यर्थात् तथागतिः, 'पत्यादि'नये निरवकाशश्रुतिद्वयेन विरिञ्चब्रह्मणोरैक्यमिति समस्तमेतदिति, क्रमादुक्तद्वादशनयानां अत्र पादे पूर्वपक्षयुक्तय इत्यर्थः । एतेन 'मुक्तोपसृप्यते'त्याद्यपि स्पष्टम् ।

**गु०दी०**— 'लिङ्गं साधारणमि'त्यादिश्लोकस्यायमर्थः । 'विचार्या द्विस्थिता इहे'त्यत्र **इह** पादे द्विस्थिताः द्वयोः विष्णुजगतोः स्थिताः उभयत्र प्रसिद्धाः नामलिङ्गात्मकाः शब्दाः इति यावत् । विचार्याः एकैकस्मिन्नधिकरणे विचारविषयीभूता इत्यर्थः । कुत्र किमित्यत उक्तं 'लिङ्गं साधारणमि'ति । 'द्युभ्वाद्यायतनं स्वशब्दादि'ति प्रथमाधिकरणं द्युभ्वाद्यायतनत्वलिङ्गं विचार्यम् । तस्य चोभयत्रप्रसिद्धत्वं 'प्राणानां ग्रन्थिरसी'ति 'रुद्रो वै लोकायतनमि'ति न्यायविवरणोक्तवाक्यद्वयेन रुद्रे प्रसिद्धत्वात् । 'वायुना वै गौतमसूत्रेणायं च लोकः परश्च लोकस्सर्वाणि भूतानि सन्दृब्धानि भवन्ती'ति वाक्ये वायौ प्रसिद्धत्वाच्च । हे गौतम सूत्रेण सर्वाधारेण वायुना सन्दृब्धानि सम्यक् धृतानीत्यर्थलाभाल्लिङ्गस्य विष्णोरन्यत्र रुद्रे वायौ च प्रसिद्धिरित्यर्थः । 'सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्च अलोकाश्चालोकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्ती'ति श्रुतौ विष्णौ प्रसिद्धिः । अत उभयत्र प्रसिद्धं द्युभ्वाद्यायतनत्वलिङ्गम् । एते परिदृश्यमानाः प्राणाः इन्द्रियगणाः प्राणिनः मनुष्यपशुपक्ष्यादयः देवाः ब्रह्मादयः दिव्यानि तेषामिन्द्रियादीनि लोकाः पातालादिसत्यान्तलोकाः लोकिनः





तल्लोकस्थाः दैत्यसर्पादयः वसिष्ठनारदादयश्च अलोकाः प्राकृतलोकविलक्षणाः विष्णुलोकाः अलोकिनः मुक्ताश्चेत्यर्थः । यद्यपीयं श्रुतिः विष्णावेवेति सावधारणा सर्वसङ्ग्रहिणी च, तथापि मन्दमतीनामुभयत्रप्रसिद्धत्वम् । अत एवाज्ञानामित्युक्तम् । **शब्दौ** द्वितीयाधिकरणे भूमशब्दः, तृतीयाधिकरणे अक्षरशब्द इति अधिकरणद्वये साधारणौ द्वौ शब्दौ विचार्यौ । **'लिङ्गं साधारणम्'** इत्यत्र विद्यमानं साधारणपदं शब्दौ साधारणौ स्थानं साधारणमित्यादिरूपेण सर्वत्र सम्बध्यते । तयोस्साधारण्यं च 'प्राणो वा आशाया भूयानि'ति प्राणे प्रसिद्धत्वात् 'विष्णुर्वै देवेभ्यो भूयानि'ति विष्णौ प्रसिद्धत्वाच्च । भूयान् भूमेति च पर्यायः । आशाया अपि नामादिदेवाधिकत्वेन श्रुतावेवोक्तत्वादाशाधिक्यमपि देवाधिक्यमेवेति भावः । अक्षरशब्दस्य क्षरणाभावस्य चेतनप्रकृतौ विष्णौ च साक्षादुभयत्र प्रसिद्धिः । **स्थानं** 'सदेव सौम्ये'त्यादौ प्रपञ्चितं सृष्टिस्थानं, अचेतनप्रकृतेर्विष्णोश्चोपादानत्वेन कर्तृत्वेन च कारणत्वसाम्यादुभयत्र प्रसिद्धम् । **लिङ्गं** हृत्पद्मस्थितत्वं तस्य च जीवे ब्रह्मणि हृदयाकाशे च प्रसिद्धेस्सार्वजनीनत्वान्न पृथगुपपादितं न्यायविवरणे । **अनुग्रहः** 'कथं नु तद्विजानीयामि'ति श्रुत्युक्तं स्वानुकूलतया ग्रहणम् । तत् 'कथं नु तद्विजानीयामि'ति तज्ज्ञाने कातरत्वश्रवणादनुकूलतया ग्रहणरूपमेवेति भावः । तस्य च साधारण्यं निरुपाधिकप्रेमास्पदे सुखे स्वेष्टदातरि विष्णौ च प्रसिद्धमेवेति न पृथगुपक्रान्तं न्यायविवरणे । उत्तराधिकरणचतुष्टये विचार्यमाणाः ईशान-वज्र-ज्योतिराकाशाख्याश्चत्वारश्शब्दाः **पुनश्शब्दाः** । ईशानशब्दस्य रुद्रे विष्णौ च प्रसिद्धत्वात्, वज्रशब्दस्य च 'वर्जनाद्वज्र उच्यते', 'आयुधानामहं वज्रमि'त्यादौ विष्णौ च प्रसिद्धेरभिधानादौ इन्द्रायुधे प्रसिद्धत्वाच्चोभयत्र प्रसिद्धता । ज्योतिराकाशशब्दयोः प्रथमपादे विष्णौ समन्वयप्रतिपादनाल्लोकतोऽन्यत्र प्रसिद्धेश्चोभयत्र प्रसिद्धता । लिङ्गं स्वप्नादिदर्शनं तस्य च सर्वज्ञत्वेन विष्णौ प्रसिद्धत्वाल्लोकतो जीवेषु च प्रसिद्धेरुभयत्र प्रसिद्धता । तदनन्तराधिकरणे शब्दः ब्राह्मणशब्दः । तस्य च ब्रह्म अणतीति व्युत्पत्त्या वेदपाठके चतुर्मुखे ब्रह्मणा अण्यत इति व्युत्पत्त्या वेदज्ञेये विष्णौ च प्रसिद्धत्वादुभयत्र प्रसिद्धता । **बाहुल्यं लिङ्गशब्दानाम्** । लिङ्गानि 'यस्मिन् द्यौरि'ति विषयवाक्ये प्रतिपादितानि द्वाधारत्वपृथिव्याधारत्वादीनि यानि लिङ्गानि तेषां रुद्रगतत्वे शब्दबाहुल्यम् । 'रुद्रो माविशान्तक' इत्यत्रोक्तः रुद्रशब्दः अन्तकशब्दश्च 'प्राणेश्वरः कृत्तिवासाः पिनाकी' इत्यत्रोक्तः कृत्तिवासश्शब्दः पिनाकिशब्दश्च 'मनो वै रुद्र ओतं च प्रोतं चे'त्यत्रोक्तो रुद्रशब्दः 'रुद्रो वै लोकाधार' इत्यत्रोक्तो रुद्रशब्दश्चेति तत्रतत्रोक्तास्त्रयो रुद्रशब्दाः अन्तकादिशब्दाश्च बहवस्सन्तीति बाहुल्यं लिङ्गशब्दानामित्युक्तम् । लिङ्गानामन्यप्रापकशब्दबाहुल्यमित्यर्थः । **अनुक्तिः** 'प्राणो वा आशाया भूयानि'त्युक्त्वा प्राणाद्भूयसोऽनुक्तिः प्राणस्यैव भूयस्त्वप्रापिकेत्यर्थः । **विरुद्धता** 'सर्वं वा अत्ती'ति प्राक् विचारितश्रुतौ अत्तृत्वमुक्त्वा अत्र तु 'न तदश्नाति किञ्चने'ति अक्षरस्यानत्तृत्वमुच्यते । अतो विरोधात् तत्रोक्तं ब्रह्म नात्र प्रतिपाद्यमित्यर्थः । **अदृष्टिः** उपादानं विना अन्यस्य कर्त्रादिकारणस्यान्यभावादृष्टिः इह जडप्रकृतेरेव कारणत्वप्रापिका । **अन्वयाभावः** हृत्पद्मस्थितस्य विष्णुत्वे 'यावान्वा अयमाकाशः' इत्यस्यान्वयाभावः पूर्वपक्षप्रापकः । **विपरीतश्रुतिभ्रमः** 'तदेतदिति मन्यन्ते कथं तु तद्विजानीयामि'ति वाक्ये विचार्यमाणे वस्तुनि 'तेषां सुखं शाश्वतमि'त्युत्तरवाक्योक्तज्ञानिसुखग्रहणमुचितमिति विपरीतस्य सुखशब्दस्य श्रुतिः श्रवणमस्तीति भ्रमः विपरीतश्रुतिभ्रमः । **लिङ्गावकाशराहित्यभ्रमः** 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यती'ति श्रुत्युक्तप्राणोन्नयनावनयनाख्यलिङ्गद्वयस्य





मुख्यप्राणादन्यत्रावकाशराहित्यस्य भ्रमः एवमेव 'एष प्राणः इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त' इति श्रुत्या मुख्यप्राणादन्यत्रावकाशराहित्यभ्रमः । **तादृक् द्वयम्** । **तथा** इत्यत्र तादृक्निरवकाशं द्वयं उद्यतत्वलिङ्गं वज्र-शब्दश्चेति द्वयं तथा पूर्ववत् पूर्वपक्षप्रापकमित्यर्थः । **बहुतादृक्त्वम्** इत्यस्य 'किं ज्योतिरयं पुरुष' इति । 'आदित्यज्योतिरिति सम्राडिति होवाच' इति 'आदित्यो ज्योतिर्यः पुरुषस्ये'ति पुरुषं प्रत्यग्निः 'आदित्यो ज्योतिरि'ति आदित्यज्योतिष्ट्वं प्रथममुपदिश्यते । अस्तमित आदित्ये याज्ञवल्क्य 'किं ज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवती'ति निशि यच्चन्द्रज्योतिष्ट्वं, चन्द्रमस्यस्तमिते 'किं ज्योतिरि'ति प्रश्ने 'अग्निरेवास्य ज्योतिर्भवती'ति यदग्निज्योतिष्ट्वमुच्यते तदिदमादिपदसङ्ग्राह्यम् । 'स समानः सन्नुभौ लोकावनुसञ्चरती'ति उभय-लोकसञ्चरणमुच्यते । 'आदित्येनैवायं ज्योतिषास्ते' इत्यवधारणं इत्यादीनामित्यत्र आदिपदेन 'वाच्यस्तमि-तायामात्मैवास्य ज्योतिर्भवती'ति विशिष्यात्मज्योतिष्ट्वोक्त्यानुपपत्तिर्गृह्यते । **बहुतादृक्त्वं** बहूनामादित्य-ज्योतिष्ट्वचन्द्रज्योतिष्ट्वाग्निज्योतिष्ट्ववत् ज्योतिष्ट्वविशिष्यात्मज्योतिष्ट्वकथनानुपपत्त्यवधारणानुपपत्त्यादीनां सप्त-लिङ्गानां तादृक्त्वं विष्णाववकाशराहित्यं विष्णोः ज्योतिष्ट्वे सर्वदा तज्ज्योतिष्ट्वसम्भवादेकस्यास्तमय एकस्यो-त्त्यसम्भवः । विष्णोरपि ज्योतिष्ट्वे एवकारानुपपत्तिरिति निरवकाशत्वम् । **उक्तस्य विरोध** इत्यस्य आकाश-पदस्य आकाशे रूढिं परित्यज्य योगेनोक्तस्य सिद्धान्त्यभिमतार्थस्य 'आकाशो वै नामे'ति प्रसिद्धिद्योतकवैनामेति निपातद्वयस्य विरोधः उक्तस्य विरोधः । **अर्थात्तथागतिः** इत्यस्य जीवेश्वरयोरभेदे 'स यत्तत्र किञ्चित्पश्यति अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुष' इति स्वप्नद्रष्टरि कथ्यमानस्येश्वरलिङ्गस्याप्यसङ्गत्वस्यार्थात् तथा ईश्वर इव जीवेऽप्यागतिः अर्थात् तथागतिः । 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति पापालेपलिङ्गस्य च ब्राह्मणजात्याक्रान्तत्वाद्ब्राह्मणशब्दवाच्यस्य चतुर्मुखस्य विष्णोश्चाभेदं विनाऽनुपपत्तेरर्था-द्यथानुपपत्तिपरिहारो भवति तथा आगतिरभेदस्येत्यावृत्त्या उत्तराधिकरणपूर्वपक्षयुक्तिरप्यनेनैव गृहीता । यद्यपि ब्राह्मणशब्दस्य अन्योऽपि ब्राह्मणः अर्थो भवति तथापि नित्यो महिमेत्युक्तमहिमनित्यत्वस्य विरिञ्चे सम्भा-वितत्वात् तस्यैव ग्रहणम् । समस्तमनुव्याख्याने कारिकाद्वयेन सङ्गृह्य कथितमेतत्प्रमेयं पूर्वपक्षेषु साक्षात्पाद-सङ्गतसकलाधिकरणपूर्वपक्षेषु युक्तय इत्यर्थः । यद्यपि भाष्यकाराग्रेसरः श्रीमदाचार्यः अनुभाष्यस्थस्वपदानि स्वयमेव सविस्तरं न्यायविवरणे वर्णितवान्, तथापि मन्दमतीनामपि बोधाय वाक्शुद्ध्यै चास्माभिरपि किञ्चित् किञ्चित् विवृतमिति ज्ञेयम् । 'ता एव बलवत्यस्तु' इत्यत्र ता एव पूर्वपक्षिणोक्तयुक्तय एव विष्णुं विना गत्यन्तर-विवर्जिताः अत एव बलवत्यः सिद्धान्तयुक्तयो ज्ञेयाः । पूर्वपक्षिणः न लिङ्गप्रापकमस्ति प्राणग्रन्थित्वलिङ्गस्य प्राणेश्वरत्वलिङ्गस्य लोकायतनत्वस्य च रुद्रेऽप्यप्रसिद्धत्वाच्छब्दबलादेव तेषां लिङ्गानामपि रुद्रपरत्वं वाच्यम् । अतः लिङ्गप्रापकशब्दानामेव बाहुल्यम् । 'बाहुल्यं लिङ्गशब्दानामि'त्यनेन व्याकृतम् । सिद्धान्ते तु प्राणग्रन्थित्वं प्राणेश्वरत्वं लोकायतनत्वं चेत्यादिलिङ्गानां 'सर्वे वा एते प्राणाश्चे'ति श्रुतौ विष्णावेवोताश्च प्रोताश्चेत्यादिना सावधारणतयोक्तत्वात् रुद्रादाववकाशराहित्यम् । विषकालकण्ठतया रुग्द्रावणयोगरहिते वृकासुरान्तकरण-समर्थत्वेनान्तकत्वयोगरहिते रुद्रे रुद्रशब्दः अन्तकशब्दश्च तावन्निरवकाशः । तत्प्रायपठितौ च पिनाकिकृत्तिवासः शब्दौ न रुद्रपरौ वाक्यभेदप्रसङ्गात् । अतः 'ब्रह्मचर्मशिरःपट्टी'ति वासुदेवसहस्रनामपाठात्कृत्तिवसनत्वं विष्णोरेव





युक्तम् । 'पिनाकोऽजगवं धनुरि'त्यनुशासनादजगोशृङ्गकृतचापवत्त्वं च शार्ङ्गिण्येव घटते । तथा च रुद्रादिशब्दानामपि सर्वदेवनामधारके विष्णावेव मुख्यवृत्तित्वम् । अतः निरवकाशलिङ्गानां निरवकाशशब्दानां च विष्णावेव बाहुल्यमिति । लिङ्गशब्दानां बाहुल्यमेव प्रथमाधिकरणे सिद्धान्तस्यापि प्रापकम् । तस्य तु शब्दमात्रबाहुल्यम् । अस्माकमुभयबाहुल्यमिति च बलवत्त्वम् । **अनुक्तिः** प्राणस्य नामाद्यारभ्य आशाख्यभारत्यन्तदेवताभ्यः भूयस्त्वकथनेऽपि विष्णोस्सकाशाद्भूयस्त्वानुक्तेः न सर्वेभ्योऽपि प्राणो भूमेति अनुक्तिरेव द्वितीयाधिकरणे सिद्धान्तप्रापिका । 'स वा एषः एवं पश्यन् एवं मन्वानः एवं विजानन् अतिवादी भवती'ति प्राणातिवादिनि 'एष तु वा अतिवदति यस्सत्येनातिवदती'तिवत् अतिशयितार्थकतुवेतिनिपातद्वयपूर्वकमतिवादित्वानुक्तिरपि चशब्दसूचिता विष्णोर्भूयस्त्वप्रापिका । सत्यनामकविष्णौ तदुक्तिश्चेत्यपि विष्णोः सर्वोत्तमत्वप्रापिका । पूर्वपक्षखण्डनावसरे पूर्वपक्षखण्डनयुक्तिर्वक्तव्येत्यतः सिद्धान्तयुक्तेः स्वशब्देनानुक्तिः चशब्देन सूचनं च । साऽपि परवाक्खण्डनरूपत्वात् तस्यानुक्तिरेव । **विरुद्धता** 'एतस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्चे'ति सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धमिति तृतीयाधिकरणसिद्धान्तयुक्तिरित्यर्थः । 'न तदश्नाति किञ्चने'ति तु अशनानुपजीवित्वपरा । अतः 'सर्वं वा अत्तीति तददितेरदितित्वमि'ति सर्वातृत्वश्रुतिरेव तव विरुद्धेति प्रकारान्तरेण विरुद्धताऽपि सिद्धान्तज्ञापिकेत्यर्थः । **अदृष्टिः** अचेतनस्येक्षणादृष्टिरेवास्माकमपि सिद्धान्तप्रापिका । एकस्यैव तत्तन्नियामकतया बहुरूपत्वसम्भवाद्बहुभावादृष्टिश्च न दूषणम् । **अन्वयाभावः** व्याप्ताकाशस्य हृदयाकाशस्य च समानपरिमाणत्वायोगात्परस्यैवान्वयाभावः । अस्माकं तु हृत्पुण्डरीके स्थितस्य परमात्मनो हृदि 'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाश' इत्यन्वयस्य आसम्यक् भावः सम्भवः एतदधिकरणसिद्धान्तप्रापकः । **विपरीतश्रुतिभ्रमः** यज्ज्ञानात् शाश्वतं सुखं स भगवान् ब्रह्म अनिर्देश्यं परमं सुखमिति वदन्ति तदेतत्स्वरूपसुखमिति मन्यन्ते इत्यन्वयसम्भवात् परपरिकल्पितदुर्योजनातो विपरीतैव श्रुतिः तवानुकूलेति तु भ्रमः विपरीतश्रुतियुक्तो भ्रम इति विपरीतश्रुतिभ्रमः अस्माकं विपरीता श्रुतिरिति परस्यैव भ्रम इति वा अतो विपरीतश्रुतिभ्रमः एतदधिकरणसिद्धान्तयुक्तिरित्यर्थः । **लिङ्गावकाशराहित्यभ्रमः** लिङ्गानां प्राणोन्नयादीनां विष्णावकाशराहित्यमिति तवैव भ्रमः सर्वप्रेरके हरौ लिङ्गं विद्यत एव लीनं विष्णवाख्यं ब्रह्म गमयतीति निर्णाययतीति लिङ्गं वामननाम, तस्यात्रावकाशराहित्यादर्शनात् तवैव भ्रम इति वार्थः । **तादृग्द्वयम्** वर्जयति जडत्वादिदोषानिति वज्रशब्दयोगस्य, कर्तर्येवासाधारणोद्यमित्वाख्योद्यतत्वस्य च हरावेव सावकाशतादृग्द्वयं शब्दो लिङ्गं चास्माकमेव प्रापकमित्यर्थः । **बहुतादृत्त्वम्** 'किं ज्योतिरयं पुरुष' इत्युक्तः संसारी, 'आत्मैवास्य ज्योतिर्भवती'त्यत्रोक्तात्मज्योतिश्च विष्णुरेव । आत्मशब्दस्य गौणात्मविषयत्वादात्मशब्दश्च विष्णावेव, आदित्यमारभ्यात्मपर्यन्तं पञ्चविधज्योतिष्ट्वमपि संसारिण एव । जीवस्य तु सूर्यादिज्योतिरूपजीवकस्य नात्र ज्योतिष्ट्वम् । तर्ह्यात्माख्यज्योतिषः सदा सत्त्वात् 'आदित्येनैव ज्योतिषे'त्याद्यवधारणं कथमिति चेत् न बाह्यज्योतिष्षु तेषां प्रधानत्वात् । अन्यथा वाग्रूपज्योतिषोऽपि विद्यमानत्वात् तवैवावधारणानुपपत्तिः । 'स समानः सन्नुभौ लोकावनुसञ्चरती'ति उभयलोकसञ्चरणं च विष्णावेव सावकाशम् । अन्यथा निर्विकारत्वापरपर्यायसमानत्वायोगात् । अतः आत्मशब्दः समानत्वलिङ्गं आदित्यज्योतिष्ट्वाद्यनुपपत्त्यभाव उक्तविधया अवधारणोपपत्तिः





प्रसिद्धसूर्यादिज्योतिष्वस्तमितेष्वपि भगवतः सदा अनुपहतज्योतिष्ट्वेन परममुख्यत्वं चेति बहुतादृत्त्वमत्र सिद्धान्तोपस्थापकमित्यर्थः । **उक्तस्य विरोधः** 'आकाशो वै नाम नामरूपयोर्निर्वहिते'ति आकाशस्य नाम-रूपनिर्वहितृत्वे वैनामेति निपातद्वयाभ्यामुक्तं यच्छ्रुत्यादिप्रसिद्धिबाहुल्यं तस्योक्तस्य विरोधः त्वत्पक्षे विरोधः । 'ते यदन्तरे'ति श्रुतो यद्ब्रह्म ते नामरूपे अन्तरा विना तिष्ठतीति उक्तस्यानामरूपत्वस्य च विरोधः त्वत्पक्षे विरोधः । अत्र सिद्धान्तज्ञापक इत्यर्थः । **अर्थात्तथागतिः** 'प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मना अन्वारूढ' इति सुषुप्त्युत्क्रान्त्योर्भेदोक्तेः 'असङ्गो ह्ययं पुरुष' इति श्रुत्युक्तासङ्गत्वस्य च भगवत्येव प्राप्तेः तथा श्रुतियुक्तिबलाच्च अर्थाद्भेदस्यैवागतिः प्राप्तिरित्यर्थः । ब्रह्मणा वेदेन गम्यत इति ब्राह्मणशब्दस्य विष्णावेवावकाशात् अजशब्दस्यापि तथा आगतिः विष्णावेवागतिः । चतुर्मुखस्य च कर्मफलाभावायुक्तेः अर्थात्कर्मभोक्तृत्वेन तदभोक्तृत्वेन च विरुद्धधर्माक्रान्तत्वादर्थात् तयोः तथा विरुद्धदहनतुहिनवदागतिः भेदस्यैवागतिः **उक्तविरोधश्च तवैव** त्वत्पक्ष एव, **तथा** तथापि ब्राह्मणशब्देन चतुर्मुखस्यैव ग्रहणे तथा भेदवत् भोक्तृत्वाभोक्तृत्वाख्यविरोधस्यागतिस्तत्र त्वत्पक्ष एव । तथा भेदश्रुतिबाहुल्यान्निर्लेपत्वलिङ्गस्य नित्यमहिमत्वाख्यनिरवकाशलिङ्गोपेतब्राह्मणशब्दस्य च परान्तायुषि चतुर्मुखे अगतिरप्राप्तिरिति यथासम्भवं सङ्ग्राहकशब्दानां आवृत्त्या सर्वेऽपि न्यायविवरणोक्तार्थाः योजयितव्याः । अतः परोदीरितयुक्त्यैव परपक्षं प्रतिक्षिपन् भाष्यकारः गजदन्ताभ्यामेव गजकपोलं ताडयतः कृष्णस्य भटाग्रेसरः परदत्ताग्निनैव दग्धपरपुरस्य हनूमतः तृतीया तनुरिति युक्तमुत्पश्यामः ।

इति श्रीमद्वादिराजपूज्यचरणविरचितायां गुर्वर्थदीपिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

**वं०प०— तदुभयेति** । स्पष्टार्थत्वेनावक्तव्यत्वव्याख्याकरणप्रतिज्ञेत्युभयसिद्ध्यर्थमित्यर्थः । **सङ्ग्रहेणेति** । तथा च विस्तरतोऽव्याख्यानाद्भाष्ये स्पष्टार्थता विषयादिकथनेन सङ्क्षेपतो व्याख्यानाद्व्याख्यानकरणप्रतिज्ञा चोपपन्नेत्यर्थः ।

**आनन्दः**— नन्वग्रे एतदधिकरणपूर्वपक्षसिद्धान्तन्यायमत्र प्रदर्शनं क्रियते । सम्यक्व्याख्यानं कुतो न क्रियते । न च भाष्यस्येष्टत्वात्क्रियत इति वाच्यम् । तर्हि विषयादिदर्शनमपि न कर्तव्यं तस्यापि भाष्य एवास्य दृष्टत्वादित्यत आह **अतःपराणीति** । तदुभयसिद्ध्यर्थमिति वक्तव्याभावो व्याख्यानं चेत्युभयसिद्ध्यर्थः । न चोपाधिदर्शनं कुतो न कृतमिति वाच्यम् । विषयप्रदर्शनेनैव तस्यापि ज्ञातुं शक्यत्वात् । आधारत्वाभिधायि यावच्छब्दजातं तस्य प्रथमेऽधिकरणे समन्वय इति आधारत्वाभिधायकशब्दत्वमेव एतदधिकरणोपाधिरित्यादि प्रकरणेति भावः । ननूत्तरपादेषु पूर्वपक्षसिद्धान्तान्यथा प्रदर्शने सत्यपि विषयप्रदर्शनस्याकृतत्वादत्रैव तत्प्रदर्शनं कुतः कृतमिति चेत् । मैवम् । अत्र हि नामलिङ्गात्मकोभयविधशब्दसमन्वयः क्रियते । तत्राधिकरणानामनेक-त्वादुभयेषामपि यौगिकत्वेन साङ्कर्यात् किं कुत्र समन्वीयत इति न ज्ञायतेऽतो मन्दानां ज्ञानाय तत्प्रदर्शनमिति भावः । लिङ्गमित्याद्यनुव्याख्यानस्यायमर्थः । अत्र हि साधारणशब्दस्यायमेकशेषेण निर्देशः । तथा च साधारणं च साधारणं च साधारणान्यसाधारणौ च साधारणश्च साधारणश्च साधारणौ च साधारणाः साधारणानि च साधारणाश्च





साधारणं नपुंसकं नपुंसकेनेति सूत्रेण नपुंसकैकवद्भावौ एवं विचार्या इत्यत्रापि द्रष्टव्यम् । न च नपुंसकशेषैकवद्भावौ तत्र स्यातामिति वाच्यम् । अन्यतरस्याग्रहणात्पाक्षिकाप्राप्तेरपि सम्भवात् । न चालिङ्गवचनविपरिणामेन सर्वविशेषणेन धारणशब्देन सर्वेषामुभयत्र प्रसिद्धेरुक्तत्वेन द्विस्थिता इत्येतत्पुनरुक्तमिति वाच्यम् । तेन पूर्वोत्तरपक्षहेतुमत्तया उक्तत्वेन पौनरुक्त्यात् । न च कथं तेन पूर्वोत्तरपक्षहेतुमतोच्यत इति वाच्यम् । द्विस्थिता इत्यस्य हि द्वये विष्णुरुद्रयोः श्रुतिलिङ्गादिभिः स्थिता निर्णीताः इत्यर्थः । तथा च पक्षद्वयेऽपि हेतुमत्वमुक्तं भवति । द्युभ्वाद्यायतनं स्वशब्दादित्यत्र योऽस्मिन् द्यौरिति वाक्यप्रतीतं द्युभ्वाद्यायतनत्वलिङ्ग रुद्र वै लोकायतनं वायुना वै गौतमसूत्रेणायं च लोकः सर्वाणि च भूतानि संदृब्धानि सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लौकिनश्चालोकाश्चालौकिनश्च विष्णावेवोताश्च प्रोताश्च भवन्तीत्यादि श्रुतेः साधारणं विचार्यमित्यर्थः । अनन्तरसङ्गतिस्तु पूर्वत्रैवात्राप्यात्मशब्देन सिद्धान्तादातिदेशिकी । साधारणौ शब्दौ भूमासंप्रसादादध्युपदेशादित्यत्र यो वै भूमेति भूमशब्दः प्राणो वा आशाया भूयान् तस्माद्भूयान्मामेत्यादेः साधारणौ विचार्य इत्यर्थः । अत्र स एवाधस्तात्स उपरिष्टात् एवं विजानन्नात्मरतिः यो वैतिः (?) भूमी सह तदमृतमित्यादिना भूम्युक्तस्य सर्वगतत्वादेः ब्रह्म वेदममृतं पुरस्तात्पश्चात् ब्रह्म दक्षिणतश्चोत्तरेणेत्यादिना द्युभ्वाद्यायतने श्रवणात् भूम्नोऽन्यत्वे द्युभ्वाद्यायतनमप्यन्यत्स्यादिति पूर्वाक्षेपे या पूर्वपक्षोत्थानादाक्षेपिकी अनन्तरसङ्गतिः । **तथाक्षरमम्बरान्तधृ**तेरित्यत्र तद्वा एतदक्षरमित्यक्षरशब्दः अविनाशित्वरूपप्रवृत्तिनिमित्तस्य विष्णौ चेतनप्रकृतौ च सत्त्वात् । साधारणोऽत्र विचार्य इत्यर्थः । अत्र च प्रथमेऽधिकरणे जडप्रकृत्यादेः द्युभ्वाद्यायतनत्वं निरस्य द्वितीये सर्वजीवोत्तमस्य मुख्यप्राणस्य भूमत्वं निरस्य अत्र ततोऽप्युत्तमस्य श्रीतत्त्वस्याक्षरतत्त्वनिरास इति चान्तरसङ्गतिः । **ईक्षतिकर्मव्यपदेशात्स** इत्यत्र सदेव सौम्येत्यादि स्पष्टस्थानं विषयवाक्यस्थकारणत्वादिधर्मस्य विष्णोरचेतनप्रकृतेश्च साम्यात्साधारणं विचार्यमित्यर्थः । अत्र च पूर्वाधिकरणवैषम्यप्रदर्शनेन वा पूर्वाधिकरणसिद्धान्तन्यायेन वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः । **दहर उत्तरेभ्य** इत्यत्राथ यदिदमस्मिन् ब्रह्म पुर इति वाक्ये प्रतीतं हृत्पद्मस्थं यो वेद निहितं गुहायां तस्यां ते सुषिरं सूक्ष्मं हृदि ह्येष आत्मेत्यादिभिः श्रुतिभिः ब्रह्माकाशजीवसाधारणं विचार्यमित्यर्थः । अत्र च पूर्वाधिकरणविषयवाक्ये येनाश्रुतं श्रुतमित्यादिनोक्तस्यान्वेष्टव्यत्वस्य सदायतना इत्युक्तसर्वासाधारणत्वस्य वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । **अनुकृतेः तस्य च** इत्यत्र कथं नु तद्विजानीयामिति वाक्यप्रोक्तः अनुग्रहः अनुग्रहाख्यं आनुकूल्येन गृह्यमाणत्वरूपं लिङ्गं ज्ञानिप्रार्थनस्य ज्ञानिसुखमिवेश्वरस्यापि प्रियत्वेन विषयत्वात् । ज्ञानिसुखे भगवति च साधारणसुखशब्दसमभिव्याहाराच्चेश्वरज्ञानिसुखयोः साधारणविचार्यमित्यर्थः । अत्र पूर्वाधिकरणवैषम्येण तन्न्यायेन वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः । पुनः शब्दाः **शब्दादेव प्रमित** इत्यत्रेशानो भूतभव्येतीशानशब्दः प्रवृत्तिनिमित्तभूतप्रेरकत्वस्य वायौ विष्णौ च सत्त्वात्साधारणो विचार्य इत्यर्थः । अत्र च तमात्मेच्छयेऽनुपपश्यन्ति धीरा इति । पूर्वत्र विष्णुज्ञानान्मोक्ष इत्युक्तमयुक्तम् । विश्वेदेवा उपासत इति सर्वदेवोपास्यप्रतीतेः प्राप्तैश्वर्याणां च देवानां मोक्षादन्यार्थमुपासनायोगादन्योपासनया च विष्णुज्ञानायोगादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः । **कम्पनात्** इत्यत्र महद्भयं वज्रमुद्यत इति वज्रशब्द उभयत्रप्रसिद्धभयङ्करत्वादिलिङ्गसाहचर्यात् । प्राणशब्दसमन्वयस्योक्तत्वादुभयत्रप्रसिद्धप्राणशब्दसाहित्याद्वा साधारणो विचार्य





इत्यर्थः । अत्र पूर्ववैषम्येण वा पूर्वाक्षेपेण वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः । **ज्योतिर्दर्शनात्** इत्यत्र हृद्यन्तर्ज्योतिरिति ज्योतिःशब्दप्रवृत्तिनिमित्तप्रकाशत्वस्य जीवेश्वरयोः साम्यात्साधारणो विचार्यत इत्यर्थः । पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनन्तरसङ्गतिः । **आकाशोऽर्थान्तरत्वादिव्यपदेशात्** इत्यत्राकाशो वेत्याकाशशब्दः प्रयोगसाधारण्यासाधारणो विचार्य इत्यर्थः । आकाशस्याब्रह्मत्वे पूर्वोक्तं ज्योतिरप्यब्रह्म स्यात् ज्योतिषि श्रुतस्यामृतत्वस्येहाकाशे तदमृतमितमिति श्रवणादिति पूर्वाधिकरणाक्षेपादनन्तरसङ्गतिः लिङ्गशब्दौ **सुषुप्त्युत्क्रान्त्योर्भेदेन** इत्यत्र स वा एष इति वाक्यप्रतीतं स्वप्नादिद्रष्टृत्वलिङ्गलोकतोऽन्यत्रप्रसिद्धा अन्यत्रप्रयोगात् लिङ्गपादन्यायेन ब्रह्मण्यपि प्रयोगस्योक्तत्वात्साधारणो विचार्य इत्यर्थः । अत्र पूर्वाधिकरणवैषम्येण पूर्वसिद्धान्तन्यायेन वा पूर्वपक्षोत्थानादनन्तरसङ्गतिः **पत्यादिशब्देभ्य** इत्यत्र एष नित्यो महिमा ब्राह्मणस्येति ब्राह्मणशब्दाः अजश्रुतिनित्यमहिमत्वलिङ्गाभ्यां च विष्णुविरिञ्चसाधारणो विचार्य इत्यर्थः । **अत्र चासङ्गो न हीति** । श्रुतस्यासङ्गस्याब्रह्मत्वे ह्यसङ्गो ह्ययमिति पूर्वोक्तस्यापि अब्रह्मत्वं स्यादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिः ।

**द्युभ्वाद्यायतनं स्वशब्दात्** । अत्र यस्मिन् द्यौरिति वाक्योक्तं द्युभ्वाद्यायतनं रुद्रादेर्वा विष्णोर्वेति संशये रुद्रादेरेवेति प्राप्तम् । अत्र पूर्वपक्षयुक्तिमाह **बाहुल्यं लिङ्गशब्दानामिति** । अयमर्थः । अत्रोक्तं द्युभ्वाद्यायतनत्वं रुद्रस्यैव भवेत् । अत्रोक्तद्युपृथिव्याद्याश्रयत्वादिलिङ्गानां रुद्रादिविषयत्वे रुद्रादिशब्दबाहुल्यं यतोऽतो हेतोरित्यर्थः । यद्वा प्राणानां ग्रन्थिरसीत्यादिश्रुतिषु रुद्रनिष्ठतया द्युपृथिव्याद्यायतनत्वश्रवणाद्रुद्रस्यैव द्युपृथिव्याद्यायतनत्वं वक्तव्यम् । न च तद्वाक्यं कुतो रुद्रविषयमिति वाच्यम् । अतच्छब्दादित्यनेनैव लिङ्गशब्दानां बाहुल्यम् । सिद्धान्तन्याय इति सूचितम् । भस्मधरोग्रत्वादिशब्दानामेव रुद्रादावसाधारण्यप्रदर्शकतया रुद्रादिशब्दस्यान्तकत्वादिलिङ्गस्य च विष्णौ मुख्यत्वसूचनाय तेषां विष्णुत्वसाधकत्वसूचनादिति । **भूमासंप्रसादादध्युपदेशात्** इत्यत्र यो वै भूमेत्युक्तो भूमा वायुर्वा विष्णुर्वेति संशये वायुरेवेति पूर्वः पक्षः । तत्र पूर्वपक्षन्यायमाह **अनुक्तिश्चेति** । अयमर्थः । नामवागादितारतम्यमाशावसानमुक्त्वा प्राणो वा आशाया भूयानिति प्राणस्योत्तमत्वं चोक्त्वा तदुत्तमस्यान्यानुक्तेराम्नातो भूमा मुख्यवायुरेवेति । आद्युपदेशादित्यनेन विष्णोर्भूयस्त्वोक्त्याऽनुक्तिः पूर्वपक्षन्याय इति सूचितम् । सिद्धान्तस्तु । अत्रोक्तो भूमा विष्णुरेव पूर्णसुखाभिधानात् सर्वेषामुपर्युपदेशाच्च । ननु सर्वोत्तमत्वोपदेशेऽपि विष्णुत्वनिश्चयः विष्णुवत्स्वेतरसर्वोत्तमत्वस्य वायावपि संभवादित्यतः सिद्धान्तयुक्तिमाह **अनुक्तिश्चेति** । यदि प्राणस्य स्वेतरे विष्ण्वादिसर्वोत्तमत्वमङ्गीक्रियते, तर्हि कुत्रचित्प्राणस्य विष्णोः सकाशात् भूयस्त्वोक्तिः स्यात् । न चासावस्ति । अतः प्राणस्य विष्णोः प्राणानपि परमानन्दत्वलक्षणभूयस्त्वोक्तिः समुच्चयः । अध्युपदेशादित्यनेनैव विष्णोरेव भूयस्त्वोक्तेः प्राणस्य तदभावादनुक्तिः सिद्धान्तन्याय इति सूचितम् । अनेनैव सूत्रांशेनानुक्तिश्चेति चशब्दसमुच्चितो भूयस्त्वोक्तिरूपोऽप्युक्तो भवति । व्यतिहार इत्यत्र वक्ष्यमाणप्रकारेण प्राणादधिकत्वेनोपदेश इत्यर्थलाभात् अक्षरमम्बरान्तधृतेरित्यत्र तद्वा एतदक्षरमित्युक्तमक्षरं श्रीतत्वं वा विष्णुर्वेति सन्देहे श्रीतत्वमिति तावत्प्राप्तम् । तत्र पूर्वपक्षन्यायमाह **विरुद्धतेति** । अस्यार्थः । एतदस्याक्षरस्य विष्णुत्वेऽस्यैवाक्षरस्य न तदश्नाति किंचनेति उक्तानशनस्य विष्णोरत्ता चराचरग्रहणादित्युक्तेन सर्वात्तृत्वेन विरुद्धता स्यादिति । अन्यभावव्यावृत्तेश्चेत्यनेनानशन-





श्रुतिप्रदर्शकेन सर्वातुरनशनं विरुद्धमिति सूचनेन विरुद्धता पूर्वपक्षन्याय इति सूचितम् । सिद्धान्तस्तु । तद्वा एतदक्षरं गार्गीत्युक्तमक्षरं ब्रह्मैव तत्र सिद्धान्तन्यायमाह **विरुद्धतेति** । यदूर्ध्वं गार्गी दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भविष्यच्चेत्याचक्षते । आकाश एव तदोतं च प्रोतं चेत्याकाशाख्यप्रकृतेः सर्वाधीनत्वमुक्त्वा एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति सर्वाधारप्रकृत्याधारत्वोक्तेः सर्वाधारप्रकृत्याधारत्वं च विष्णोरन्यस्य विरुद्धमित्यर्थः । अनशनोक्तिस्तु अनुपजीवना भीषायां अम्बरान्तधृतेरित्यतो न प्रकृतावसंभावितहेतुः प्रतिपादनेन प्रकृत्याधारत्वं अन्यस्य विरुद्धमिति सूचकेन विरुद्धतासिद्धान्तन्याय इति सूचितम् । **ईक्षतिकर्मव्यपदेशात्सः** । सदेव सौम्येत्यादिसृष्टिस्थानगतसच्छब्दोक्तं प्रधानो वा विष्णुर्वेति सन्देहे प्रधानमिति पूर्वः पक्षः । तत्र पूर्वपक्षन्यायमाह **अदृष्टिरिति** । अयमर्थः । **बहु स्यामिति** । श्रुत्युक्तस्य प्रपञ्चत्वेन भवनरूपस्यान्यभावस्य ततोऽत्यन्तभिन्नत्वेन प्रमितस्य विष्णोरदृष्टिर्दृष्ट्यभावो दर्शनायोग्यत्वम् । कुत इत्यतो लोकेऽप्यन्यस्यान्यभावादृष्टिर्यतोऽतो हेतोरिति । यद्वा विकारिकारणात् । अन्यस्य विष्णोर्बहु स्यां प्रजायेयेत्युक्तस्यान्यत्वेन परिणामादृष्टिरिति सूचनेन सदृष्टिः पूर्वपक्षन्याय इति सूचितम् । सिद्धान्तस्तु सदेवेत्यादि सच्छब्दवाच्यो विष्णुरेव । कुत इत्यतो परिहारत्वेन सिद्धान्तन्यायमाह **अदृष्टिरिति** । अत्र तदैक्षतेति ईक्षणश्रवणात् । न च तदचेतनप्रकृतौ संभवति अचेतन-स्येक्षणादृष्टेरित्यर्थः । बहुभावश्रुतिरूपबहुत्वार्थत्वेन सावकाशेति । ईक्षतिकर्मेहानेनैवाचेतनस्येक्षणादृष्टिरिति सूचकेन दृष्टिः सिद्धान्तन्याय इति सूचितम् ।

- **दहर उत्तरेभ्यः** अथ इदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकमित्यादि वाक्योक्तं हृत्पद्मस्थत्वं किमाकाश-स्येति विष्णोरिति वा सन्देहे आकाशस्यैव हृत्पद्मस्थत्वमिति पूर्वः पक्षः । कुत इत्यतस्तत्र पूर्वपक्षन्यायं दर्शयति **अन्वयाभाव इति** । नात्र हृत्पद्मस्थो विष्णुः किं तु आकाश एव । तथा हि । तस्मिन्यदन्तरित्यत्र विष्णुत्वाभिप्रायत्वे हि किं तदत्र विद्यत इति प्रश्नस्य ब्रह्म विद्यत इति परिहारं विना यावान्वा इत्यादेरन्वया-भावात् न चायमाकाशपक्षेऽपि तुल्य इति वक्तव्यम् । आकाशपक्षे हि हृदयाकाशस्थमुपास्यमित्युक्ते किं तत्र स्थितं इति प्रश्ने यावान्वाऽयमाकाश इत्यनेन प्रागुक्ताकाशमेव विशेष उभे अस्मिन्नित्यादि परिहारसंश्लेषे वा अन्वयसम्भवात् तस्मादाकाश एव हृत्पद्मस्थ इति अल्पश्रुतेरिति सूत्रेण योग्यताभावरूपान्वयाभावं प्रतिपादयता आकाङ्क्षाभावरूपोऽप्यन्यथाभावं उपलक्षणत्वेन सूचितो दर्शयति । सिद्धान्तस्तु विष्णुरेव हृत्पद्मस्थाकाश इति । कुत इत्यतस्तत्र सिद्धान्तन्यायं दर्शयति **अन्वयाभाव इति** । आकाशपक्ष एवान्वयो नेत्यर्थः । दहराकाश-स्थानुपास्य किमित्युक्ते किं तदत्र विद्यत इति प्रश्ने यावान्वा इत्यस्यान्वयादर्शनात् न हि दहराकाशस्थो व्याप्ताकाशोऽन्वेष्टव्य इत्युपपद्यते । व्याप्ताकाशस्य दहराकाशस्थत्वाभावादयोगाच्च । न च दहराकाशमेव विशे-ष्योभेऽस्मिन्नित्यादि (?) परिहार इति युक्तं दहरस्य व्याप्तत्वेन विशेषणयोगात् पृथिव्यादीनां मुख्यत उपास्य-त्वाभावाच्चेति भावः । विष्णुपक्षे त्वन्वयोऽस्त्येव । तथाहि । तस्मिन्यदन्तरित्यत्र पद्मस्थाकाशगतं ब्रह्मा-न्वेष्टव्यमित्युच्यते । ब्रह्मपुरस्थितिसिद्धेः । तथा च कीदृशं तदिति प्रश्ने तत्त्वरूपनिरूपणपरतया वाचा आकाश इत्यादि वाक्यान्वयः । यद्ब्रह्मान्वेष्टव्यतयोक्तं तस्यान्तर्हृदये यावानेष आकाशस्तावान्सर्वेऽपि विद्यते । तदाधारतया





पृथिव्यादिकं च समाहितं नष्टोऽपि दहरेण नश्यति । अपहतपाप्मत्वादि गुणं चेति प्रसिद्धेश्चेत्यनेन सूत्रेण विष्णोरेव दहराकाशस्थत्वं प्रसिद्धं नाकाशस्येति वदता अन्वयाभावः स्वसिद्धान्तन्याय इति सूचितं भवति ।

**कं०रा०— एतत्पादाधिकरणेति** । एतत्पादाधिकरणेषु समन्वेतव्या ये विषया ये च पूर्वपक्षन्यायाश्च तान् सङ्ग्रहेण दर्शयतीत्यर्थः । **एतच्चेति** । लिङ्गं साधारणं शब्दावित्यादिकं च प्राणानां ग्रन्थिरसि, रुद्रो वै लोकायतनं वायुना गौतमसूत्रेण अयं च लोकः परश्च लोकः सर्वाणि भूतानि सन्दृब्धानि भवन्ति । सर्वे वा एते प्राणाश्च प्राणिनश्च देवाश्च दिव्यानि च लोकाश्च लोकिनश्च विष्णवावेवौताः प्रोताश्च भवन्तीत्यादेर्द्युभ्वाद्यायतनत्व-मज्ञानां लिङ्गम् ॥ १ ॥ प्राणो वा आशाया भूयान् विष्णुर्देवेभ्यो भूयान् तस्माद्भूयान्नामेत्यादेर्ज्ञानां (?) साधारणः ॥ २ ॥ विष्णोश्चेतनप्रकृतेश्चाविनाशित्वसाम्यादक्षरशब्दः साधारणः ॥ ३ ॥ कारणत्वसाम्याद्विष्णोरचेतनप्रकृतेश्च सदेवे-त्यादिसृष्टिस्थानं च साधारणम् ॥ ४ ॥ लिङ्गं हृत्पद्मस्थितत्वं साधारणम् ॥ ५ ॥ कथं तु तद्विजानीयामित्यानु-कूल्येन ग्रहणं कस्येति विचार्यम् । अनुग्रहः ॥ ६ ॥ पुनः शब्द ईशानः ॥ ७ ॥ वज्रम् ॥ ८ ॥ ज्योतिः ॥ ९ ॥ आकाश इति ॥ १० ॥ लिङ्गं स्वप्नादिदर्शनम् । कस्येति ॥ ११ ॥ शब्दो ब्राह्मण इति ॥ १२ ॥ यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः ओतं प्राणा ओता इत्यत्रोक्तानां लिङ्गानामन्यत्र रुद्रादिविषये बाहुल्यम् । प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः प्राणेश्वरः कृत्तिवासाः पिनाकी मनो वै रुद्र ओतं च प्रोतं च रुद्रो वाव लोकाधार इत्यादिकं शब्दबाहुल्यं प्राणो वा आशाया भूयानित्युक्त्वा प्राणाद्भूयसोऽनुक्तिः । अत्तेत्युक्तत्वात् न तदश्नाति किञ्चनेति विरुद्धता । बहु स्यां प्रजायेयेति अन्यस्यान्यभावादृष्टिः । दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तद-न्वेष्टव्यमित्यनेन यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय इत्यस्यान्वयाभावः । तदेतदिति मन्यन्ते । कथं नु तद्विजानीयामिति तेषां सुखं शाश्वतमित्युक्तज्ञानिसुखग्रहणमिति विपरीतश्रुतिभ्रमः । ऊर्ध्वं प्राणमुन्नयतीत्यादि-लिङ्गानां प्राणादन्यत्रावकाशराहित्यमिति भ्रमः । एवमेवैष प्राण इतरान्प्राणान् पृथक् पृथगेव सन्निधत्ते इत्यादि-वाक्यभ्रमः । वज्रशब्द उद्यतत्वलिङ्गं च तादृग्द्वयम् । आदित्यादिज्योतिष्ट्वमुभयलोकसञ्चरणमादित्येनैवायं ज्योतिषास्त इत्यवधार्यमित्यादीनां परमात्मन्यवकाशाभावः । बहुतादृग्वै नामेति प्रसिद्धिद्योतकनिपातद्वयं रूढियोगेनोक्तम् । यौगिकार्थस्याङ्गीकारे विरोधिजीवेश्वराभेदे ईश्वरोक्तावप्यर्थाज्जीव एवोच्यत इत्यर्थात्तथाऽवगतिः । ब्राह्मणशब्दस्य पापालेपलिङ्गस्य च चतुर्मुखस्य परमात्मना भेदं विनाऽवकाशराहित्यार्थादभेदप्राप्तिरिति समस्त-मेतत् । तेषामेव लिङ्गशब्दानां प्राणानां ग्रन्थिरसीत्यादीनां विष्णौ मुख्यवृत्तिरिति बलवत्त्वं तस्य रुद्रावरणादि-कर्तृत्वं मुख्यप्राणस्य विष्णोः सकाशात् भूयस्त्वानुक्तिः । चशब्देन एष तु वा अतिवदति । यः सत्येनाति-वदति । प्राणाद्विष्णोर्भूयस्त्वोक्तिश्च सर्वाधारप्रकृत्याधारत्वं विष्णोरन्यस्य विरुद्धम् । पतिं विश्वस्यात्मेश्वरम् । विश्वात्मानं परायणमिति श्रुतेः । अनशनोक्तिस्त्वनुपजीवनार्थत्वेनैव सावकाशा । अचेतनस्येक्षणा दृष्टिः बहुभाव-श्रुतिस्त्वन्यभावं विना तत्तन्नियामकतया स्वरूपबहुत्वार्थत्वेनैव युज्यते । आकाशपक्ष एवान्वयाभावः । विष्णुपक्षे तु योऽन्वेष्टव्यो भगवांस्तस्यान्तर्हृदये यावान्वाऽयमाकाशस्तावानाकाशस्तस्मिन्द्यावापृथिवी अन्तरेव समाहिते स भगवानात्माऽपहतपाप्मेत्यन्वयः । यज्ज्ञानाच्छाश्वतं सुखम् । स भगवान्यद्ब्रह्मानिर्देश्यं सुखमिति





वदन्ति । तदेतत्स्वरूपमिति मन्यन्ते । अतः पूर्ववादाद्विपरीतैव श्रुतिः । पूर्ववादोक्तयोजना तु भ्रम एव । लिङ्गानां परमात्मन्यवकाशो विद्यत एवेति तद्राहित्यं भ्रम एव । वामनश्रुतेरेवानवकाशप्रतीतेरीशानशब्दोक्तो विष्णुरेव । वज्रशब्दस्य उद्यतत्वस्य च विष्णावेवावकाशः । उद्यमितत्वमेवोद्यतत्वमिति । अयं पुरुष इति । संसारी आत्मशब्दोदित एव विष्णुः । अत आदित्यादिज्योतिष्ट्वं संसारिण एव आदित्येनैवेत्यवधारणं बाह्यज्योतिष्ट्वं प्राधान्यापेक्षयेत्यादि लोकसञ्चरणं जीवमादाय तस्यैवादुःखेन स्वातन्त्र्यात् । वै नामेति निर्वहितृत्वे श्रुत्यादिप्रसिद्धबाहुल्यं प्रसिद्धाकाशस्योक्तमनामरूपत्वं विरुद्धम् । सुषुप्त्युत्क्रान्त्योर्जीवेशयोर्भेदोक्तेरसङ्गतत्वादिति चेश्वरस्यैवेत्यर्थाद्भवति । जीवस्य तदयुक्तेरीशे सावकाशत्वाच्च । ब्रह्मणा वेदेन गम्यत इति ब्राह्मणशब्दो विष्णावेव युज्यत इत्यर्थादजशब्दोऽपि तस्मिन्नेव चतुर्मुखस्य कर्मफलाभावायुक्तेस्तयोर्भेदोऽर्थादापद्यते । उक्तविरोधश्च तत्रैव भेदश्रुतिबाहुल्यात् तल्लिङ्गं स शब्दश्चतुर्मुखे सावकाश इति । समस्तमेतदिति । न्यायविवरणे स्वयमेवाचार्यैर्व्याख्यातमिति । तत्रैवावगन्तव्यम् । अतो नास्माभिर्व्याख्यायत इति भावः । लिङ्गवचनविपरिणामेन सर्वत्रान्वितेन साधारणशब्देन सर्वेषामुभयत्र प्रसिद्धिः । द्विस्थिता इत्यनेन तु पूर्वोत्तरपक्षे हेतुमतोक्तेति द्रष्टव्यम् । हृत्पद्मस्थितत्वादीनामुभयत्र प्रसिद्धत्वानुपपादनं तु द्युभ्वाद्यायतनत्वादीनां श्रुत्यन्तरादिभिरुभयत्रप्रसिद्धत्वस्योपपादितत्वात् तन्न्यायेन तेषामुभयत्रप्रसिद्धत्वं स्वयमेव ज्ञास्यन्तीत्याशयेनेति ध्येयम् । वैनामेति । प्रसिद्धिद्योतकनिपातद्वयम् । रूढित्यागेनोक्तयौगिकार्थस्याङ्गीकारे विरोधीति न्यायविवरणानुसारेण बहुतादृत्तवमुक्तस्य विरोध्यर्थात्तथा गतिरिति पठितव्यम् । विरोधोऽर्थात्तथा गतिरिति पाठेऽपि विरोधशब्दः कर्तृव्युत्पत्त्या विरोधिपर इति द्रष्टव्यम् ।

**शे०वा०**— ननु लिङ्गं साधारणमित्याद्युत्तरभाष्यमनर्थकम् । न चैतत्पादीयाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायानां सङ्ग्रहेण प्रदर्शनार्थं तदिति वाच्यम् । वक्तव्यविशेषाभावे विषयाद्यप्रदर्शनेऽप्यविरोधात् । तद्भावे तु सम्यगेव व्याख्येयतया, सङ्ग्रहेण विषयादिप्रदर्शनस्य पक्षद्वयेऽप्ययोगादित्याशङ्कां सङ्ग्रहप्रयोजनोक्त्या परिहरन्नेव तत्परतयोत्तरवाक्यं योजयति **अतःपराणीति** । ननु किं तल्लिङ्गशब्दादि, कुत्र च साधारणं, कथं च साधारणम् । साधारणत्वे वा कथं तस्य भगवदेकविषयत्वम् । किञ्चैताल्लिङ्गशब्दबाहुल्यादिकं कथं च तस्य पूर्वपक्षसिद्धान्तसम्बन्धित्वमित्यत आह **एतच्चेति** । **व्याख्यातमिति** । 'प्राणानां ग्रन्थिरसि' इत्यादिना 'यस्मिन्द्यौः' इत्यादिना 'तेषामेव' इत्यादिना चेति शेषः । अत्र साधारणमित्यस्य विचार्या इत्यस्य च यथाऽन्वयं लिङ्गवचनविपरिणामेन सर्वत्रान्वयो द्रष्टव्यः । द्विस्थिता इत्येतत्तु साधारणमित्यस्योक्तरीत्या सर्वत्रानुवृत्तिज्ञापनार्थमेवोक्तम् । यद्वा उक्तरीत्या साधारणशब्देन सर्वेषामुभयत्रप्रसिद्धिः । द्विस्थिता इत्यनेन तु पूर्वोत्तरपक्षहेतुमत्तोक्तेत्यवधेयम् । लिङ्गमिति पृथगुक्तत्वाच्छब्दौ शब्दा लिङ्गशब्दावित्यत्र शब्दशब्दो नामविषयो बोध्यः । **तत्रैवावगन्तव्यमिति** । एतच्च न्यायविवरणस्यागतार्थत्वायोक्तम् । अन्यथैतट्टीकानुसारेण न्यायावगतौ, पृथक् न्यायविवरणस्याध्ययनाध्यापनादिरूपप्रेक्षावत्प्रवृत्तिविषयत्वं न स्यादिति सम्प्रदायः ।





**वा०र०— सम्यगेवेति** । ततश्च विषयादिमात्रप्रदर्शनमयुक्तमिति भावः । व्याख्येयतयेत्यन्तं पक्षद्वयेऽप्ययोगोपपादकं तयेत्यनन्तरमित्येवमिति पूरणे तु स्पष्ट उपपाद्योपपादकाभावः । मूले **करोमीति चेति** करोम्यन्वपीति योज्यम् । कथं तस्य भगवदिति यद्यपीदं पृथङ् न समाहितं तथापि बलवत्प्रतिपादनेन तत्समाधानलाभ इति भावेनेदमुक्तम् । अस्य स्वप्नस्य चरमत्वेऽपि साधारणमित्येतत्सङ्गतत्वात् क्रमव्यत्यासः । **ग्रन्थिरसीत्यादिनेति** । आदिपदेन रुद्रादौ प्रसिद्धिसाधकरुद्रो वै लोकायतनं वायुना वै गौतमेत्यादेः विष्णौ प्रसिद्धिसाधकसर्वे वा एते प्राणाश्चेत्यादि विष्णावेवोताश्च प्रेताश्च भवन्तीत्यादेर्द्युभ्वाद्यायतनत्वमज्ञानां साधारणं लिङ्गमिति प्रथमाधिकरणविषयोपाधिप्रदर्शकप्रतिज्ञाभागस्य च ग्रहणवत्प्राणो वा आशाया भूया विष्णुर्वै सर्वेभ्यो भूयांस्तस्माद्भूयान्नामेत्यादेर्भूमशब्दोऽज्ञानां साधारण इत्यादिशब्दो ब्राह्मण इतीत्यन्ततत्तदुपाधिप्रदर्शनपरग्रन्थस्य ग्रहणम् । यस्मिन् द्यौरित्यादिनेत्यादिपदेन पृथिवी चान्तरिक्षमित्यादेरर्थादभेदप्राप्तिरिति समस्तमेतदित्यन्तस्य ग्रहणम् । तेषामेवेत्यादिनेत्यादिपदेन लिङ्गशब्दानामित्यादि मकारभ्यतल्लिङ्गंसशब्दश्च(?) चतुर्मुखेऽनवकाश इति समस्तमेतदित्यन्तस्य ग्रहणम् । रघूत्तमस्वामिकृतन्यायमालाप्रदीपानुसारेण च तत्र पादे पूर्वपक्षसिद्धान्तन्यायविवेको ज्ञेयः । चन्द्रिकानुसारेणाक्षरयोजनामाह **अत्रेति** । लिङ्गशब्दावित्यनन्तरं हि इत्येते इति सम्पूर्य विचार्य इति योजनायां द्विस्थिता इत्यस्य वैय्यर्थ्यं साधारणपदेनैव तदर्थलाभादत आह **हीति** । **न्यायतया कथनादिति** । न्यायतया कथनात्प्राप्तं यन्मुक्तोपसृप्यतेत्यादिसिद्धान्तन्यायप्रदर्शकोत्तरवाक्यवैय्यर्थ्यं तदिति योजनासूचितं द्रष्टव्यमिति रघूत्तमतीर्थकृतन्यायमालाप्रदीपाद्यनुसारेणेति शेषः । मूलेऽभिधायेत्यनेनैव बाहुल्यं लिङ्गेति भाष्यविषयोऽपि सूचितः । साक्षात्सूत्रोक्तन्यायप्रदर्शनाय प्रवृत्तानुव्याख्याने गौणमुख्यसूत्रोक्तमुक्तोपसृप्यतादीनामिव प्रथमसूत्रोक्तात्मशब्दानुपादानं कुतः इति विचार्यं मान्यान्प्रति न तदिति अनर्थकमित्येतच्छब्देन परामृश्यत इति नानर्थकमित्यर्थः । शिष्टं तत्र तत्र व्याख्येयमस्ति ।

**स०व्र०— तदुभयसिद्ध्यर्थमिति** । वक्तव्यत्वावक्तव्यत्वोभयसिद्ध्यर्थमित्यर्थः ।

**विठ्ठल०— तदुभयेति** । अत्रावक्तव्यत्वप्रतिज्ञाततत्वोभयेत्यर्थः ।

**॥ इति सूत्रसूचितन्यायाः ॥**

* * *

**॥ अथ च साक्षादुक्तन्यायाः ॥**

११ **सु०— सूत्रसूचितान् सिद्धान्तन्यायानभिधाय साक्षादुक्तानप्याह मुक्तेति ।**

## अनु० — मुक्तोपसृप्यता प्राणादाधिक्यं सर्वतस्तथा ॥





**वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वक्रिया तथा ।**
**अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा ॥**

**वामनाख्या सर्वकम्पस्तच्छब्दानन्यसिद्धता ।**
**अनामरूपता भेदस्योपजीव्यप्रमाणता ॥**

**सर्वैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः ।**

अत एव पूर्वं दृश्यन्त इत्युक्त्वाऽत्र प्रदर्शिता इत्युक्तम् ।

'सर्वतस्तथा' इत्येतत्पूर्वेणोत्तरेण च सम्बध्यते; प्राणादाधिक्यं तथा सर्वत आधिक्यमिति, स्वभावस्य सर्वतो वैलक्षण्यं तथाऽम्बरान्तधृत्यादीति । **प्रेक्षापूर्वक्रिया तथेति** तथाशब्द उत्तरत्र सम्बध्यते, तेनापहतपाप्मत्वादीनां ग्रहणम् । **सूर्याद्यनुकृतिस्तथा** सर्वप्रकाशकत्वम् । **तच्छब्दानन्यसिद्धतेति** ज्योतिःशब्दस्यान्यत्रासम्भव इत्यर्थः । उपजीव्यं प्रमाणं यस्यासौ तथोक्तस्तस्य भाव **उपजीव्यप्रमाणता** । (ता) इति सिद्धान्तयुक्तयः ।

**परि०— इत्युक्तमिति** । प्रदर्शिताः प्रकर्षेण दर्शिताः न तु सूचिता इत्यर्थप्रतीतेरिति भावः । भेदस्योपजीव्यप्रमाणतेत्येतद्घटयति **उपजीव्यं प्रमाणमिति** । जीवांशे प्रत्यक्षं ईश्वरांशे च श्रुतिवाक्यमित्यर्थः । भेदबोधकं प्रमाणमैक्यस्योपजीव्यमिति यावत् । सर्वैश्वर्यादिकाद्या इत्यनन्तरम् इतिशब्दमध्याहृत्य ता इत्यस्यार्थमाह **इति सिद्धान्तयुक्तय इति** ।

**यादु०— सूत्रसूचितानिति** । उक्तन्यायानां सूत्रसूचितत्वप्रकारश्च सूत्रसूचिताख्यग्रन्थे भावबोधकारैः प्रदर्शितः तत्रैवानुसन्धेयः । **साक्षादुक्तानिति** । मुक्तोपसृप्येत्यनेन मुक्तोपसृप्यता, अध्युपदेशादित्यनेन प्राणात्सर्वतश्चाधिक्यम्, अन्यभावव्यावृत्तेश्चेत्यनेन स्वभावस्य सर्वतो वैलक्षण्यं, अम्बरान्तधृतेरित्यनेनाम्बरान्तधृत्यादि, ईक्षतिकर्मेत्यनेन प्रेक्षापूर्वक्रिया, दहर उत्तरेभ्य इत्यनेनापहतपाप्मत्वादिकं, तथा हि दृष्टं लिङ्गं चेत्यनेन अरस्य ण्यस्य चेशत्वं, अनुकृतेस्तस्य चेत्यनेन सूर्याद्यनुकृतिः सर्वप्रकाशकत्वं च शब्दादेवेत्यनेन वामनाख्या, कम्पनादित्यनेन सर्वकम्पः, ज्योतिर्दर्शनादित्यनेन तच्छब्दानन्यसिद्धता, आकाशोऽर्थान्तरत्वादित्यनेनानामरूपता,

सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यनेन भेदस्योपजीव्यप्रमाणता, पत्यादिशब्देभ्य इत्यनेन सर्वैश्वर्यादिकं, साक्षादुक्तमिति ज्ञातव्यम् ।

**वं०प०— अत एवेति**। पूर्वोक्तानां सूचितत्वादेतेषां तु साक्षादुक्तत्वादेवेत्यर्थः।

**आनन्दः**— ननु मुक्तोपसृप्यतेत्यादिना सिद्धान्तन्यायकथनमयुक्तम्। तेषामिदानीमेवोक्तत्वे पुनरुक्तत्वादित्यत आह **सूत्रसूचिताविति**। एतच्च प्रागेव विवृतम्। **अत एवेति**। यतो बाहुल्यमित्यादयः। सूचितविमुक्तोपसृप्यतादयः साक्षादुक्ताः अत एवेत्यर्थः। सर्वतस्तथेत्यस्य पूर्वोत्तरसम्बन्धं दर्शयति **प्राणादिति**। **उत्तरत्रेति**। अस्य चेशत्वमित्युत्तरत्रेत्यर्थः।

**कं०रा०— साक्षादिति** । साक्षात्सूत्रोक्तानपि सिद्धान्तन्यायानाहेत्यर्थः । **अत एवेति** । उक्तानां सिद्धान्तन्यायानां सूत्रसूचितत्वान्मुक्तोपसृप्येत्यादिना उच्यमानानां सिद्धान्तन्यायानां तु साक्षात्सूत्रोक्तत्वादेव पूर्वं दृश्यन्त इत्युक्त्वा अत्र वेदेशेन प्रदर्शिता इत्युक्तमित्यर्थः । **सर्वतस्तथा** इत्यस्य पूर्वेण सम्बन्धप्रकारं दर्शयति **प्राणादाधिक्यं तथा सर्वत आधिक्यमितीति**। प्राणादाधिक्यं सर्वत आधिक्यं च भूमा सम्प्रसादादध्युपदेशादिति सूत्रोक्तमिति भावः । सर्वतस्तथेत्यस्योत्तरेण सम्बन्धप्रकारं दर्शयति **स्वभावस्येति** । ईश्वरस्वभावस्य सर्वतो वैलक्षण्यमन्यभावव्यावृत्तेश्चेति सूत्रोक्तं समुच्चयार्थकतथाशब्देनोक्तमम्बरान्तधृतेत्यादिकं तु अक्षरमम्बरान्तधृतेः सा च प्रशासनादिति सूत्राभ्यामुक्तमिति भावः । प्रेक्षापूर्वक्रिया तथेत्यत्र समुच्चयार्थकतथाशब्दस्योपयोगो नास्ति । ईक्षतिकर्मव्यपदेशात्स इत्यत्र युक्त्यन्तरानुक्तेत्यभिप्रेत्य तथाशब्दस्योत्तरत्रैव सम्बन्ध इत्याह **प्रेक्षापूर्वक्रिया तथेति । तथाशब्द उत्तरत्र सम्बध्यत इति । तेनेति**। अरण्यश्च ह वै चेशत्वमित्युत्तरवाक्ये सम्बन्धेन समुच्चयार्थकतथाशब्देन दहर उत्तरेभ्य इति प्रधानसूत्रोक्तानां अपहतपाप्मत्वादीनां ग्रहणमित्यर्थः । न च वाच्यं द्युभ्वाद्यधिकरणीयप्रधानसूत्रोक्तात्मशब्दरूपसिद्धान्तन्यायस्य मुक्तोपसृप्येत्यादिसङ्ग्रहकारिकायामनुक्तिरयुक्तेति । विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान् श्रुतिर्वक्तीति पूर्वमेवात्मशब्दरूपन्यायस्योक्तत्वेनात्रानुक्त्युपपत्तेः । अपहतपाप्मत्वादीनां ग्रहणमित्युपलक्षणम्। गतिशब्दाभ्यामित्युक्तयोः सुप्तगम्यत्वब्रह्मशब्दयोः धृतेश्च महिम्न इति सूत्रोक्तस्य धृतिरूपलिङ्गस्यैष सेतुर्विधारण इति श्रुतियुक्ताया य एषोऽन्तर्हृदय आकाशस्तस्मिन्निति वाजसनेयश्रुतिसमाख्यायाश्च प्रसिद्धश्चेति सूत्रोक्तायास्तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमिति तैत्तिरीयश्रुतिसमाख्यायाश्च ग्रहणमित्यपि द्रष्टव्यम् । यद्वा अपहतपाप्मत्वादीनामित्यादिशब्देन धृत्यादयोऽपि गृह्यन्त इति व्याख्येयम्। सूर्याद्यनुकृतिस्तथेत्यत्र तथाशब्देनानुकृतेस्तस्य चेति सूत्रस्थचशब्दोपात्तं तस्य भासा सर्वमिदं विभातीति श्रुत्युक्तं सर्वप्रकाशकत्वं गृह्यत इत्यभिप्रेत्याह **तथा सर्वप्रकाशकत्वमिति । ज्योतिःशब्दस्येति** । विष्णुरेव ज्योतिः विष्णुरेव ब्रह्मेति श्रुतिबलाज्ज्योतिःशब्दस्य विष्णोरन्यत्रासंभव इति भावः । आकाशोऽर्थान्तरत्वादिव्यपदेशादित्यत्र ते यदन्तरा तद्ब्रह्मेति श्रुतस्य सूत्रस्थार्थान्तरत्वशब्दोक्तस्य नामरूपराहित्यस्य स्पष्टत्वादनामरूपतेत्येतन्न व्याख्यातम्। ननु सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रोक्तप्राज्ञेनात्मना सम्परिष्वक्त





इत्यादिश्रुत्या व्यपदिष्टस्य जीवेश्वरभेदस्य धर्मिग्राहकत्वेनाभेदग्राहकप्रमाणं प्रत्युपजीव्यं यत्प्रमाणं तत्सिद्धत्वेऽप्युपजीव्यं यत्प्रमाणं तद्रूपत्वाभावात्कथं भेदस्युपजीव्यप्रमाणतेत्युक्तमित्यत आह **उपजीव्यमिति** ।

**शे०वा०**— 'ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः । सिद्धान्तयुक्तयो ज्ञेयाः' इति निरवकाशश्रुतिलिङ्गबाहुल्यादीनामेव सिद्धान्तन्यायतया कथनात् । मुक्तोपसृप्यतेत्यादिसिद्धान्तन्यायप्रदर्शकोत्तरवाक्यवैयर्थ्यं सिद्धान्तन्यायेष्वप्यवान्तरभेदसूचनेन परिहरन्नुत्तरग्रन्थतात्पर्यमाह **सूत्रसूचितानिति** । अतच्छब्दादित्यनेन यथा रुद्रसमाख्यास्थानां रुद्रपिनाक्यादिनामलिङ्गानामपि मुख्यतो रुद्रादिशब्दत्वं नास्ति । तथा विष्णुसमाख्यानां विष्णवादिशब्दानामपि रुद्रादिशब्दत्वं **मुख्यतो नास्ति** । 'न तु नारायणादीनां नाम्नामन्यत्र सम्भवः । अन्यनाम्नां गतिर्विष्णुः' इति भाष्योदाहृतस्मृतेः । तथा च रुद्रसमाख्या सावकाशा विष्णुसमाख्या निरवकाशेति सूचनेन रुद्रादिशब्दानामन्तकत्वादिलिङ्गानां च विष्णौ मुख्यत्वलाभात् । श्रुतिलिङ्गबाहुल्यन्यायस्तत्सूत्रखण्डसूचितः । एवमनुक्त्यादीनामपि तत्तत्सूत्रसूचितत्वं द्रष्टव्यम् । **साक्षादुक्तानिति** । मुक्तोपसृप्यव्यपदेशादित्यादिभिर्मुक्तोपसृप्यत्वादिन्यायानां साक्षादभिधानादिति भावः । सिद्धान्तन्यायेषु सूत्रसूचितत्वतत्तत्सूत्रसाक्षादुक्तत्वरूपोक्तप्रकारद्वैविध्यस्य भाष्यकृत्सम्मतत्वं भाष्यकारीयज्ञापकोत्त्या दर्शयति **अत एवेति** । अन्यथोभयत्र दृश्यन्त इत्येव वा प्रदर्शिता इत्येव अवक्ष्यदिति भावः ।

ननु सर्वतस्तथेत्येतन्न प्राणाधिकरणसिद्धान्तन्यायाभिधानम् । प्राणादाधिक्यमित्यनेनैव तदुक्तेः । नाप्यक्षराधिकरणसिद्धान्तन्यायाभिधानम् । वैलक्षण्यं स्वभावस्येत्यनेनैव तत्कथनात् । तस्मादनर्थकमेतदित्यतोऽधिकरणद्वयेऽपि सिद्धान्तन्यायान्तरकथनरूपत्वान्न तदित्यभिप्रेत्य तथा योजयितुं तत्तदधिकरणसिद्धान्तन्यायसमर्पकभाष्यखण्डेन सम्बन्धं तावदाह **सर्वतस्तथेत्येतदिति** । **पूर्वेणोत्तरेण चेति** । प्राणादाधिक्यमिति पूर्वेण वैलक्षण्यं स्वभावस्य चेत्युत्तरेण चेत्यर्थः । पूर्वोत्तरसम्बन्धमेव दर्शयति **प्राणादाधिक्यमित्यादिना** । तथा च प्राणादाधिक्यमित्यनेन व्यतिहारो विशिंषन्ति हीतरवदिति सूत्रान्तरोक्तन्यायाभिधानेऽप्यध्युपदेशादित्येतत्सूत्रोक्तसर्वाधिकत्वरूपहेत्वन्तरकथनार्थतया पूर्वत्र वैलक्षण्यं स्वभावस्येत्यनेनान्यभावव्यावृत्तेश्चेति सूत्रोक्तहेत्वभिधानेऽप्यक्षरमम्बरान्तधृतेरित्यादिसूत्रद्वयोक्तहेतुद्वयकथनार्थतया 'वैलक्षण्यं स्वभावस्य' इत्यनेन च सम्बन्धस्य सप्रयोजनत्वमुक्तं भवति । ईक्षतीत्यत्र सूत्रोक्तहेत्वन्तरपरतया तथेत्यस्य सार्थक्यं न पूर्ववद्वक्तुं शक्यं, प्रेक्षापूर्वकक्रियातिरिक्तसूत्रोक्त**हेत्वन्तराभावात्** इत्यतो, न तथाशब्दस्य **प्रेक्षापूर्वक**क्रियेत्यनेन सम्बन्धः, किं तूत्तरत्रैवेति भावेनाह **प्रेक्षेति** । **उत्तरत्रेति** । **अ**रस्य ण्यस्य चेशात्वमित्युत्तरत्रेत्यर्थः । तत्राप्यरस्य ण्यस्य चेशात्वमित्यनेनैव सिद्धान्तन्यायकथनात् । **किं** तथाशब्देनेत्यतो गतिशब्दाभ्या**मिति** सूत्रोक्तसाधकस्य तेनाभिधानेऽपि दहर उत्तरेभ्य इत्यादिसूत्रोक्तापिहतपाप्मत्वादिसङ्ग्रहार्थत्वात्तथाशब्दस्यार्थवत्त्वमित्याह **तेनेति** । अनुकृतेरिति सूत्रखण्डोक्तलिङ्गस्य सूर्याद्यनुकृतिरित्यनेनाभिधानेऽपि तस्य चेत्युक्तसर्वप्रकाशत्वरूपलिङ्गस्यानभिधायकतया तथाशब्दं योजयति **तथा सर्वप्रकाशकत्वमिति** । **ज्योतिःशब्दस्यान्यत्रासम्भव इति** । विष्णुरेव ज्योतिरिति भाष्योदाहृतश्रुताववधारणेन **'नारायणः** परंज्योतिः', 'परं ज्योतिरुपसंपद्य **तदेवा** ज्योतिषां ज्योतिः'

इत्यादिश्रुतिषु परत्वादिविशेषणेन च ज्योतिःशब्दस्य विष्णावेव मुख्यत्वावधारणादिति भावः । भेदस्योपजीव्यप्रमाणतेति सुषुप्तीत्यत्र सिद्धान्तन्याय इत्युक्तं तदयुक्तम् । भेदस्योपजीव्यप्रमाणत्वासम्भवात् इत्यतोऽत्र भेदव्यपदेश एव सिद्धान्तन्यायः, उपजीव्यत्वोक्तिस्तु प्राबल्यसूचनेन सिद्धान्तसाधकत्वोपपादनार्थेत्यभिप्रेत्य तदर्थमाह **उपजीव्यमिति** ।

**स०व्र०**— 'मुक्तोपसृप्यव्यपदेशात्' इत्यनेन मुक्तोपसृप्यता 'भूमासम्प्रसादादध्युपदेशात्' इत्यनेन प्राणात्सर्वतश्चाधिक्यम् । 'अन्यभावव्यावृत्तेश्च' इत्यनेन स्वभावस्य वैलक्षण्यम् । 'अक्षरमम्बरान्तधृतेः' इत्यनेन अम्बरान्तधृत्यादि । ईक्षतिकर्मव्यपदेशात्सः' इत्यनेन प्रेक्षापूर्वक्रिया 'दहर उत्तरेभ्य' इत्यनेनापहतपाप्मत्वादिकम् । 'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च' इत्यनेनारस्य ण्यस्य चेशत्वम् । 'अनुकृतेस्तस्य च' इत्यनेन सूर्याद्यनुकृतिः । सर्वप्रकाशकत्वं च । 'शब्दादेव प्रमितः' इत्यनेन वामनाख्या । 'कम्पनात्' इत्यनेन सर्वकम्पः 'ज्योतिर्दर्शनात्' इत्यनेन तच्छब्दानन्यसिद्धता । 'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इत्यनेन अनामरूपता 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इत्यनेन भेदस्यापजीव्यप्रमाणता, 'पत्त्यादिशब्देभ्यः' सर्वैश्वर्यादिकं प्रदर्शितमित्यवगन्तव्यम् ।

**विठ्ठल०**— सर्वतस्तथाशब्दस्यानुक्तसमुच्चयार्थत्वमिति भावेनाह **तथा वसन्तेति** । एवमुपर्यपि द्रष्टव्यम् । **तदुत्तरत्रेति** । दहर उत्तरेभ्य इत्यत्रेत्यर्थः । भेदस्योपजीव्यप्रमाणतेत्येतद्घटयति **उपजीव्यमिति** । मुक्तोपसृप्यतेत्यस्य स्पष्टमर्थोऽभिहितो नयचन्द्रिकायाम् । मुक्तोपसृप्यताममृतस्यैष सेतुरिति तत्रोदाहरणश्रुतिः । भूमासंप्रसादादिति प्राणादाधिक्यं एष तु वाभिवदतीत्यादि श्रुतिः । अन्यभावव्यावृत्तेश्चेति स्वभावस्य सर्वतो वैलक्षण्यं अस्थूलमनण्वित्यादिश्रुतिः । ईक्षतिकर्मव्यपदेशादिति प्रेक्षापूर्वक्रिया सदेव सोम्येति एकमेव । तदैक्षत तत्ते जातेत्यादिश्रुतिः । गतिशब्दाभ्यामित्यत्रारस्य ण्यस्य चेशत्वं, अरश्च ह वै ण्यश्चेति श्रुतिः । अनुकृतेरित्यत्र सूर्याद्यनुकृतिः, तमेव भान्तमिति श्रुतिः । शब्दादेवेत्यत्र वामनाख्या, मध्ये वामनमासीनमिति श्रुतिः । कम्पनादिति सर्वकम्पः प्राण एजतीति श्रुतिः । ज्योतिर्दर्शनादित्यत्र विष्णुरेव ज्योतिरित्यादि श्रुतिबलाज्ज्योतिःशब्दस्यानन्यसिद्धता । योऽयं विज्ञानमयः प्राणेष्विति श्रुतिः । आकाशाऽर्थान्तरत्वादिव्यपदेशादित्यत्र आकाशो ह वैनामरूपयोर्निर्वहिता, ते यदन्तरा तद्ब्रह्म तदमृतमिति श्रुतिः । सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्र भेदस्यागमः प्रत्यक्षं च उपजीव्यप्रमाणं यस्मिन् स भेदः उपजीव्यः प्रमाणः प्राज्ञेनात्मना संपरिष्वक्तः, प्राज्ञेनात्मनान्वारुढ इति श्रुतिः । पत्यादिशब्देभ्य इत्यत्र सर्वैश्वर्यं एता युक्तयस्तु वेदेशेन प्रकर्षेण च दर्शिता इति ।

**चषकः**— **सूत्रसूचितान्** सूत्रघटकपदध्वनितान् । **साक्षादुक्तान्** तद्घटकपदोपस्थितान् ।

**॥ इति साक्षादुक्तन्यायाः ॥**

**॥ इति सप्रयोजनमेतत्पादाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायान् सङ्ग्रहेण दर्शनम् ॥**

* * *





**॥ अथ 'तदुपर्यपि....', 'शुगस्य....' इत्यधिकरणद्वयस्य सङ्गत्यभावशङ्का तन्निरासश्च ॥**

**॥ तत्रादौ एतदधिकरणद्वयस्य समन्वयप्रदर्शनार्थतान्यविषयकत्वम् ॥**

**१२ सु०— नन्वत्र पादे चतुर्दशाधिकरणानि भाष्यादवगम्यन्ते । विषयाः, पूर्वपक्षन्यायाः सिद्धान्तन्यायाश्चात्र द्वादशैवोक्ताः । न च विषयादिना विनाऽधिकरणं सम्भवति । तत्कथमेतदिति चेत् । इत्थम् । 'तदुपर्यपि बादरायणः सम्भवात्', 'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' इत्येतदधिकरणद्वयं न समन्वयसमर्थनार्थम्, किं नाम 'देवादीनां वेदविद्याधिकारसमर्थनार्थमाद्यम्, द्वितीयं तु त्रैवर्णिकव्यतिरिक्तानां तदभावसमर्थनार्थमित्येतज्ज्ञापयितुमेतदधिकरणद्वयविषयाद्यनुक्तिः । अन्यथा तत्रापि समन्वयसम्बन्धान्वेषणेन शिष्याणां वृथा प्रयासः प्रसज्येत ।**

**वं०प०— तदभावेति** । अधिकाराभावेत्यर्थः ।

**आनन्दः—** भाष्ये चतुर्दशाधिकरणानामुक्तत्वादित्यत्र च द्वादशविषयादीनामुक्तत्वात्तद्विरोधं शङ्कते **नन्वत्रेति** । **अन्यथेति** । एतदधिकरणद्वयविषयाद्युक्तावित्यर्थः ।

**शे०वा०— न च विषयादिना विनेति** । विषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनरूपपञ्चाङ्गत्वात् अधिकरणस्य विषयाद्यभावे नाधिकरणत्वं सम्भवतीत्यर्थः । 'तदुपर्यपि' इति सूत्रे तदुपरीति समास आश्रितः । अत्र वदन्ति । नात्र षष्ठीसमास आश्रयितुं शक्यते । 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इत्यव्ययेन षष्ठीसमासनिषेधात् । तथा च ब्राह्मणस्य कृत्वेत्यादिवदत्राप्यसमास एव युक्तः । अत एवोक्तम् । कैयटहरदत्ताभ्यामव्ययेन समासनिषेधे वृक्षस्योपरीत्यादिकमप्युदाहरणमिति । न चात्र सूत्रेऽव्ययशब्देन कृदव्ययस्यैव ग्रहणम् । न त्वव्ययमात्रस्य । अत एव ब्राह्मणस्य कृत्वेत्येवोदाहरणं वृत्तिकारादीनाम् । तथा चोपरीत्यस्याव्ययतायामपि कृदव्ययत्वाभावान्नानेन सूत्रेण निषेधप्राप्तिरिति वाच्यम् । सामान्यशब्दत्वादव्ययशब्दस्य अव्ययमात्रपरत्वस्यैव युक्ततया कृदव्ययरूपतद्विशेषपरताया नियामकाभावेनायोगात् । न च 'अनुर्यत्समया' इत्यत्र यस्य समया यत्समयेति समासकरणमेव तत्र ज्ञापकम् । कथमन्यथा यत्समयेति समासः । तत्रापि पूरणगुणेति निषेधप्रसङ्गादिति वाच्यम् । सामीप्यार्थकस्य समयाशब्दस्याद्रव्यत्ववाचित्वादव्ययत्वेऽपीह समयावाचिन्यनुशब्दे समयाशब्दस्य वर्तमानतया द्रव्यवाचित्वात् अनव्ययत्वेन, तत्रोक्तनिषेधाप्रसक्त्या यत्समयेति षष्ठीसमाससम्भवेन तस्य कृदव्ययपरतायामव्ययशब्दस्य ज्ञापकत्वायोगादिति । अत्र ब्रूमः । सूत्रेऽव्ययशब्दस्य कृदव्ययमात्रपरत्वेनाकृदव्ययेन समासानिषेधकत्वेन तदुपरीति समासो युक्त एव । न चात्र नियामकाभाव इत्युक्तम् । सत् तव्येत्यादिपूर्वोत्तपकृत्साहचर्यस्यैव तन्नियामकत्वात् । न चैवं यत्समयेत्यत्राप्युक्तनिषेधाप्रसक्तेर्द्रव्यवृत्तितयाऽनव्ययत्वेन समासोपपादनं हरदत्तादीनामनर्थकमिति वाच्यम् ।





**साहचर्यमनाश्रित्य तस्य प्रकारान्तरत्वात्** । तदाश्रयणे च तत एव यत्समयेति समाससिद्धेरनव्ययत्वा-श्रयणानर्थक्यस्येष्टत्वात् । अवश्यं चैतदेवम्, यदव्ययसमासनिषेधे कृदव्ययानामेव तन्निषेध इति । कथमन्यथा त्वदुपरि मदुपरीत्यादिः सार्वजनीनः प्रयोगः । तथा 'यत्कृतेऽरीन्निगृह्णीम', 'आदेयाः किं कृते भोगाः कुम्भकर्ण त्वया विना' इति । सर्वपश्चात् इत्यन्यपदार्थसूत्रे भाष्यप्रयोगश्च । ('अनेकमन्यपदार्थे' २-२-२४ इति पा. सूत्रे 'एतच्चात्र युक्तं यद्विभक्त्यर्थोऽभिधीयते, तत्र हि सर्वपश्चात्पदं वर्तते अस्येति ।' इति महाभाष्यम् । अत्र कैयटः **'सर्वपश्चादिति** । भाष्यकारवचनप्रामाण्यादव्ययेनापि षष्ठीसमासः' इति ।) अत एव चाव्ययनिषेधे वृक्षस्योपरीत्यादिकमप्युदाहरणमिति कैयटहरदत्तवचनमुपेक्ष्यमेव । ततश्चाकृदव्ययत्वेनोपरीत्यस्य न तेन षष्ठीसमासे किञ्चिद्बाधकमिति सङ्क्षेपः । विषयादीत्यादिपदेन पूर्वपक्षन्यायसिद्धान्तन्याययोर्ग्रहणम् ॥

**वा०र०— प्रयोजनरूपपश्चाङ्गत्वादिति** । ननु प्रयोजनस्याधिकरणफलतया तदङ्गत्वाभावः । अत एव तन्त्रचूडामण्यादौ प्रयोजनस्याधिकरणफलतया तदङ्गत्वाभावादिति युक्त्या मतान्तरं प्रदूष्य सन्देहबीजं पञ्चकान्तर्गतमित्युक्तमिति चेत्सत्यम् । सन्देहबीजमेलनेनैवाङ्गानां पञ्चत्वेऽपि तन्त्रचूडामणावेव प्रथमत उक्त-प्रयोजनं तदङ्गमित्येकदेशिमताश्रयणेनात्रोक्तिः यथा सन्देहबीजपूर्वस्येति चन्द्रिकाकारैर्वास्तवमतस्योक्तत्वेऽपि अखण्डार्थताभङ्गो न्यायामृते परमते विषयादिपञ्चकाभावादिति प्रतिज्ञातविषयाद्यभावोपादानावसरे समन्वयाधि-करणचन्द्रिकायां परमतनिरासावसरे चैतदेकदेशिमतस्योक्तिस्तथेहापीति न दोषः । एवमेवंजातीयकेऽन्यत्रापीति ज्ञेयम् । **समास इति** । देवादित्वप्राप्त्युपरीत्यनेन भाष्येण तस्या उपरीति षष्ठीसमाससूचनादिति भावः । मूलकारो भाष्ये तत्र तत्र प्राप्तानुपपत्तिं परिहरति स्म । अतोऽत्र तदुपेक्षिताभिमानमनुपपत्तिं स्वयमाशङ्क्य निराकृतवान् टीकाकार इति ज्ञेयम् । अव्यययोगे समासनिषेधेऽस्योदेक्षेपरी(?)त्यादिकमप्युदाहरणमिति कैय्यटहरदत्तोक्तिं मूलीकृत्याक्षिपति **अत्र वदन्तीति** । अव्यययोगे समासनिषेधस्य प्रकृते विवक्षास्तीति तथैवोदाहरणं ब्राह्मणस्य कृत्वेत्यादिवदिति सप्तम्यर्थे वतिरयं कैय्यटेति ताभ्यां कृदकृत्साधारण्येनाव्ययमात्रयोगे षष्ठीसमासनिषेधपरत्व-स्वीकारादिति भावः । वृत्तिकारीयविशेषोदाहरणबलादव्ययशब्दस्य कृदव्ययमात्रपरतैवोचिता । ततश्च प्रकृते कृदव्यययोगाभावान्न समासानुपपत्तिरिति शङ्कते **न चात्रेति** । **सामान्येति** । उदाहरणमात्रं तु न नियामकमति-प्रसङ्गादिति भावः । दुर्घटवृत्तिकृता अनुर्यत्समयेत्यत्रेत्याद्याक्षिप्य समयाशब्देनानुशब्दोऽत्रोच्यते इत्यादि प्रति-पादितम् । तदनुसारेणानुर्यत्समयेत्येतत् ज्ञापकत्वेनाक्षिप्य परिहरति **समयावाचिन्यनुशब्द इति** । तथा च सामीप्याख्यसमयावाच्यनुशब्द एव वत्समयेत्यत्र वाच्य इति द्रव्यवाचित्वमित्यर्थः । **स तयेति** । पूर्वोत्तरेति पाठः । **सदिति पूर्वं** तव्येत्युत्तरम् । तव्येत्यादीति पाठो लेखकागतः । सहचरितासहचरितयोः सहचरितस्यैव ग्रहणमिति न्यायमूलपरिभाषया तथा निर्णयादिति भावः । अत एवास्य गोद्वितीयेनार्थ इत्यत्र सदृशो गौरेवो-पादीयते । नाश्वो न गर्दभ इति न्यायो मूलतयोक्तः । परिभाषाभास्करे पूर्वोत्तरसाहचर्यात् कृदेवाव्ययं गृह्यत इत्यादि चेति ज्ञेयम् । साहचर्यमनाश्रित्य प्रकारान्तरं वा तदिति दुर्घटवृत्तिमाश्रित्याह **साहचर्यमिति** । **सार्वजनीन इति** । सर्वजनात् वार्तिकेठञ्खश्चेति सूत्रेण खप्रत्यये सर्वजनीन इत्येव रूपप्रसङ्गेऽपि साध्वर्थे प्रतिज्ञानादिभ्यः





खञिति खञि तु सार्वजनीनवैश्वजनीनौ व्युत्पादिताविति प्रौढमनोरमोक्त्यनुसारेण साध्वर्थे खञ् । ञित्वादादिवृद्धौ सार्वजनीनशब्दस्य साधुत्वमिति ज्ञेयम् । **सर्वपश्चादिति** । अनेकमन्येति सूत्रे ह्यथवा विभक्त्यर्थोऽभिधीयते तत्र हि सर्वपश्चात्पदं वर्तते अस्येतीति भाष्ये सर्वपश्चादिति प्रयोगोऽस्तीत्यर्थः । एतश्चाश्विपश्चाद्वितीयदामनना-दित्यधिकरणस्थभाष्यप्रयोगव्युत्पादनावसरे प्रपञ्चयिष्यते पश्चाच्छब्दस्याव्ययीभावे पूर्वनिपातप्रसङ्गात् समासो नास्तीति सिद्धान्तकौमुद्यादावुक्तम् । उपलक्षणं चैतत् । ततः पश्चात्संशयस्य त इति प्रयोगोऽपि ग्राह्यः । सिद्धान्तकौमुद्यादावुक्तप्रयोगात् पश्चाच्छब्दस्य नाव्ययीभावसमास इत्युक्तेः कृदव्ययनिषेधाभिप्रायेणैव भाष्यप्रयोग इत्यादिकमियदामननादित्यधिकरणे व्युत्पादनं भविष्यति ।

**विट्ठल०— अन्यथेति** । विषयाद्युक्तावित्यर्थः । विषयाद्युक्तौ साजात्येन समन्वयप्रतिपादकत्वप्रतीत्या कथं समन्वयपरत्वमनयोरधिकरणयोरिति तत्सम्बन्धान्वेषणेन शिष्याणां प्रयासः प्रसज्येत । विषयाद्यनुक्तौ तु अधिकरणत्वेन विषयादिसत्त्वेऽपि तदनुक्तौ केनचिन्नियामकेन भाव्यमिति समन्वयाप्रतिपादकत्वमेव निया-मकमिति ज्ञात्वा न समन्वयसम्बन्धान्वेषणे प्रवर्तेयुरिति तदर्थविषयाद्यनुक्तिरिति भावः ।

**।। इति एतदधिकरणद्वयस्य समन्वयप्रदर्शनार्थतान्यविषयकत्वम् ।।**

* * *

**।। ततश्च तत्र एतदधिकरणद्वयस्य अध्यायपादसङ्गत्यभावेऽपि प्रासङ्गिकत्वम् ।।**

**१३ सु०— "नन्वेतद्द्वयमत्र न विचारणीयम्, असङ्गतत्वात् । तथाहि । सङ्गतिस्ताव-द्विविधा भवति । अन्तर्भावलक्षणाऽऽनन्तर्यलक्षणा च । तत्राद्या तावदनयोरधिकरणयोर्न सम्भवति, समन्वयलक्षणे प्रथमाध्यायेऽनन्तर्भावस्य भवद्भिरेवोक्तत्वात्, अध्यायानन्त-र्भूतयोश्च पादान्तर्भावासम्भवात् । उत्तराऽपि षोढा भवति । प्रसङ्गोपोद्घातावसरप्राप्ति-कारणकार्यत्वैककार्यत्वभेदात् । तत्र न तावत्प्रथमाऽत्रास्ति, स्मारकाभावात् । न द्वितीया, विनैव तेन प्रकृतसिद्धेः । न तृतीया, समन्वयशेषेणावरुद्धत्वात् । न चतुर्थी, उत्तरं प्रबन्धं प्रति कारणत्वानुपलम्भात् । न पञ्चमी, पूर्वप्रबन्धकार्यत्वादर्शनात् । नापि षष्ठी, पूर्वेण अनेनोत्तरेण चैकस्याजननात् ।। तस्मादिदं नेहावकाशमर्हति" इत्यत आह— अधिकारश्चेति ।**

**अनु०— अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ।।**

**अन्तर्भावलक्षणसङ्गत्यभावेऽपि देवादीनां वेदविद्याधिकारः तदभावश्च शूद्रादीनामत्र प्रसङ्गादेव चिन्तितौ । प्रसङ्गश्च मनुष्याधिकारत्वादिति पूर्वसूत्रोक्त्योपोद्बलित इति भावः । न च प्रसक्तानुप्रसक्तचिन्तनेऽतिप्रसङ्गः, प्रयोजनभावाभावाभ्यां व्यवस्थानात् । प्रकृते च 'विश्वेदेवा उपासते' इत्युक्तोपपन्नत्वादिकं प्रयोजनमस्ति ।**

**परि०— प्रसङ्गेत्यादि** । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । यथा द्वितीये 'उत्क्रान्तिगत्यागतीनाम्' इति नये जीवाणुत्वे हेतूकृतोत्क्रान्तिगत्यागतीनां 'स्वात्मना चोत्तरयोरि'ति सूत्रे भगवदधीनत्वचिन्तनं प्रासङ्गिकम् । प्रकृतप्रमेयोपयुक्तचिन्तनमुपोद्घातः । यथा जिज्ञासासूत्रे जिज्ञासाकर्तव्यत्वचिन्तनं चिकीर्षितत्वेन बुद्धौ प्रकृतशास्त्रकर्तव्यत्वोपयुक्तम् । उक्तं हि चन्द्रिकायां, 'शास्त्रेणास्यौपोद्घातिकी सङ्गतिरि'ति । वक्तव्यस्य सर्वस्योक्त्यनन्तरं प्राप्तिरवसरप्राप्तिः । यथा पञ्चाधिकरणीतः पश्चादध्यायस्य आरभ्यत्वम् । कारणकार्यत्वेति कारणत्वकार्यत्वेत्यर्थः । वक्ष्यमाणं प्रति कारणत्वमेका सङ्गतिः । यथा समन्वयसूत्रमीक्षतिनयस्य मुख्यवृत्त्या समन्वयस्योक्तावेव तत्साधनायोत्तरस्योत्थानात् । 'यथा वा आद्यद्वितीयाध्याययोः समन्वयस्योक्तावेव तत्राविरोधसाधनस्योत्थानात् कार्यत्वसङ्गतिः । यथा गुहां प्रविष्टावित्यस्य अत्तेतिनयकार्यत्वम् । सामान्यचिन्तनस्य विशेषचिन्तां प्रति कारणत्वेन तस्य तत्कार्यत्वात् । पूर्वेणोत्तरेण चैककार्यकरत्वम् । यथा समन्वयसूत्रं शास्त्रयोनिसूत्रेण पूर्वेण सह जगत्कारणत्वं विष्णवेकनिष्ठमिति निर्णयं करोति । जिज्ञासासूत्रं चोत्तरेण जन्मादिसूत्रेण सह जिज्ञासाकर्तव्यत्वनिर्णयरूपमेकं कार्यं करोतीत्यादि ध्येयम् । **अवरुद्धत्वात्** । प्रतिरुद्धत्वादित्यर्थः । **प्रसङ्ग इति** । स्मृतत्वरूपः । **उपोद्बलितः** प्रबलित इत्यर्थः । **इत्युक्तोपपन्नत्वादिकमिति** । देवानामनधिकारे देवा उपासत इत्यस्य अप्रामाण्यापातेन तदुपास्यत्वं ब्रह्मणः अनुपपन्नं अधिकारे सत्युपपद्यत इति भावः । आदिपदेन मनुष्याधिकारत्वादित्यस्य सामान्यपरस्य पर्युदस्तेतरपरतया प्रमाणाविरुद्धत्वं ग्राह्यम् । एतेन देवोपास्यत्वलिङ्गस्य फलतः समन्वयसिद्धेः फलतोऽन्तर्भावसङ्गतिरपि सूचिता ।

**यादु०— समन्वयशेषेणेति** । समन्वयशेषजिज्ञासया प्रतिबद्धत्वादित्यर्थः । तथा च न प्रतिबन्धकजिज्ञासाविच्छेदरूपावसरप्राप्तिलक्षणा सङ्गतिरित्यर्थः ।

**वं०प०— उक्तत्वादिति** । न समन्वयसमर्थनार्थमित्यादिनेत्यर्थः । **अत्र** देवानामधिकारसमर्थने । **स्मारकेति** । स्मृतस्योक्षा(?)नर्हत्वस्य प्रसङ्गलक्षणत्वादित्यर्थः । **तेन** देवाधिकारसमर्थनेन । **प्रकृतेति** । समन्वये-





त्यर्थः । **अविरुद्धत्वादिति** । तथा च प्रतिबन्धकजिज्ञासाविच्छेदो नास्तीति भावः । **अनुपलम्भात्** अधिकार-समर्थनस्येति शेषः । प्रसक्तिश्च मनुष्याधिकारत्वादित्युक्ते इत्यादिना भाष्ये दर्शिता ।

**आनन्दः**— समन्वया(?)व्यर्थत्वाभावे एतदधिकरणद्वयमत्रासङ्गतमित्याक्षिपति **नन्वेतद्द्वयमिति** । **स्मारकेति** । स्मृतस्यानुक्षेपणं प्रसङ्ग इति तल्लक्षणादिति भावः । **विनैवेति** । अन्यत्रैवप्रसिद्धानां विवेकः कथमवगन्तव्यः इत्यतः अन्यत्रेति श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानामिति वदता भाष्यकारेण विवेकस्योक्त-त्वादिति भावः । ननु दुःखिबद्धावरा इत्याद्यनुव्याख्यातं प्रथमसूत्रार्थकथनरूपत्वाभावादसङ्गतमित्यतः प्रथम-सूत्रानुवादपूर्वकं तृतीयसूत्रानुव्याख्यानमेतदित्याशयेन तृतीयसूत्रसङ्गतिमाह **आनुमानिकमिति** । **सकलेति** । यस्मात्परं वापरमित्यादि श्रुत्यादीत्यर्थः । नन्वत्राव्यक्तशब्दस्य समन्वीयमानत्वाद्भाष्ये दुःखादिशब्दाग्रहणमयुक्त-मित्यत आह **अव्यक्तेति** । ननु तदधीनत्वहेतुतो ब्रह्मणि दुःखादिशब्दप्रवृत्तिरित्ययुक्तम् । दुःखाधिकरण एव तत्प्रयोगस्य सर्वत्र दृष्टत्वेन तदधीनत्वस्य शब्दप्रवृत्तौ हेतुताया अदर्शनात् । किञ्च दुःखादि समवायं परित्यज्य तदधीनत्वग्रहणे किं कारणम् । ब्रह्मणि दुःखादिसमवायाभावात् । तत्र दुःखादिशब्दाप्रवृत्तिरेव किं नोच्यत इत्यत आह **इदमुक्तं भवतीति** । **भवत्येवमिति** । मतुबादीनां सम्बन्धे तु शिष्टत्वात् कृदन्तानां च तदभावादिति भावः । **सम्बन्धमात्रमिति** । कर्मत्वाधिकरणत्वकर्मत्वनियामकत्वसाधारणसम्बन्धमात्रमित्यर्थः । **सम्बन्ध इति** । कर्म-त्वाधिकरणत्वरूपसम्बन्धविशेष इत्यर्थः । तेन कर्मत्वसम्बन्धस्य करणादिनियामकत्वेन करणादपि विद्यमानत्वात् तत्रापि बद्ध इत्यादि शब्दप्रयोगापत्तिरिति परिहृतम् । **एवं कारकान्तरेति** । करणत्वादिनियामकत्वेन करणादि-वाचिशब्दप्रवृत्तिर्भगवति अवरादिशब्दप्रवृत्तिरिति भावः । अवरं करोति अवरयति अवरयतीत्यवरः । अवरशब्दात् णिचि पचाद्यचि णेरणिटीत्यनेन तस्य लोपे अतो लोप इत्यनेन अकारलोपे चावर इति सिद्ध्यतीति भावः । **धात्वर्थ इति** । क्रुधात्वर्थ इत्यर्थः । **अर्थादिति** । अर्थापत्त्येत्यर्थः । पुरुषस्य अव्यक्तपरत्वं अव्यक्तपुरुषावरत्वं विना अनुपपन्नमित्यर्थः । परत्वं प्रत्यवधित्वं यद्गत इत्यन्वयः । **परगतं त्विति** । अवधित्वमिति शेषः । तथा च परमात्मनः परगतावधित्वनियामकत्वात् नावरत्वप्राप्तिरिति भावः । मतुबादेः सम्बन्धसामान्ये अनुशिष्टत्वात् सम्बन्धविशेषप्रमाणाभावादित्ययुक्तम् । प्रकृतसिद्ध्यर्थाय चिन्ता सा उपोद्घातः । अत्र चैतदधिकरणद्वयेन विनैव प्रकृतसमन्वयस्य सिद्धेरित्यर्थः । **समन्वयेति** । प्रतिबन्धकजिज्ञासोपगमो ह्यवसरप्राप्तिः । अत्र समन्वयशेष एव प्रतिबन्धक इति भावः । उत्तरसम्बन्धप्रतीतिः कम्पनादित्याद्युत्तरतः प्रबन्धप्रतीतिपूर्वप्रबन्धस्य द्युभ्वाद्यायतनत्व-मित्यादेः । **पूर्वेणेति** । द्युभ्वाद्यायतनमित्यादिनेत्यर्थः । **अनेनेति** । एतदधिकरणद्वयेनेत्यर्थः । **उत्तरेण चेति** । कम्पनादित्यादिनेत्यर्थः । **उक्तोपपन्नत्वादिकमिति** । अत्रादिपदेन वक्ष्यमाणशूद्राधिकाराभावलक्षणमुत्तराधि-करणप्रयोजनमिति ग्राह्यम् ।

**कं०रा०**— **प्रसङ्गेति** । प्रसङ्ग उपोद्घातोऽवसरप्राप्तिकारणत्वं कार्यत्वमेककार्यकारित्वमित्येवं भेदा-दित्यर्थः । ननु स्मारकाभावात् कथं प्रसङ्गरूपासङ्गतिरित्यत आह **प्रसङ्गश्चेति** । **प्रकृते चेति** । देवानां





वेदविद्याधिकारसमर्थनस्य 'मध्ये वामनमासीनं विश्वे देवा उपासत' इत्युक्तं सर्वदेवोपास्यत्वोपपादनं प्रयोजनम् । शूद्राणां वेदविद्यानधिकारसमर्थनस्य तु मनुष्याधिकारित्वादिति सामान्योक्तेः शूद्रेतरविषयत्वान्न शूद्रानधिकार-प्रतिपादकप्रमाणविरोध इत्येतदुपपादनं प्रयोजनमस्तीत्यर्थः ।

**शे०वा०— अत्रेति** । तृतीयाध्यायेऽसार्वत्रिकीत्यादावधिकारचिन्तनात् देवादीनामधिकारभावाभाव-चिन्ता तत्रैव कर्तव्या, न तु समन्वयप्रतिपादकेऽस्मिन्नध्याय इत्यर्थः । कुतस्तृतीय एवेयं चिन्ता करणीया, न त्वत्र इत्यतोऽधिकरणमात्रस्य सङ्गतिपञ्चकोपेतत्वनियमात्तृतीये सङ्गतिपञ्चकलाभात्तत्र कर्तव्यत्वोपपत्तावपि अत्र शास्त्रसङ्गतिमात्रसम्भवेऽपि अध्यायादिसङ्गतिचतुष्टयासम्भवान्नात्र कर्तव्यता सम्भवतीत्यभिप्रेत्याह **असङ्गतत्वादिति** । कथमध्यायादिसङ्गत्यभाव इत्यतोऽधिकरणस्याध्यायपादसङ्गतेरन्तर्भावरूपत्वादधिकरणा-दिसङ्गतेश्चानन्तर्यरूपत्वात्तयोश्च प्रकृतेऽसम्भवात् सङ्गत्यभावसिद्धिरिति भावेन सङ्गतिद्वैविध्यमाह **सङ्गति-स्तावदिति । अनन्तर्भावस्येति** । तदर्थप्रतिपादकस्यैव तदन्तर्भावनियमात् । अस्य च समन्वयाप्रतिपादकत्वान्न तत्प्रतिपादकेऽध्यायेऽन्तर्भाव इत्यर्थः । यद्यपि 'दैवतैरपि । ज्ञेयो न वेदैः शूद्राद्यैः' इति सङ्क्षेपोक्तेः अतो देवानां वेदविद्याधिकाराभावान्न तदुपास्यत्वं लिङ्गं विष्णोः सम्भवतीत्यत्रैतदधिकरणपूर्वपक्षटीकानुसारात् । 'अतो देवानां सर्वविद्याधिकारित्वात्तदुपास्यत्वं हरेर्युक्तमिति । अतो हरिः शूद्राद्यैर्वेदविद्याविज्ञेयो न भवती'ति चैतदधिकरण-द्वयसिद्धान्तोपसंहारटीकानुसाराच्च देवोपास्यत्वादिलिङ्गसमन्वयपरत्वस्य स्थितेः अध्यायार्थसमन्वयप्रतिपादक-तयाऽध्यायेऽन्तर्भावोऽस्त्येवेति नानन्तर्भावोक्तिर्युक्ता । तथाऽपि फलितदेवोपास्यत्वादौ सङ्गतिप्राप्तावपि मुखतो व्युत्पाद्येऽधिकारादौ न सङ्गतिरिति तदभिप्रायेणायं ग्रन्थ इति द्रष्टव्यम् । अध्यायानन्तर्भूतयोरित्यतःपरम् अधिकरणयोरित्यनुवर्तते । **असम्भवादिति** । पादानन्तर्भूतस्याध्यायानन्तर्भूतत्वनियमादध्यायानन्तर्भूतस्य न पादान्तर्भाव इति भावः । एवमध्यायपादान्तर्भावरूपतत्सङ्गत्यभावमुपपाद्य अधिकरणश्रुत्यानन्तर्यरूपाधि-करणादिसङ्गत्यभावमुपपादयिष्यन् तस्या अनेकावान्तरभेदभिन्नतयैकोक्त्या तदभावस्य निरूपयितुमशक्यत्वा-त्तत्तत्प्रापकाभावेन तत्तदभावं वक्तुं तद्विभागमाह **उत्तराऽपीति** । कास्ता विधा इत्यतः 'स प्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते' इत्यभियुक्तोक्तिं मनसि निधाय ता विधा निर्दिशति **प्रसङ्गेत्यादि** । तत्र प्रसङ्गो नाव्यवहितप्रकरणेन, तेनैव वा प्रकरणेन, स्मारितस्यार्थस्योपेक्षानर्हत्वम् । तथा सति क्वचिदव्यवहितपूर्वप्रकरणेन क्वचिच्च तेनैव स्मारणविवक्षायामननुगमापातात् । किन्तु लाघवात् स्मृतस्योपेक्षा-नर्हत्वमेव । प्रकृतसिद्ध्युपयोगिनी चिन्तोपोद्घातः । प्रतिबन्धकजिज्ञासापगमोऽवसरप्राप्तिः । कारणत्वं चात्र प्रयोजकत्वमेव विवक्षितम् । सङ्ग्रहेऽपि हेतुतापदेन तदेव विवक्षितम् । कार्यत्वं प्रयोज्यत्वम् । सङ्ग्रहेऽपि निर्वाहकत्वमुक्तरूपकार्यत्वमेव कार्यस्यापि कारणनिर्वाहकत्वात् । यत्तु प्रकृतोपयोग्युपपादकतया, प्रकृतोप-पादकोपपादकतया वा, प्रयोजकत्वापरपर्यायं निर्वाहकत्वं सङ्ग्रहे विवक्षितमिति । तन्न । तथा सति कार्यत्वाख्यापरसङ्गतिप्रसङ्गात् । एकं कार्यं यस्येति व्युत्पत्त्यैककार्यानुकूलत्वमेवैककार्यत्वम् । अत्र षोढेति न नियमपरम् । तथा सति यत्र पूर्वोक्तातिप्रसङ्गवारणार्थमन्यदभिधीयते तत्रापवादलक्षणायास्तथा यत्राधिकाशङ्कां





कृत्वा पूर्वस्यातिदेशः तत्रातिदेशिक्याः सङ्गतेरभावप्रसङ्गात् । किं त्वानन्तर्यसङ्गतेरनेकविधत्व एव । अत एव चन्द्रिकायामानन्तर्यसङ्गतेर्बहुप्रकारत्वमेवोक्तम् । व्यवहृतं च तत्र तत्रातिदेशापवादयोरपि सङ्गतित्वमित्यवधेयम् । **अत्रेति** । देवताधिकरणापशूद्राधिकरणयोरित्यर्थः । **अन्तर्भावलक्षणसङ्गत्यभावेऽपीति** । मुखतो व्युत्पाद्ये देवताधिकारादाविति शेषः । फलिते देवोपास्यत्वे तत्सत्त्वादिति ध्येयम् । ननु स्मारकाभावान्न प्रसङ्गः सम्भवतीत्युक्तमित्यत आह **प्रसङ्गश्चेति** । उक्त्योपोद्बलित इति तथोक्तिरेव स्मारिकेति भावः ।

**वा०र०— देवादीनामिति** । आदिपदेन त्रिवर्णेतरपरिग्रहः । देवानामधिकारभावः अन्येषामधिकाराभावश्च तयोश्चिन्तेति यथायोग्यं सम्बन्ध इति ज्ञेयम् । अध्यायानन्तर्भूतत्वेऽपि पादान्तर्भावः कुतो न भवति विनिगमनाभावेन तदनन्तर्भूतस्यापि पदान्तर्भावोपपत्तेः इत्यतोऽव्यभिचारितसामानाधिकरण्यस्यैव नियामकत्वान्नानुपपत्तिरित्याशयेन मूलेऽभिप्रेतां व्याप्तिं दर्शयति **पादान्तर्भूतस्याध्यायान्तर्भूतत्वनियमादिति** । अनेन विमतैधिकरणे(?) पादानन्तर्भूते अध्यायानन्तर्भूतत्वादित्यत्र पादान्तर्भूतत्वव्यापकमध्यायान्तर्भूतत्वमिति व्यापकाभावलिङ्गेन व्याप्याभावसाधनमिति सूचयता व्यभिचारभावप्रतिपादनादव्यभिचरितसामानाधिकरण्यं नियामकतया मूलाभिप्रेतं दर्शितं भवतीति ज्ञेयम् । क्वचित्पादानन्तर्भूतस्याध्यायानन्तर्भूतत्वेति नञ्गर्भः पाठः । स तु समव्याप्त्यभिप्रायेण व्याख्येयः । यद्वा वह्निमानेव धूमवानित्यादाविव पादानन्तर्भूतस्याध्यायानन्तर्भूतत्वनियमोऽपि पादानन्तर्भूतमेवाध्यायानन्तर्भूतमिति नियमत्वेन विवक्षित इति यत्राध्यायानन्तर्भूतं तत्र पादानन्तर्भूतत्वमिति व्याप्तिरेव व्यभिचाराभावप्रदर्शनेन स्फुटीकृतेऽपि तत्पाठेऽपि न दोष इति ज्ञेयम् । अत्र षोढेति न नियमपरम् । तथा सति यत्र पूर्वोक्त इत्यादिका टीका । तत्र यत्र पूर्वोक्त इति पूर्वाधिकरणसिद्धान्तः । पूर्वोक्तपदेन बृंद्यतो(?) तथा च पूर्वाधिकरणसिद्धान्तेति प्रसङ्गो नाम तन्न्यायेनान्यदपि स्यादिति पूर्वपक्षः । यथा अन्तःस्थत्वाधिकरणे यदि ब्रह्मशब्दादानन्दमयो ब्रह्मा तर्हीन्द्रादिशब्दादन्तस्थाः इन्द्रादिर्न तु ब्रह्मतच्छब्दाभावादिति पूर्वसिद्धान्तन्यायेन पूर्वपक्षः । यद्वा यदि ब्रह्मेत्यादिना चन्द्रिकोक्तः अन्यदभिधीयत इति पूर्वाधिकरणोक्तश्रुत्या निर्णयमपोद्य लिङ्गेन निर्णय उच्यत इत्युक्ताधिकरणीयचन्द्रिकानुसारात् विष्णोरन्तस्थत्वसाधकतया श्रुतिं परित्यज्य लिङ्गमुच्यत इत्येवमपवादसङ्गतिस्वरूपासिद्ध्याऽन्यत् पूर्वोक्तसाधकादन्यत् साधकमुच्यत इत्यर्थः । उक्तं च तत्र चूडामणार्थवादपादे प्रथमाधिकरणे पूर्वसिद्धान्ता यत्र पूर्वपक्षः प्रवर्तते तत्रापवादकी प्रोक्तासङ्गतिर्न्यायवेदिभिरिति । एतेनातिप्रसङ्गपरिहारसमुचितस्यैव च पूर्वोक्तप्रमाणस्य विवक्षितार्थनिर्णयजनकत्वादपवादसङ्गतिस्थलेऽप्येककार्यत्वरूपैव सङ्गतिरित्यधिकसङ्गत्यभाव इत्युमर्जीकोक्तं मूर्खप्रलपितमिति च सिद्धम् । अपवादसङ्गतेरधिकरणस्याधिकरणान्तरनिरूपितायाः स्वरूपेण लक्षणकारिकयोदाहरणेन च अज्ञानात् पूर्वोक्तप्रमाणस्येत्यनेन हि परेणेदमुदितं भवति । पर्वतस्य वह्निमत्वे धूमरूपप्रमाणे केनचिदभिहिते तर्हि धूमादेव स्थाल्यादिकमपि किं नानुमीयत इत्यपि प्रसङ्गशङ्कायां धूमस्य वह्निनेव स्थाल्यादिना व्याप्त्यभावान्नातिप्रसङ्ग इत्येवं तत्परिहारसमुचितस्य पूर्वप्रमाणस्य विवक्षितार्थनिर्णयजनकत्वमिति न चैवमादिस्थले पूर्वोक्तप्रमाणेति प्रसङ्गपरिहारकरणमपवादसङ्गत्येति शास्त्रसंस्कारमात्रवानपि समर्थो वक्तुम् । अन्तराद्यधिकरणभावबोधावुक्तायाः पूर्वमीमांसायामपि

तत्र तत्राधिकरणे प्रदर्शिताया अपवादसङ्गतेरेवमन्यथाकरणे तत्त्वप्रकाशिकाभावबोधादि ज्ञानाभावोऽपि प्राप्तः । चन्द्रिका तु परमेण (?) न ज्ञायत एव । चन्द्रिकास्थाक्षेप ... क्यातिदेशिक्या वित्ते तत्कारिकाश्लोकस्य वृद्धश्लोकश्चन्द्रिकोदाहृत इति भ्रान्त्या भवता वृद्धश्लोकताया वक्ष्यमाणत्वात् अन्तराद्यधिकरणस्थचन्द्रिकायाः ज्ञानाभावः स्पष्ट एव । उपोद्घातसङ्गतेरप्येककार्यत्वान्तर्भावस्य प्राप्तेश्च एवं अन्यत्रापीत्यलम् । **तत्राधिकां शङ्कामिति** । यत्र पूर्वाधिकरणसिद्धान्तन्यायेनाधिकरणान्तरतस्य गतार्थताशङ्कायां पूर्वपिक्षया अधिकाशङ्कां कृत्वाऽधिकरणारम्भस्तच्छङ्कानिरासार्थे तु पूर्वोक्तन्यायस्यैवातिदेशः क्रियते इत्यर्थः । प्राणाधिकरणीयातिदेशो हि तादृश इत्यनुव्याख्यानव्याख्यावसरे मूले तादृशो ह्यतिदेशो यदा शङ्काया(?) आधिक्ये सति परिहारस्य समानत्वं यद्याशङ्कायां न विशेषस्तर्हि पूर्वेणैव परिहृतत्वात् प्राचीनन्यायातिदेशनमनर्थकं स्यात् । प्रत्युदाहरणं शङ्कापरिहारे पर्यवसानप्रसङ्गात् यदि च परिहारो विशेषितो न स्यात् । कथं तर्ह्यत एवेत्यतिदेश इति इत्युक्तत्वेनोक्तरीत्यातिदेशसङ्गतिस्वरूपसिद्धेः सति चैवं टीकोक्तमाधिक्ये निरसितुं यदुमर्जकिनातिदेशिक्या एककार्यत्वेऽन्तर्भावमुपपादयितुं उक्तं प्रसङ्गसिद्धेऽर्थेऽभ्यधिकाशङ्काया अभावात् प्राणेन विना च सिद्धेरभावात् पूर्वप्रमाणासिद्धेऽर्थेऽभ्यधिकाशङ्कानिराससमुचितस्यैव पूर्वोक्तप्रमाणस्य विवक्षितार्थनिर्णयजनकत्वादिति तत्पूर्वोक्तरीत्या भावबोधाद्यज्ञानमूलकमिति स्पष्टमेव । किञ्च पूर्वप्रमाणेत्यनेनेदमुदितं भवति । धूमादिरूपप्रमाणेन वह्न्यादिरूपेऽर्थे सिद्धे प्रयोजकत्वाशङ्कारूपाभ्यधिकाशङ्कायां तर्केण तन्निरासे सति तत्समुचितस्य पूर्वप्रमाणस्य विवक्षितार्थनिर्णयजनकत्वमिति । न चैवमादिस्थलेऽभ्यधिकाशङ्केति व्यवहारः शास्त्रवासनावतां न वा तन्निरासाय पूर्वोक्तधूमादिप्रमाणस्यैवातिदेशः क्रियत इति सचेतनः सम्भावयत्यपि पूर्वाधिकरणस्योत्तराधिकरणेन सङ्गति-निरूपणावसरे पूर्वप्रमाणेनेति प्रमाणपुरस्कारो ज्ञानमूलक इत्यपि पूर्वप्रकारेणासिद्धमेव उपोद्घातसङ्गतेरप्युक्तरीत्यैक-कार्यत्वेऽन्तर्भावप्राप्तेश्च एतेनैव तस्मादतिदेशापवादसङ्गत्योरित्युपसंहारोऽपि निरस्तः । उक्तरीत्या आधिक्य-स्यानिवार्यत्वात् न्यूनताप्राप्तेश्चेत्यलम् । इदं चापवादातिदेशसङ्गत्योराधिक्यकथनमुपलक्षणं पूर्वन्यायात्ययो यत्र प्रत्युदाहरणात् सा बुद्धिस्थं चिन्त्यते यत्र बुद्धिस्थानात्मिकातसेत्युक्तलक्षणकप्रत्युदाहरणबुद्धिस्थानात्मक-सङ्गत्योरप्युक्तातिरिक्तयोः सत्त्वेन षोडेत्यस्य नियमपरत्वानुपपत्त्योरित्यपि ज्ञेयम् । अन्तस्थत्वाधिकरण एव चन्द्रिकायां युक्तमानन्दमयशब्दो विष्णुपर इति तस्यार्थविशेषे निरूढत्वाभावात् । इन्द्रादिशब्दास्त्वर्थविशेषे निरूढा नान्यत्र नेतुं शक्या इत्यादिना प्रत्युदाहरणसङ्गतेरभिधानात् अत एवाष्टविधत्व एवेत्यनुक्त्वाऽनेकविधत्व एवेति वक्ष्यति । चन्द्रिकायां बहुप्रकारत्वमुक्तमिति चेति ज्ञेयम् । **अनेकविधत्व एवेति** । तात्पर्यवदिति पूरणीयम् । अनेकविधत्वमेवेति पाठे आनन्तर्यसङ्गतेस्तर्हि कतिविधत्वमित्याशङ्कानिरासपरतयैतद्वाक्यं योज्यम् । अनेकविधत्वमात्रपरमेवेति पाठस्तु स्वरस एव । ततश्चाधिकसङ्ख्याङ्गीकारेऽपि न दोष इति फलितमिति बोध्यम् । स्वोक्तार्थं चन्द्रिकासम्मत्या दृढयति **अत एवेत्यादिना** । चन्द्रिकायामानन्दमयाधिकरण इति शेषः । तत्रं हि आक्षेपिक्यातिदेशिक्यावुपोद्घातापवादते(?) प्रसङ्गश्चेत्यादिरूपा सा चानन्तर्यलक्षणेति कारिकामुक्त्वा आनन्तर्यलक्षणापि सङ्गतिराक्षेपिकी अतिदेशिकी औपोद्घातिकी अपवादकी प्रासङ्गिकीत्यादिरूपेण बहुविधे-त्युक्तमिति ज्ञेयं युक्तम् । **तत्रेति** । प्रमाणाधिकरणादावन्तराधिकरणादौ चेत्यर्थः । यत्तु उमर्जकिन चन्द्रिकोप-





ष्टम्भकनिरासाय चन्द्रिकाया अन्यथासिद्धिः कृता यत्तु चन्द्रिकायामानन्तर्यसङ्गतेर्बहुप्रकारत्वमुक्तं तदाक्षेपिक्यातिदेशिक्यावुपोद्घातापवादते(?) प्रसङ्गश्चेत्यादिरूपा सा चानन्तर्यलक्षणेति वृद्धश्लोकानुसारेण साक्षात्परम्पराविभाजिकोपाधीनेकीकृत्यैव न त्वानन्तर्यलक्षणसङ्गतेः षड्विधत्वापेक्षयातिबहुविधत्वाभिप्रायेण सप्रसङ्ग उपोद्घातहेतुतावसरस्तथा निर्वाहकैकयार्यत्वे(?) षोढा सङ्गतिरिष्यत इति वृद्धोक्तिविरोधात् चन्द्रिकायामतिदेशापवादयोः सङ्गतित्वव्यवहारोऽप्येककार्यकारित्वरूपसङ्गत्यवान्तररूपत्वाभिप्रायेणेत्यन्तेन साऽप्यज्ञानविपरीतज्ञानमूलेति पूर्वोक्तरीत्यादिना स्पष्टम् । चन्द्रिकाकारिकाश्लोकस्य वृद्धवचनतया स्वीकारपूर्वकं चन्द्रिकायां तदनुसारस्य कल्पनात् षड्विधत्वापेक्षयातिरिक्तविधावत्वाभिप्रायेणेति प्रयोक्तव्येति बहुविधत्वाभिप्रायेणेत्येतदप्युन्मत्ततामावेदयति । षड्विधत्वापेक्षया अधिकविधावत्वस्याभावे बहुविधत्वस्यैवाप्रसक्तत्वेनातिबहुविधत्वस्य सुतरामप्रसक्तेः वृद्धान्तरवचनविरोधोद्भावनमपि कथं न लज्जाकरमिति स एव जानातु । भवदुक्तरीत्यैव वृद्धवचनत्वेन साम्ये सति तद्विरोधेन पूर्ववृद्धवचनस्य स्वार्थपरत्वाभाववर्णनायोगात् । अहो अत्याश्चर्यम् । आगन्तुकान्धोऽपि प्रागनन्धतादशायां तत्तच्छास्त्रीयप्रमेयज्ञानपूर्वकं तद्व्याख्यानादिना तत्संस्कारवान् अन्धतादशायां गपि(?) तत्संस्कारेण शिष्यान्बोधयितुं प्रवृत्तस्तत्तद्ग्रन्थनिष्कासनं कारयित्वा प्रमेयमनुभवारूढं कृत्वा परान्बोधयतीति किल सर्वसम्मतं उमर्जीकस्तु चन्द्रिकाकारिकायास्तत्र वृद्धश्लोकत्वेनानुवाद इति यद्विद्याधीशगुरोरित्यत्र श्रीविद्याधीशेति तच्छ्लोकः सर्वस्मिन्पादान्ते पठित इति वाहीकशब्दापूर्वव्युत्पत्तिः स्वयं ज्ञातेति परान् वञ्चयितुं 'बहीकश्च बह्वीकश्च विपाशायां पिशाचकौ तयोरपत्यं बाहीक नैषा सृष्टिः प्रजापतेरि'ति कर्णपर्वभारते पाठोऽस्तीति च कल्पितवान् । तेन सज्जना मन्यते यं सत्प्रमेये जात्यन्ध इति भातीत्यलम् । उमर्जीककृष्णाचार्यबौद्धधिक्कारेण प्रकृतमनुसरामः ।

ननु मूले षोढेति प्रतिज्ञाप्रसङ्गादिरूपेण षड्विधत्वं उक्तं यदुक्तं तत्कथं तन्त्रचूडामणौ षोढेति प्रतिज्ञायापवादिकी आक्षेपकी प्रत्युदाहरणरूपप्रासङ्गिकी बुद्धिस्थानलक्षणा आतिदेशकी इत्येवमेव षड्विधत्वोक्तेः अधिकरणप्रसङ्गतेरेवात्र प्रसक्तत्वादिति चेत्, सत्यम् । तथापि कार्यत्वादिसङ्गतिरप्यानन्तर्यसङ्गतित्वेन वाच्यैव । प्रथमाध्यायस्य द्वितीयेन हेतुमद्भावसङ्गतेः सुधायां प्रतिपादनात् अन्यत्रापि तत्रावसरसङ्गत्यादेः प्रतिपादनात् तथा च प्रसङ्ग इत्येतच्छ्लोकोक्तसङ्गतीनां तत्रानुपाततन्त्रचूडामण्युक्तसङ्गतम् । न च अत्राभिमतत्वस्थित्या प्रसङ्ग इत्येतच्छ्लोकोक्तसङ्गतिपुरस्कारो मूले नानुपपन्नः । अत एव टीकाकृतोक्ताभिप्रायेणैव बहुविधत्वे तात्पर्यमुक्तमित्यादि ज्ञेयम् । देवताधिकारे देवतोपास्यत्व इत्येव पाठे उपलक्षणया शूद्रानधिकारादिकमपि ज्ञेयम् । प्रागुभयोरप्यभिधानात् आदिपदयुक्तपाठस्तु स्वरस एवेति ज्ञेयम् । यद्यपि मूले **तदभावश्चेति** व्याख्यानेन व्याख्यानापेक्षया पुल्लिङ्गमिति सूचितं यच्छ्रेय एतयोरेकमित्येतत्पञ्चमगीताभाष्ये संन्यासः श्रेयोऽधिकः स्यादिति श्रेयःपदमनूद्य संन्यासपदानुसारेणाधिक इति पुल्लिङ्गेन व्याख्यानदर्शनात् तथा च व्याख्यानापेक्षया सामानाधिकरण्यं सम्भवतीति प्राप्तोक्तशङ्कादिकमनवकाशमिति भाति तथाप्यधिकरणविषयोपक्रमानुसारेण विषयपदयोजनया प्रकारान्तरेण समाधातुं पुनः शङ्केति ज्ञेयम् । अजानत महिमानं तवेदमित्यादाविव व्याख्याना-





श्रयणेनापि लिङ्गोपपत्तेः सिद्धत्वात् विनैवेतेनेति मूलेऽधिकरणयोरित्यनेनोपस्थापितमाधिकरणद्वयमेतेनेति परामृश्यते । यद्वा सामान्ये नपुंसकेनैतेनेत्युक्तमिति न दोषः । एवं पूर्वेणानेनेत्युत्तरत्रापि ज्ञेयम् । अत्रेतीत्यादिकमित्यर्थ इत्यन्तमन्तभवित्यादि ध्येयमित्यन्तानन्तरं यथा तथा पाठः व्यत्यासो लेखकागतः ।

**स०व्र०— समन्वयशेषेणावरुद्धत्वादिति** । समन्वयशेषजिज्ञासाया प्रतिबद्धत्वादित्यर्थः । तथा च न प्रतिबन्धकजिज्ञासाविच्छेदरूपावसरप्राप्तिलक्षणा सङ्गतिरित्यर्थः ।

**विठ्ठल०— प्रसङ्गेत्यादि** । स्मृतस्योपेक्षणानर्हत्वप्रसङ्गः । प्रकृतप्रमेयसिद्ध्यर्थमुपयुक्तचिन्तनमुपोद्घातः । प्रथमं वक्तव्यस्य सर्वस्योत्त्यनन्तरमपरस्य प्राप्तिरवसरप्राप्तिः । **कारणकार्येति** । कारणत्वकार्यत्व इत्यर्थः । वक्ष्यमाणं प्रति पूर्वस्य जनकत्वं कारणत्वं पूर्वप्रकरणप्रयोज्यत्वं कार्यत्वं प्रथमं कार्यमुक्त्वा किमस्य कारणमित्याकाङ्क्षायां कारणस्य वक्तव्यत्वं कारणेऽभिहिते कार्याभिधानं चेत्यर्थः । पूर्वोत्तरयोरेककार्यनिर्वाहकत्वमेककार्यत्वमिति । **अवरुद्धत्वात्** प्रतिरुद्धत्वात् । तथा च वक्तव्यस्य सर्वस्यानुक्तेर्नावसरप्राप्तिलक्षणासङ्गतिरिति भावः । **पूर्वेणेति** । पूर्वेणानेन पादशेषेण उत्तरेण वानेन पादशेषेण एकस्य कार्यस्याजननादित्यर्थः । **पूर्वसूत्रोपोद्बलित इति** । पूर्वसूत्रे स्मारकोक्त्या प्रबलित इत्यर्थः । **इत्युक्तोपपन्नत्वादिकमिति** । देवानामनधिकारे, विश्वेदेवा उपासत इत्यस्योपपत्तेरधिकारसमर्थनस्य तस्योपपन्नत्वं प्रयोजनमस्तीत्यर्थः । आदिशब्देनापशूद्राधिकरणे मनुष्याधिकारत्वादित्यस्य मनुष्यसामान्यपरत्वस्य प्रमाणविरुद्धत्वात् तस्योपपन्नत्वग्रहणम् ।

**चषकः— समन्वयशेषेणेति** । तद्गोचरजिज्ञासाप्रतिबद्धत्वादित्यर्थः । तथा च न प्रकृतप्रमेयाधिगत्यनुत्पादप्रयोजकजिज्ञासाविच्छेदपूर्वकावश्याभिधानीयत्वरूपावसरप्राप्तिलक्षणा सङ्गतिरिति भावः ।

**॥ इति एतदधिकरणद्वयस्य अध्यायपादसङ्गत्यभावेऽपि प्रासङ्गिकत्वम् ॥**

* * *

**॥ तत्र चान्ते 'चिन्तितौ' इति अनुव्याख्यानस्थपदलिङ्गवैषम्यशङ्का, तन्निरासश्च ॥**

**१४ सु०— ननु चिन्तिताविति कथम्, 'विप्रतिषेधे परं कार्यमि'ति स्त्रीलिङ्गेन भाव्यम् । मैवम् । 'इतीमौ विषयावि'त्यध्याहारात् ॥**

**परि०—** का कथन्तेत्यत आह **विप्रतिषेध इति** । विप्रतिषेधे विरोधे सति परं पश्चात्तनसूत्रोक्तमेव कार्यं कर्तव्यमिति परप्राबल्यन्यायेनेह पूर्वनिर्दिष्टपुल्लिङ्गापेक्षया परनिर्दिष्टस्त्रीलिङ्गेन भाव्यमित्यर्थः । पुमांस्त्रियेत्येतन्नपुंस्त्वस्त्रीत्वजात्याक्रान्तविषयम् । विशेष्यविभक्तिकस्वतन्त्रस्त्रीपुंसपरश्चेति भावः ।





**यादु०— ननु चिन्तिताविति कथमिति** । द्विवचनं कथमित्यर्थः । स्त्रीलिङ्गेनेत्यतःपरम् एकवचनेनेति शेषः । चिन्तितशब्दो हि विशेष्यनिघ्नः क्रियावचनः । तस्य चैकवचनान्तस्याप्यधिकारस्तद्धानिश्च चिन्तितेति सकृत्प्रयोगे समुच्चयार्थकचशब्दसामर्थ्यात् 'हरिं गुरुं च भजस्व' इत्यत्रेव प्रत्येकसम्बन्धसिद्ध्या अधिकारश्चिन्तित-स्तद्धानिश्चाचिन्तिता इति बोधसम्भवान्न द्विवचनेन कृत्यं, प्रत्युत चिन्तितशब्दस्य विशेष्यनिघ्नस्य विशेष्य-लिङ्गवचनत्वाद् द्विवचनान्तस्य पुल्लिङ्गस्य विशेष्यस्यात्राश्रवणादनन्वय एवेति भावः । नन्वेकवचनप्रयोगेऽपि चिन्तितेति स्त्रीलिङ्गेनैव भाव्यमित्यत्र किं नियामकम् । प्रथमप्रयुक्ताधिकारशब्दानुसारेण चिन्तित इति पुल्लिङ्ग-प्रयोगस्यैवोचितत्वादित्यत आह **विप्रतिषेध इति** । यद्यपि सौत्रमेव परत्वं परैरुच्यत इति नास्योदाहरण-मत्रोचितम् । तथाऽप्येकस्मिन्विशेषणशब्दे विशेष्यद्वयानुसारेण विरुद्धोभयलिङ्गत्वे प्राप्ते यत्प्रयोगतः परं विशेष्यं तल्लिङ्गमेव विशेषणीभूतशब्दकार्यमित्यर्थस्याप्यत्र सूत्रे विवक्षितत्वात् युक्तमुदाहरणमित्यवगन्तव्यम् । अन्ये तु चिन्तितश्च चिन्तिता चेत्यत्रैकशेषे कर्तव्ये, 'विप्रतिषेधे परं कार्यमि'ति स्त्रीलिङ्गस्यैव विशेषे, चिन्तिते इति स्त्रीलिङ्गेनैव भाव्यम् । चिन्तिताविति पुल्लिङ्गं कथमिति शङ्काभिप्रायमभिधाय तत्र न तु 'पुमान् स्त्रिया' इति सूत्रेणैवात्र पुल्लिङ्गशेषो भविष्यति अतः काऽत्र कथन्तेत्याशङ्क्य यत्र स्त्रीपुंसमात्रकृतं वैलक्षण्यं, ब्राह्मणश्च ब्राह्मणी चेत्यादौ तत्रैव तत्सूत्रप्रवृत्तिः । 'तल्लक्षणश्चेद् विशेष' इत्यनुवृत्तेः । प्रकृते चाधिकारतद्धानिरूपविशेष्यकृत-वैलक्षण्यस्यापि सत्त्वेन तत्प्राप्त्यसंभवादिति परिहृत्य, स्यादेवं यद्यधिकारतद्धानिविशेषणमेतत्स्यात् । न चैवम् । किन्त्वध्याहृतस्येमौ विषयावित्यस्यैवातो नात्र स्त्रीलिङ्गप्रसक्तिरिति समाधानाभिप्रायमाहुः ।

इति श्रीमद्वेदेशतीर्थपूज्यपादशिष्येण यदुपतिना विरचितायां सुधाटिप्पण्यां
प्रथमाध्यायस्य तृतीयः पादः समाप्तः ॥

**कं०रा०—** यद्यप्यत्राधिकरणे शुगस्य तदनादरश्रवणादिति सूत्रे शुचा द्रवणमेव शूद्रशब्देनोक्तमिति । भाष्ये च शोकेनाद्रवणं शूद्रशब्दप्रवृत्तिनिमित्तमुक्तम् । छन्दोगोपनिषद्भाष्ये तु राजा पौत्रायणः शोकात् शूद्रेति मुनिनोदित इति शोकमात्रं शूद्रशब्दप्रवृत्तिनिमित्तमित्युक्तम् । अतोऽन्योन्यविरोध इति प्रतिभाति । तथाऽपि शोकेन आततीति शोकात् । अतसातत्यगमन इत्यस्मात् आङ्पूर्वात् क्विपि आदिरिति रूपमतो न विरोध इति द्रष्टव्यम् । हेतुगर्भमेतत् राजविशेषणम् । **अधिकारश्च तद्धानिप्रसङ्गादेव चिन्तितावित्यत्र** चिन्तिताविति द्विवचनोपपत्तये अधिकारितद्धानिशब्दयोर्द्वन्द्वसमासो वक्तव्यः । तत्र च तद्धानिशब्दस्य घिसंज्ञत्वेऽपि द्वन्द्वे घीत्यपेक्षया अजाद्यन्तमित्यस्य परत्वेन अजाद्यन्ताधिकारशब्दस्य पूर्वनिपातावश्यंभावे तद्धानिशब्दस्य परत्वात् परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति द्वन्द्वसमासस्य स्त्रीलिङ्गतया चिन्तिते इति स्त्रीलिङ्गेन भाव्यम् । चिन्तिताविति पुल्लिङ्गस्तु नोपपद्यत इत्याशयेन शङ्कते **नन्विति** । अनुष्ठितं साधनं यस्य तदित्यर्थः ।

**श्रीनिधि०— विप्रतिषेधे परं कार्यमिति** । नन्विदं सूत्रविषयं कथमुदाहरणार्हम् । इत्थं न्यायसाम्येनोदा-हरणात् स्पष्टातिस्पष्टविशदमिति समुदायस्यार्थः ।





**शे०वा०— ननु चिन्तिताविति कथमिति** । पुल्लिङ्गं कथमित्यर्थः। ननु चात्र का कथन्ता। ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यत्रेव चिन्तितश्च चिन्तिता च चिन्तितावित्यत्र पुंसः शेषेण तल्लिङ्गोपपत्तेः । न चात्र 'वृद्धो यूना' इति पूर्वसूत्रात्तल्लक्षणश्चेदेव विशेष इत्यनुवर्तते । तत्र च तल्लक्षणश्चेद्विशेष इत्यनेन यत्र सर्वं सरूपं लिङ्गकृतं यत्र वैरूप्यमित्यर्थप्रतिपादनेन कुक्कुटमयूर्यावित्यादिशब्दस्वरूपकृतवैलक्षण्ये एकशेषनिषेधात् । एवेत्यनेन तु विशेषकृतवैलक्षण्ये तन्निषेधात्। प्रकृते च अधिकारतद्धानिरूपविशेषकृतवैलक्षण्यात् पुमान् स्त्रियेत्यनेन पुंसः शेषो न सम्भवतीति वाच्यम् । तत्रैवकारेणेन्द्रश्चेन्द्राणी चेन्द्राण्यावित्यादावेकशेषनिषेधार्थं स्त्रीपुंसविशेष्यवैलक्षण्यातिरिक्तप्रत्ययागमादिवैलक्षण्यस्यैवाभिमतत्वेन, प्रकृते विशेष्यकृतवैलक्षण्ये सत्यपि, आगमादिवैलक्षण्याभावेन पुमान् स्त्रियेत्यनेन प्रकृते एकशेषसम्भवात् । तत्कथं पुल्लिङ्गानुपपत्तिरित्यतोऽत्र चिन्तिताविति द्विवचनान्तस्याधिकार इत्याद्येकवचनान्तेनान्वयानुपपत्त्या तदुपपत्त्यर्थमधिकारश्च तद्धानिरिति मूलग्रन्थानुरोधेनाधिकारतद्धानी इत्येवंरूपस्य विरुद्धानेकलिङ्गावयवद्वन्द्वरूपद्विवचनान्तविशेष्यपदस्याध्याहर्तव्यत्वात् । तद्विशेषणे चिन्तितावित्यस्मिन् शब्दे उक्तरीत्या पुमान् स्त्रियेत्यनेनैकशेषेऽप्यजहत्स्वार्थलिङ्गातिरिक्तलिङ्गानां विशेषणानां विशेष्यनिघ्नतया तल्लिङ्गत्वनियमात् । विरुद्धानेकलिङ्गावयवद्वन्द्वरूपविशेष्यानुरोधेनानेकलिङ्गतापत्तौ युगपदनेकलिङ्गत्वानुपपत्तेः । पर्यायेण तत्प्रसङ्गे विरुद्धानेकलिङ्गावयवद्वन्द्वानुप्रयोगे 'परवल्लिङ्गम् द्वन्द्वतत्पुरुषयोः' इति परपदवल्लिङ्गानुशासनात् । कुक्कुटमयूर्यावित्येतदनुप्रयोगे अयं च इयं चेमे इत्यादाविदंशब्दे मयूरीपदलिङ्गवत्तद्धानिपदलिङ्गस्यैव प्राप्त्या चिन्तिते इति स्त्रीलिङ्गस्यैव भाव्यत्वादित्यभिप्रेत्याह **विप्रतिषेध इति** । विरुद्धलिङ्गद्वयप्राप्तावित्यर्थः । परं कार्यमितीत्यनेन परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्येतत्सूत्रं तात्पर्यतः सङ्गृह्णाति । चिन्तिताविति द्विवचनान्तस्याधिकार इत्याद्येकवचनेनान्वयानुपपत्त्या तदन्वययोग्यपदान्तरस्याध्याहर्तव्यत्वेऽपि इमौ विषयावित्यादिपदान्तराध्याहारेणापि तदन्वयोपपत्तौ अधिकारतद्धानी इत्येवंरूपं पुल्लिङ्गानुपपत्तिशङ्काप्रापकाध्याहारस्याकर्तव्यत्वान्न पुल्लिङ्गानुपपत्तिरिति समाधत्ते **मैवमिति** । अधिकारतद्धान्योरेव विषयताप्रतिपत्तये इतीमौ इत्युक्तम् । विषयाविति विधेयलिङ्गापेक्षया इमाविति पुल्लिङ्गमिति दर्शयितुं विषयौ इत्युक्तम् । **अयमाशयः**। चिन्तितावित्येतन्नाधिकारश्च तद्धानिरित्यनेन श्रुतेनान्वेति । येन भिन्नवचनतया विशेषणविशेष्यभावानुपपत्तिः स्यात् । नाप्यध्याहृतेनाधिकारतद्धानी इत्यनेन । येन चिन्तिते इति प्रसक्त्या चिन्तिताविति पुल्लिङ्गानुपपत्तिः स्यात् । किं त्विमौ विषयावित्यध्याहृतेनैव । तथा च विषयश्च विषयश्च विषयौ, चिन्तितश्च चिन्तितश्च चिन्तितौ, इत्यत्रोभयोरपि पुल्लिङ्गत्वेन स्त्रीपुंसभावनिबन्धनैकशेषप्राप्तेरेवाभावात् सरूपाणामित्येकशेषे शिष्टपुल्लिङ्गप्रयोगोपपत्तिरिति ।

केचित्तु । नन्वधिकारश्चेत्यादेरेकवचनान्तस्य सहत्वानवगमकत्वेन चिन्तिताविति द्विवचनान्तेन विशेषणविशेष्यभावेनान्वयायोगात् । द्विवचनान्तेनान्वयोपपत्त्यर्थमधिकारश्च तद्धानिरिति मूलग्रन्थानुरोधेनाधिकारतद्धानी इति विशेष्यवाचकविभिन्नलिङ्गावयवद्वन्द्वरूपं द्विवचनान्तं सहत्वागमकं पदमध्याहार्यम् । तथा च तद्विशेषणीभूते चिन्तितावित्यत्र, चिन्तितश्च चिन्तिता चेत्यस्य विरूपतया सरूपाणामेकशेष इत्येकशेषासम्भवेऽपि, ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ इत्यत्रेव स्त्रीपुंसमात्रकृतवैलक्षण्येन पुमांस्त्रियेत्यनेन पुंसोऽवशेषे विरुद्ध-





लिङ्गावयवद्वन्द्वविशेषणतया चिन्तितशब्दात्तदुभयलिङ्गप्रसङ्गे युगपदुभयलिङ्गत्वानुपपत्त्या पर्यायेण विरुद्धलिङ्गद्वय-प्रसङ्गे 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यनेनोक्तरूपद्वन्द्वानुप्रयोगे, पदपदलिङ्गस्यैव विधानेन, कुक्कुटमयूर्यावित्येत-द्वन्द्वानुप्रयोगे अयं चेयं च इमे इत्यादौ, परपदस्य मयूरीशब्दस्यैवेदंशब्दे लिङ्गप्राप्तिवत् इहापि परपदस्य तद्धानि-शब्दस्यैव चिन्तितशब्दाल्लिङ्गप्राप्तौ चिन्तिते इत्येव स्यात् । तत्कथं चिन्तिताविति पुल्लिङ्गमित्यभिप्रेत्य शङ्कते **ननु चिन्तिताविति कथमित्यादिना** । यद्यप्यत्र 'अहं च त्वं च पचावः' इत्यादौ सहत्वानवगमेऽपि द्विवच-नान्तेनान्वयदर्शनेनाधिकारश्च तद्धानिश्चेत्येकवचनान्तस्यापि चिन्तिताविति द्विवचनान्तेनान्वयोपपत्त्या सहत्वा-वगमकद्विवचनान्तस्याधिकारतद्धानी इति विशेष्यपदाध्याहारस्यानपेक्षितत्वेन चिन्तितावित्यस्य विरुद्धानेक-लिङ्गावयवद्वन्द्वानुप्रयोगत्वाभावेन परवल्लिङ्गमित्यस्याप्राप्तेर्न चिन्तिते इति स्त्रीलिङ्गप्रसङ्ग इति शक्यते समाधातुम् । तथाऽप्यङ्गीकृत्य द्विवचनान्तेनान्वयोपपत्त्यर्थं सहत्वावगमकद्विवचनान्तविशेष्यपदाध्याहारं सहत्वावगमस्य लिङ्गानुपपत्तिशङ्काऽप्रसञ्जकेनाध्याहृतेन **इमौ विषया**वित्यादिनाऽप्युपपन्नत्वेन तच्छङ्काप्रसञ्जकस्याधिकारतद्धानी इति विरुद्धानेकलिङ्गावयवद्वन्द्वरूपद्विवचनान्तपदस्यानध्याहार्यत्वात् नोक्तरीत्या चिन्तितशब्दे स्त्रीलिङ्गप्रसङ्ग इत्याशयेन परिहरति **मैवमित्यादिना** । विषयावित्येवोक्तेऽधिकारतद्धानिव्यतिरिक्तौ विषयाविति स्यादतस्तयोरेव विषयत्वप्रतिपत्तय इतीमौ इत्युक्तं विधेयविषयापेक्षयेमाविति पुल्लिङ्गमिति ज्ञापयितुं **विषया**वित्युक्तमित्याहुः ।

**वा०र०— पुंसः शेषेणेति** । पुमान् स्त्रियेत्यनेनेति शेषः । वक्ष्यति च पुमानित्यादिः **तत्रेति** । ब्राह्मणश्च ब्राह्मणी चेत्यादाविवेति शेषः । लिङ्गकृतं तु वैरूप्यमिति पाठो मञ्जर्यनुसारी । **यत्र वैरूप्यमिति** । यत्रेतिपदयुक्त-पाठे तु पूर्वयत्रेत्यस्यानुवादाय स्पष्टीकरणार्थमिति न वैय्यर्थ्यं शङ्कनीयम् । **विशेषकृतवैलक्षण्यादिति** । न च स्त्रीपुंस्त्वातिरिक्तवैलक्षण्यं न प्रतीयत इति कथमेतदिति वाच्यम् । चिन्तितश्च चिन्तिता चेत्यनयोरधिकार-तद्धानिरूपभिन्नविशेष्यकृत्वस्यैव स्त्रीत्वादिव्यतिरिक्तवैलक्षण्यस्य सत्त्वेन तस्यैव च विशेष्यकृततया दोषा-भावात् । मञ्जर्यां पदान्तरगम्येऽपि तल्लक्षणविशेषे भवति । यथा गोश्चायं गौश्चेयमेतौ गावौ चरत इतीत्यादिना यत्र स्त्रीपुल्लिङ्गयोष्टीबादिरूपो विशेषो नास्ति तादृशे एतौ गावौ एतौ ग्रामण्यवेतौ खलधावित्यादिरूपे यमित्यादि पदान्तरमप्यविशेषमङ्गीकृत्य स्त्रीपुंसकृतवैलक्षण्यस्योपपादनदर्शनात् । तथा तत्रोक्तरूपवैलक्षण्यानङ्गीकारे पुमानित्यनेनैकशेषाप्राप्तेः सरूपाणामित्यनेनैकशेषस्य स्वीकार्यतया स्त्रीलिङ्गगोशब्दस्यापि शेषसम्भवात् तत्पक्षे तद्विशेषणीभूतैतच्छब्दस्यापि स्त्रीलिङ्गतयैते वा वावित्यादिकं यन्नियमतोऽस्ति तन्न स्यात् । अत्र प्रकारान्तरे-णैवाविति पुल्लिङ्गोपपत्तिशङ्कातत्परिहारादिप्रकारनिरूपणं तत्त्वबोधिन्यां ज्ञेयम् । रमायां तु तत्तदितरकृतविशेष-विरहरूपे विशिष्टाभावतात्पर्यात् स चेह विशेष्याभावादस्त्येवेत्येवं विवक्षयैतौ गावावित्यादावपि पुमानिति सूत्रप्रवृत्तिसम्भवात्तेनैकशेषे एताविति पुल्लिङ्गनियमोपपत्तिरिति प्रतिपादितमिति ज्ञेयम् । बन्धमिथ्यात्वं नैवे-त्येतत्सम्बन्धिमूलटीकायां वस्तुकृतमित्यस्य वस्तुना परमार्थसता निष्पन्नमिति व्याख्यानं धर्मित्वं च भूतलादेः प्रातीतिकं न वस्तुकृतमित्येतट्टीकायां बुद्धिहेतुकृतमित्येतट्टीकायां च यत् व्याख्यानं तत्र वस्तुनिमित्तकत्वस्य विवक्षायाः सत्त्वाद्वैषम्यं किञ्च पूर्ववाक्ये यत्र सर्वं सरूपं लिङ्गकृतं तु वैरूप्यमित्यत्र रूपसाम्यवैषम्ययोर्व्याहृततया

स्वरूपस्य वैषम्याजनकत्वेन शब्दस्वरूपकृतं वैषम्यं नास्तीति वस्तुमशक्यतया च यत्र शब्दस्वरूपे साम्यं लिङ्गे च वैषम्यमित्येव विवक्षणीयत्वेन विशेष्यकृतमित्यत्रापि विशेष्ये विद्यमानमित्येवार्थस्य प्रकरणप्राप्तत्वात्। उक्तं च वद्धोयनेति सूत्रीयकाशिकायां समानायामाकृतौ वृद्धयुवप्रत्ययौ भिद्येते इति स्त्रीपुंसकृत इति मञ्जर्या अप्युक्त एवार्थः गोत्र युव प्रत्ययकृतं वैरूप्यमित्येतत्कौमुदीशेषीस्थेनार्थकृतं शब्दस्येत्यादेरप्ययमेवार्थः। तादृशस्य वैलक्षण्यस्य च चिन्तितश्च चिन्तिता चेत्येतद्विशेष्यभूतयोरधिकार तद्धि निरूपशब्दयोः सत्त्वेन तदतिरिक्त-वैलक्षण्यस्य चानभिधानेन तन्निषेधायोग इति ज्ञेयम्। **प्रत्ययागमादीति**। यद्यपीन्द्रेन्द्राण्यादिष्वेकशेषनिषेधः पुंयोगादाख्यायामित्युक्तपुंयोगादित्यादिकं काशिकादावुक्तं तथापि पुंयोगनिमित्तक आनुगागमः एवं स्त्रियामन्यत्र वा विहितः प्रत्ययोऽपि द्रष्टव्यः। तत्प्रयुक्तं वैलक्षण्यमपि प्रत्ययागमादिकृतं भवत्येवेति न दोषः। **अभिमतत्वेनेति**। एकशेषनिषेधं प्रति निमित्ततयेति पूरणीयम्। **आगमादीति**। इन्द्रेन्द्राण्यावित्यादाविवेति शेषः। **एकवचनान्तेनान्वयानुपपत्त्येति**। ननु त्वं चाहं च पचावः इत्युत्तरत्रोदाहरणात् भाष्ये उदाहरणाच्च तद्रीत्या युक्त एवैकवचनान्तस्य द्विवचनान्तेनान्वय इतीति चेन्न। भिन्नवचनान्तानामप्यन्वयाङ्गीकारे सर्वत्र ग्रन्थे तथाभूतानामन्वयोपपत्त्यर्थं एतौ एते इत्यादिपदानामुपादानं व्यर्थं स्यात्। अत्र मूलेऽपि अधिकाररूपो विषयस्तद्धानिरूपश्च विषय इत्यध्याहारात् इत्येव समाधेयत्वापाताच्च अपशूद्राधिकरणे हारश्चेत्वा च हारेत्वानाविति प्राप्तद्विवचनस्य व्यत्ययेनैकवचनं(?) हारेत्वेति प्रतिपाद्य तथा सति सहगोभिरस्त्वित्यत्रत्यास्त्वित्यनेन सम्बन्धानुपपत्तिपरिहाराय तथात्वे प्रत्येकमन्वय इति प्रतिपादनानुपपत्तेश्च निर्दुःखत्वं महानन्दः श्रुत्यैवेशस्य भण्यत इति वैशेषिकाधिकरणीयानुव्याख्यानमूले प्रत्येकं सम्बन्धादेकवचनमिति प्रतिपादनेन तद्विरोधाच्च अनुप्रमाणमेतानीत्यत्र प्रत्येकं सम्बन्धोक्तेश्च। अत एव चोपमेत्यधिकरणे 'तदधीनत्वमेवेति किञ्चित्सादृश्यमेव चः। सम्प्रकाशयतः' इत्यनुव्याख्यानमूले इत्युभाबर्थद्वयं सम्प्रकाशयत इति द्वेधोक्तेश्च। अत एव महाभाष्ये शङ्काग्रन्थे त्वं चाहं च वृत्रहन्नुभौ। सम्प्रयुज्यावहा इत्येवमुभावित्यस्यान्वयघटकतयोक्तिः यदप्यच्युत इत्यादि प्रत्याख्यानं च भाष्यस्थशङ्काग्रन्थेऽप्युष्मदस्मदोरनेकशेषभावात् तदधिकरणानामप्यनेकशेषभावादविप्रतिषेध इत्युक्त्वा तदुपपादनाय क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्येत्यभिहितं तु क्रियायामेकशेषप्रापकमपि न सर्वत्रेति तद्बलाच्चिन्तितादिशब्देष्वेकवचनान्तत्वेऽपि द्विवचनान्तेनान्वय इत्यपि न शङ्कावकाशवति केचित्पक्षीयवक्ष्यमाणोक्त्यनुसारेण सहत्वावगत्या द्विवचनान्तेनान्वयाङ्गीकारस्तु ग्रन्थकृत्सम्मत एवेत्यास्ताम्। **अधिकारतद्धानीत्येवंरूपस्येति**। **अधिकारश्चेति** मूलानुसारेण अधिकारतद्धानीत्येवंरूपेणाध्याहारेऽप्यधिकारश्च तद्धानिरिति श्रूयमाणपदयोस्तु न वैय्यर्थ्यम्। अध्याहारान्तरव्यावर्तनेनाधिकारतद्धानीत्येवंरूपाध्याहारविशेषलाभायैव तत्पदोपयोगाङ्गीकारात् त्वं चाहं चेत्यादि भाष्योदाहृतवाक्ये उभावित्यस्यैव क्रियान्वयेऽपि तत्समर्पकतयैव त्वं चेत्यादि श्रूयमाणैकवचनान्तयोरुपयोग इत्यस्य सिद्धत्वात् 'उषा स्वाहा च पर्जन्यो मित्रोऽग्निरि'त्याद्यनुव्याख्याने उत्तरोत्तरतस्त्वेत इत्याद्यन्वयघटक एत इति प्रयोगदर्शनाच्च इतीमौ विषयाविति समाधानमूलोक्ताध्याहारपक्षेऽपि श्रूयमाणपदयोरितीत्येतत् समर्पकतयोपयोग इति सिद्धमेव। एवमेकवचनान्तयोर्द्विवचनान्तेनान्वयानुपपत्तिशङ्कापरिहाराय मूलानुरोधेनाधिकारतद्धानी इति द्विवचनान्तपदाध्याहारमङ्गीकारयित्वा





तदाश्रयणेन मूलोक्तां पुल्लिङ्गानुपपत्तिविप्रतिषेध इत्युत्तरवाक्यं विवृण्वन्नेव विशदयति **तद्विशेषण इत्यादिना**। इत्यस्मिन् शब्दे इत्यस्य स्त्रीलिङ्गस्यैव भाव्यत्वादित्युत्तरेण सम्बन्धः। पुल्लिङ्गस्थाने स्त्रीलिङ्गप्राप्तेरिति भावः। **एकशेषेऽपीति**। चिन्तिताविति शब्द इत्यस्यात्रापि सम्बन्धः तच्छब्दप्रकृतिभूतप्रातिपदिक इति च तदर्थः। **अजहत्स्वार्थलिङ्गेति**। स्वार्थो द्रव्यं तथा लिङ्गमित्यादिना प्रातिपदिकार्थनिरूपणावसरे स्वार्थद्रव्यलिङ्गसङ्ख्या-कारकरूपपञ्चकचतुष्कत्रयद्वयपक्षेष्वपि लिङ्गस्यापि प्रातिपादिकार्थत्वोक्तेः स्वार्थेत्युक्तम्। स्पष्टं चेदं बहुषु बहुवचनं प्रातिपदिकार्थेत्यादिसूत्रीयकैय्यटमञ्जरीशेष्यादाविति ज्ञेयम्। यद्वा यानि पदानि स्वस्वार्थस्य लिङ्गं न जहति लिङ्गत्रयेऽपि नियतलिङ्गानि आदिः विषय इत्यादीनि यावत् तत्पदातिरिक्तेति योज्यम्। **विरुद्धानेक-लिङ्गावयवद्वन्द्वतयेति**। न च विशेष्यस्यैकलिङ्गतया कथं तदनुरोधेन चिन्तितावित्यत्रानेकलिङ्गप्राप्त्यभि-धानमिति वाच्यम्। न ह्यत्र विशेष्ये लिङ्गद्वये मयि तिष्ठतीत्युच्यते। अपि तु विरुद्धलिङ्गावयवत्वप्रयुक्तं लिङ्गद्वयं प्राप्तमित्येव ततश्च लिङ्गद्वयप्राप्तौ तन्निर्धारणाय परवल्लिङ्गमिति सूत्रप्रवृत्तेः सिद्धतया कुक्कुटमयूर्यावित्यादि विशेष्यपद इव विशेषणपदेऽपि परवल्लिङ्गमिति सूत्रप्रवृत्तेः प्राक् च लिङ्गद्वयं प्रसक्तमिति युक्तानेकलिङ्गप्राप्तिः। तथा च विशेष्येऽनेकलिङ्गप्राप्तिवद्विशेषणीभूतचिन्तितशब्देऽपि एकशेषोत्तरं विरुद्धलिङ्गकाधिकारतद्वानिरूपा-वयवकद्वन्द्वतपविशेष्यानुसारेण विरुद्धलिङ्गद्वयप्राप्तिः स्यादेव। विशेष्ये परवल्लिङ्गमित्यनेनैकलिङ्गनिश्चयस्यापि वस्तुतस्तत्र तदुभयलिङ्गप्रसक्तिरनिवार्येवेति परेणापि स्वीकृतत्वात् तथा चावयवलिङ्गनिमित्तकमेव विशेषणपदे लिङ्गद्वयं प्रसक्तमित्युक्तौ न कोऽपि दोषः। अत एव विशेष्यवत्परवल्लिङ्गमित्यनेन परवल्लिङ्गता चिन्तितदेभि-धास्यत इत्यलम्। **युगपदेकेति**। अत्रापि पूर्वोक्तरीत्या लिङ्गद्वयप्राप्तिरवधेया। ततस्तदनुपपत्तिमुद्भाव्य पर्ययेण तत्प्रसङ्गाभिधानं युक्तमेव। मञ्जर्याद्यनुसारेण चेदमुक्तमिति ज्ञेयम्। **द्वन्द्वानुप्रयोगे परवल्लिङ्गमिति**। अयं भावः। सूत्रद्वन्द्वतत्पुरुषयोरिति न सप्तमी किन्तु षष्ठ्येव। तत्रापि समासार्थस्यालिङ्गातिदेशा(?)द्वन्द्वार्थस्य तत्पुरुषार्थस्य चेत्यर्थः। तथा च समासार्थस्य समास इवानुप्रयोगेऽपि सत्त्वेन परवल्लिङ्गताविधानं युक्तमेव। अत एवोक्तं मञ्जर्यां परवल्लिङ्गमिति सूत्रे द्वन्द्वस्य तत्पुरुषस्य चेति द्वन्द्वार्थस्य तत्पुरुषार्थस्य चेत्यर्थः। तेनानुप्रयोगेऽपि तदेव लिङ्गं भवतीति एवं शेष्यादावपि अधिकः सूत्रविचार आकारे तत्र परपदात्पूर्वमित्यादेः उक्तेः किं चोक्तार्थानङ्गीकारे इमे एता इत्यादिरूपानुप्रयोगे एकशेषोत्तरं परवल्लिङ्गतापि न सिद्ध्येत्। त्यदादीनि सर्वैर्नित्यमिति सूत्रे मिथस्त्यदादिषु यद्यत्परं तच्छिष्यत इत्युभावपि एकस्मिन्नेव त्यदादिशब्दे स्त्रीपुंसस्त्वकृतवैलक्षण्ये सति परशेषविधायकत्वाभावेन तेनैकशेषाप्रसङ्गात् अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यमिति भाष्यकृता द्वन्द्व-तत्पुरुषविशेषणयोस्त्यदादीनीति सूत्रेण एकशेषो न क्रियत इत्युक्तेश्च। उक्तं च कैय्यटे न्यायसिद्धमिदं परवल्लिङ्गद्वन्द्वतत्पुरुषोरिति समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्यापि सर्वनाम्नस्तल्लिङ्गस्य सिद्धत्वादिति मञ्जर्यामपि समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्यापि सर्वनाम्नस्तदेव लिङ्गं भवतीति प्रतिपादनात् एवं चानुप्रयोगे प्रकारान्तरेणैकविशेषानुपपत्तेः पुमान् स्त्रियेत्यनेनैकशेष इत्येव वाच्यम्। तदुत्तरं च परवल्लिङ्ग-मित्यनेन परवल्लिङ्गतायामिम इत्यादेर्निष्पत्तिश्च वाच्या। तथा च कथमनुप्रयोगे परवल्लिङ्गत्वानाश्रयणम्। एतेन द्वन्द्वतत्पुरुषयोरित्यस्य यथाश्रुतार्थाश्रयणेनानुप्रयोगो परवल्लिङ्गत्वानुपपत्तिचोदनमप्यनवकाशमिति ॥

**मयूरीपदलिङ्गवदिति** । ते च मे इत्यस्य कुक्कुटमयूर्यावित्येतदनुप्रयोगतया कुक्कुटमयूरीपदमात्रलिङ्गत्वाभावेन तल्लिङ्गत्वोक्त्ययोग इति वाच्यम् । मयूरीपदमात्रलिङ्गत्वोक्तेः प्रकृते भावेन मयूरीपदलिङ्गत्वमात्रोक्तेश्चोभयपदलिङ्गत्वाविरोधेनात्र क्षुद्रोपद्रवानवकाशात् । किञ्च इमे इत्यत्रस्थस्त्रीलिङ्गं मयूरीपदेऽप्यस्तीति तस्य तल्लिङ्गत्वोक्तिमात्रस्योपपन्नत्वेऽपि कुक्कुटपदगतपुल्लिङ्गस्येमे इति पदे समवेततयेमे इत्यत्रोभयपदलिङ्गत्ववचनस्यैवायोगः । अपि च परवल्लिङ्गतोत्तरमैकपद्यप्रयुक्तैकपदे परपदलिङ्गमात्रमेव भवति तथा च तदेव लिङ्गं पूर्वपदलिङ्गतयापि व्यवह्रीयमाणमित्येव न तु पूर्वोत्तरपदयोर्लिङ्गद्वयमस्ति येनोभयलिङ्गत्वं वक्तव्यत्वे न वाच्यं स्यात् । उत्तरपदलिङ्गमेव पूर्वपदीयमित्येतावपि पूर्वपदं तेन लिङ्गेन लिङ्गवदित्युच्यत इति तस्यास्वाभाविकत्वं स्वाभाविकमेव हि तल्लिङ्गतयोच्यमानं युक्तम् । ततश्चेमे इत्यत्र स्त्रीलिङ्गस्य मयूरीपदस्वाभाविकलिङ्गत्वेऽपि कुक्कुटपदस्वाभाविकलिङ्गत्वाभावेनोभयपदस्वाभाविकलिङ्गत्वाभावात् तदङ्गीकृत्य मयूरीपदलिङ्गत्वनिराकरणायोगः । उभयानुप्रयोगत्वमात्रेणोभयलिङ्गत्वशङ्कनं चानवकाशम् । परवल्लिङ्गतोत्तरं परपदलिङ्गत्वस्वीकारेणापि उभयानुप्रयोगतां स्वीकृत्यैव तत्स्वीकारस्य कृततयोभयानुप्रयोगत्वस्याप्रयोजकत्वात् उत्तरपदलिङ्गेन पूर्वपदस्य लिङ्गवता व्यवहारमात्रस्येष्टत्वेऽपि वस्तुतस्तदभाव इत्युक्तमेवेत्यलम् । **तद्धानिपदलिङ्गस्यैवेति** । अत्रापि परवल्लिङ्गत्वप्रयुक्तं परपदलिङ्गमेवास्तीत्याशयेन तद्धानिपदेत्येवोक्तं शिष्टमुपपादनं पूर्वोक्तरीत्येति न कश्चित्क्षुद्रोपद्रवः । विप्रतिषेधे परमिति मूलस्य प्रतीतार्थानुपपत्तेरनुकरणरूपमूलाभिप्रेतमर्थं वक्तुं विप्रतिषेध इत्येतत् तावद्व्याचष्टे **विरुद्धलिङ्गद्वयेति** । **सङ्गृह्णातीति** । अनेन परं कार्यमिति परकार्यविधायकपरवदिति सूत्रेणेत्यर्थ उक्तो भवति । अनुकरणस्वभावश्च मूलकारः अत्र पदेऽन्ययोगव्यवच्छेदपादप्रयोजनं इत्युक्तत्वात् । एवकारार्थो हि सप्रसिद्ध(?) उपसर्गत्वतो वास्त्वि(?)त्युत्तरपादव्याख्यावसरे उपसर्गाः क्रियोद्योग इति शङ्कावाक्यं अधिकमन्तराधिकरणे उदाहृतं ज्ञेयम् । तथा सम्भवस्तु सतोऽनुपपत्त्योरित्येतत्सूत्रीयस्वतन्त्रत्वात्परमात्मन इत्यनुभाष्यमूलेऽनवस्थितेरसम्भवाच्चेति युक्तिरुक्ता । यदि किमपीत्यादिना टीकायामर्थान्तरं च कथितम् । यदुपतीये च यद्यपि अधिकारतद्धानी इति विशेष्यमध्याहृतमित्येकमेव लिङ्गं प्राप्नोति तथापि विरुद्धलिङ्गावयवद्वन्द्वतयान्तर्गतं लिङ्गद्वयं परवल्लिङ्गताविधिप्रवृत्तेः प्राक्प्राप्तमस्तीति तद्विशेषणेऽपि परवल्लिङ्गताविधिप्रवृत्तेः प्राक्लिङ्गद्वयप्राप्तिरनिवार्यैव । विरुद्धपदं तु लिङ्गद्वयापत्तौ तदुभयमप्येकत्रास्त्वित्याशङ्कापरिहारायान्तेन (?) लिङ्गयोर्विरुद्धयोरेकत्र समावेशायोगादन्यतरव्यवस्थापनार्थं परवल्लिङ्गमित्यस्य प्रवृत्तिरावश्यकीति प्रतिपादितमिति न विरुद्धपदस्य वैय्यर्थ्यशङ्कावकाश इति ज्ञेयम् । **परवल्लिङ्गद्वन्द्वेति** । ननु चिन्तितावित्यस्यैकपदतया समासत्वाभावेन परवल्लिङ्गमिति सूत्रप्रसक्त्ययोग इति चेन्न । एकपद्यस्य समासप्रयोजनत्वेन समासव्यावर्तकत्वानुपपत्तेः एकशेषस्य सत्त्वात्समासाभाव इत्यत्र तात्पर्यमिति चेत् न । एकशेषस्य द्वन्द्वापवादत्वेन नपुंसकमनपुंसकेनेत्यादि सूत्रवृत्त्यादौ वैय्याकरणैरुक्ततया द्वन्द्वप्रसक्त्यभावे एकशेषप्रवृत्त्ययोगेन पूर्वपत्या (?) समासत्वव्यवहारोपपत्तेः । वस्तुतस्तु द्वन्द्वार्थस्यैव ग्रहणमिति प्रागुपपादनादेकपदत्वेऽपि एकशेषेऽपि वा द्वन्द्वार्थस्य सत्त्वाद्युक्ता तत्सूत्रप्रवृत्तिरिति न कश्चिद्दोषः । **अध्याहारेणापीति** । मनूक्तपदाध्याहारवदधिकारतद्धानी इति पदाध्याहारस्यान्वयानुपपादकत्वात् कथं समुच्चयार्थकापिशब्दप्रयोग इति चेन्न । उक्तार्थास्मरणात् उक्तं च एकवचनान्तस्य द्विवचनान्तेनान्वयानुप-





पत्त्याध्याहारे कृते तदनुपपत्तिपरिहारमात्रं तेनाध्याहारेण भवत्येव पुल्लिङ्गान्वयानुपपत्तिस्त्वध्याहारोत्तरमुद्भाव्यत इति न तत्परिहारकत्वमध्याहारस्यावश्यकमित्यादि । अत एवात्र एकवचनान्तेनान्वयेत्यादिनाध्याहारनिमित्तानुवादः । वक्ष्यति च अधिकारतद्धानी इत्येवंरूपलिङ्गानुपपत्तिशङ्काप्रापकाध्याहारस्याकर्तव्यत्वादिति विषयावित्यादिपदं तु मूले उपलक्षणतया अभिप्रेतमेवार्थाध्याहारान्तरविवक्षयेति न कश्चिद्दोष इति ज्ञेयम् । **विधेयलिङ्गापेक्षयेति** । न च विषयाविति विधेयमनपेक्ष्यापि चिन्तिताविन्युपपत्तये इमावित्येव पुल्लिङ्गाध्याहारसम्भव इति वाच्यम् । चिन्तिताविन्युपपत्तये पुल्लिङ्गाध्याहारस्यावश्यकत्वे अधिकारश्च तद्धानिरित्येतदनन्तरमितीमावित्येवाध्याहृते चिन्तिताविति द्विवचनान्तेनान्वयोपपत्तावपि अधिकारश्च तद्धानीरिति इमे इत्यावापत्त्या इतीमावित्यस्याधिकार इत्यादिनान्वयायोगात् अतो विषयावित्यप्यध्याहार्यं तथाधिकरणान्तरे विषयप्रतिपादनोपक्रमेणात्र विषयत्वपुरस्कारस्यैवावश्यकतया विषयावित्येवावश्यं पूरणीयत्वात् ततश्चेतीमाविति पुल्लिङ्गस्याधिकारश्च तद्धानिरित्युक्ताधिकारतद्धानिविवक्षया सम्भवोऽपि विषयताविधायकविषयावित्यनेन अन्वयोपपत्तेर्विधेयलिङ्गापेक्षयैवोपपत्तिरिति अवश्यमाश्रयणीयमिति अशेषमतिमङ्गलम् ।

**स०व्र०**— ननु चिन्तितश्च चिन्तिता चेत्यत्र द्वन्द्वापवादकेन 'सरूपाणामेक शेष एकविभक्तौ' इत्यनेनैकशेषे सति ब्राह्मणश्च ब्राह्मणी चेत्यादौ नियतैकशेषत्वेन स्वयं विशेष्यस्यान्यविशेषणत्वात् विशेषणानां त्वजहत्स्वार्थलिङ्गातिरिक्तानां विशेष्यलिङ्गत्वनियमात् अनियतैकशेषस्य चिन्तितशब्दस्य ब्राह्मणावित्यादिवत् एकशेषनिमित्तकलिङ्गविशेषासम्भवात् अधिकारतद्धानिशब्दयोर्विरुद्धलिङ्गत्वेन तद्विशेषणीभूतचिन्तितशब्दस्यापि विरुद्धोभयलिङ्गत्वे प्राप्ते विप्रतिषेधे परं कार्यमित्यत्र भाष्यकृता एकस्मिन्नेव शब्दे विरुद्धोभयलिङ्गत्वरूपसमावेशरूपशब्दपरविप्रतिषेधस्यापि व्याख्यातत्वादत्रापि प्रयोगे परस्य तद्धानिशब्दस्यैव लिङ्गं स्यादिति भावेन शङ्कते **नन्विति** । ननु चात्र पुमान्स्त्रियेत्यनेनैव माता च पिता च पितरावित्यादिवत् एकशेषे चिन्तिताविन्युपपन्नत्वात् 'न स्वरूपाणामेकशेषः' इत्यनेनैकशेषप्राप्तिरिति चेत् न । यत्र स्त्रीपुल्लिङ्गमात्रकृतं वैलक्षण्यं न तु विशेष्यकृतं तत्रैव तस्य प्रवृत्तेः प्रकृते च अधिकारतद्धानिरूपविशेष्यकृतवैलक्षण्यसत्त्वेन वैरूप्यान्न सरूपाणामित्यस्य प्रवृत्तिः । सारूप्य एव तस्य प्रवृत्तिरिति चेत् न किञ्चिद्वैरूप्येऽपि सरूपाणामित्यर्थस्य प्रवृत्तेरङ्गीकार्यत्वात् । अन्यथा कुक्कुटमयूर्याविमे मयूरीकुक्कुटाविमौ इत्यादिप्रयोगो न सिद्ध्येत् । तस्मात्तादृशसूत्रान्तरासाध्यप्रयोगोपपत्त्यर्थकिञ्चिद्वैरूप्येऽपि तस्य प्रवृत्तेरिति न दोषः । न च कुक्कुटमयूर्यावित्यादाविव परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्यस्य प्राप्त्या चिन्तिताविन्युपपन्नमिति वाच्य तद्वत्प्रकृते अधिकारतद्धानिशब्दयोः समस्तत्वाभावेन तत्प्राप्त्यसम्भवादिति शङ्काग्रन्थाभिप्रायः । **मैवमिति** । इमावित्येवोक्ते अनन्वितत्वेनोक्तशङ्कापरिहारायोगात् इमौ विषयावित्यध्याहारः । केचित् **ननु चिन्तिताविति कथमिति** । द्विवचनं कथमित्यर्थः । अयमाशयः । अत्र चिन्तितेत्येकवचनमेव युक्तं न चिन्तिताविति कथमिह द्विवचनम् । तथा हि चिन्तितशब्दस्य विशेष्यभूताधिकारानिशब्दवचनानुसारेणैकवचनान्तत्वमेव युक्तम् । न चैवमुभयसम्बन्धासिद्धिश्चिन्तितत्वस्येति वाच्यम् । चिन्तितशब्दो हि क्रियावचनः । तस्य चैकवचनान्तस्यापि चिन्तितेति सकृत्प्रयोगे अधिकारस्तद्धानिश्चेति समुच्चयार्थकचशब्द-

प्रयोगात् हरिं गुरुं च भजस्वेत्यत्रेव प्रत्येकं सम्बन्धसिद्ध्या अधिकारश्चिन्तितः तद्धानिश्च चिन्तितेति बोधसम्भवात् प्रत्येकमेकक्रियासम्बन्धस्यैव समुच्चयरूपत्वात् । एवं च न द्विवचनकृत्यमिति । नन्वेकवचनप्रयोगेऽपि चिन्तितेऽपि स्त्रीलिङ्गस्यैव प्रयोग इत्यत्र किं नियामकं अधिकारस्य प्रथमप्रयुक्तत्वेन तदनुसारेण चिन्तित इति पुल्लिङ्गप्रयोगस्यैवोचितत्वादित्यत आह **विप्रतिषेध इति** । न चात्र सौत्रमेव परत्वमिति वैयाकरणानामभिप्रेतत्वेन न प्रकृतविषयतायां कथमस्येति चेत् प्रयोगसम्बन्ध्यपि परत्वमत्र विवक्षितमिति पदमञ्जर्यादिग्रन्थपर्यालोचनयावगमात् । एवं चात्राऽऽचार्यप्रयोगे हानिशब्दस्य परत्वात् तदाश्रितं कार्यं स्त्रीलिङ्गमेव चिन्तितशब्दे विशेष्यनिघ्ने युक्तं तस्माच्चिन्तितेति स्त्रीलिङ्गैकवचनेनैव भाव्यम् । न चिन्तिताविति द्विवचनेनेति शङ्कार्थः । अन्ये तु चिन्तितश्च चिन्तितश्चेत्यत्रैकशेषे कर्तव्ये विप्रतिषेधे परं कार्यमिति स्त्रीलिङ्गस्यैव शेषे चिन्तिते इति स्यात् चिन्तिताविति पुल्लिङ्गशेषः कथमिति शङ्कार्थमभिधाय तत्र च पुमान्स्त्रियेतिसूत्रेण पुल्लिङ्गशेषो भविष्यत्यतः 'काऽत्रकथन्ता' इत्याशङ्क्य तत्समाधानार्थमतं तेषां भावं नाकलयाम उक्तरीत्या व्याख्यानेषु पुमान् स्त्रियेत्यस्य प्राप्तेरेव अभावात्' इत्याहुः ।

॥ इति श्रीसुधाटिप्पणिकायां श्रीमत्सत्यव्रततीर्थविरचितायां
प्रथमाध्यायस्य तृतीयःपादः ॥

**विठ्ठल०**— ननु अधिकारश्च तद्धानिरित्यत्र चिन्तितशब्दस्य अधिकारतद्धान्युभयसम्बन्धोपपत्तये, चिन्तितश्च चिन्तिता चेति द्वन्द्वसमासाश्रयणीयत्वात् परस्य हानिशब्दस्य स्त्रीलिङ्गतया परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति द्वन्द्वसमासपदस्यापि स्त्रीलिङ्गत्वेन चिन्तित इति स्त्रीलिङ्गेन भाष्यं पुल्लिङ्गं तु नोपपद्यते इत्याशयेन शङ्कते **ननु चिन्तिताविति** । पुमांस्त्रियेति सूत्रात्पुल्लिङ्गत्वं संभवतीत्यत उक्तम् **विप्रतिषेध इति** । तुल्यबलयोर्विरोधे परं पश्चात्तनं कार्यं भवतीत्यर्थः । प्रकृते परवल्लिङ्गस्य पुमांस्त्रियेति कार्यापेक्षया पश्चाद्विधानात् तदेव भवतीति परं पश्चात्तनं कार्यमिति न्यायेन स्त्रीलिङ्गत्वमेव नियतमिति भावः । यद्वा चिन्तितशब्दस्य क्रियावचनत्वेन हरिं गुरुं च भजस्वेत्यादाविव प्रत्येकं सम्बन्धसिद्ध्या अधिकारश्चिन्तितः । तद्धानिश्च चिन्तितेति एकवचनान्तशब्देनैवार्थावब्धेध(?)संभवेन चिन्तितेति स्त्रीलिङ्गैकवचनेन भाव्यम् । चिन्तिताविति द्विवचनं कथमित्याशयेन शङ्कते **ननु चिन्तिताविति कथमिति** । नन्वेकवचनप्रयोगेऽपि चिन्तितेति स्त्रीलिङ्गप्रयोग एवेत्यत्र किं नियामकं अधिकारस्य प्रथममुक्तत्वेन तदनुसारेण पुल्लिङ्गप्रयोगस्यैवोचितत्वादित्यत आह **विप्रतिषेधे परं कार्यमिति स्त्रीलिङ्गेन भाव्यमिति** । तथा चात्र प्रयोगे हानिशब्दस्य परत्वात् तदनुसारेण चिन्तिते इति स्त्रीलिङ्गैकवचनेन भाव्यम् । न चिन्तिताविति द्विवचनेनेति शङ्काभिप्रायः । अत्राध्याहृतेन विषयाविति पदेन चिन्तिताविति पदस्य सम्बन्धान्नोक्तदोषशङ्कावकाश इति परिहरति **मैवमिति** । अननुष्ठितसाधनमित्यत्राननुष्ठितं साधनं यस्येति बहुव्रीहिः । अनुष्ठितसाधने सिसाधैषाविरहात्सिसाधैषितस्यैव फलत्वादिति भावः । एतद्वा मोक्षस्याफलत्वसिद्धयेऽभिहितं मोक्षसाधनस्य देवैरनुष्ठितत्वान्नात्मानमुपासीतेत्यादिविधा तेषामधिकार इति भावः ।





**चषकः— ननु चिन्तिताविति कथमिति** । पुंस्त्वं कथमित्यर्थः । **विप्रतिषेध इति** । विरुद्ध-लिङ्गद्वयप्राप्तावित्यर्थः । **परं कार्यमिति** । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरित्येतद्योगमनेनाभिप्रैति । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमावित्याद्युदाहरणम् । तथा च श्रूयमाणद्विवचनान्तविशेषणवाचकपदस्य समभिव्याहृतैकवचनान्त-विशेष्यवाचकपदद्वयेनान्वयायोगेऽप्युपस्कृतद्विवचनान्ताधिकारितद्धानी इति पदेनान्वय उपेयस्तथा सति दर्शिता-द्योदाहरणे अनुप्रयुज्यमाने इमे इतिपदे स्त्रीत्ववत्प्रकृतेऽपि तदापत्त्या चिन्तिते इति विन्यासः स्यादिति भावः । **इतीमौ विषयाविति** । तथा च पुंस्त्वविशेषितद्विवचनान्तपदस्यैवोपस्कार्यत्वोपगमान्नोक्तक्षत्यवकाश इति भावः ।

अत्रत्यानां गिरां कासां चिद्व्याख्यालेशतो हरिः ।
प्रीणीयाद्वाजिवदनो गुरुहृत्पद्ममन्दिरः ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणश्रीसत्यप्रियतीर्थपूज्यपाद-
तनूजसर्वतन्त्रस्वतन्त्रगालवपुरीश्रीनिवासार्यान्तेवास्यन्तेगणगणितेन कृष्णशर्मणा रचितायां
श्रीमन्न्यायसुधाचषकनाम्न्यां व्याख्यायां प्रथमाध्यायस्य तृतीयः पादः ॥

**॥ इति 'चिन्तितौ' इति अनुव्याख्यानस्थपदलिङ्गवैषम्यशङ्का, तन्निरासश्च ॥**
**॥ इति 'तदुपर्यपि....', 'शुगस्य....' इत्यधिकरणद्वयस्य सङ्गत्यभावशङ्का तन्निरासश्च ॥**

## ॥ इति वामनाधिकरणम् ॥

## ॥ १-३-७ ॥

***



# ॥ अथ देवताधिकरणम् ॥

## ॥ १-३-८ ॥

**॥ अथ तत्र 'ॐ भावं तु बादरायणोऽस्ति हि' इति (१-३-८-३३) तमसूत्रव्याख्यानम् ॥**

**॥ तत्रादौ एतत्सूत्रोत्थाप्यपूर्वपक्षः (देवानां वेदविद्याधिकारो नास्तीति) ॥**

१५ सु०— अत्र देवानां वेदविद्याधिकाराक्षेपार्थं सूत्रद्वयम्, 'मध्वादिष्वसम्भवादनधिकारं जैमिनिः', 'ज्योतिषि भावाच्चे'ति । तस्यार्थः । न देवा वैदिकोपासनादावधिक्रियन्ते, तान्प्रति वैदिकविधेरभावात् ।

'आत्मानमुपासीत' इत्यादिविधिरेव तान् विषयीकरोतीति चेन्न, विकल्पानुपपत्तेः । तथाहि । किं तेषां सर्ववेदोक्तोपासनादावधिकारः, किंवा क्वचित् । नाद्यः, सर्वत्र तेषां नियोज्यत्वाभावात् । तत्साध्यफलकामो हि तत्र नियुज्यते । फलं च तदुच्यते यदप्राप्तमननुष्ठितसाधनं च । न च सर्वोपासनादिफले देवानां कामः सम्भवति, मध्वाद्युपासनानां देवतापदप्राप्तिफलत्वात्, तस्य च तैः प्राप्तत्वात्, सर्वज्ञत्वेनोपासनासाध्यज्ञानस्यापि नित्यसिद्धत्वात् । अत एव न द्वितीयः । किंच जैमिनिरप्येवं मन्यत इति ।

एवमवान्तरफलस्य परमप्रयोजनस्य च पदादेः प्राप्तत्वेन विधेरसम्भवाज्जैमिनिवचनाच्च देवानामनधिकारे(र इति) इति प्राप्ते तत्प्रतिविधानार्थं सूत्रम् **ॐ भावं तु बादरायणोऽस्ति हीति ।**

## ब्र०सू०— ॥ ॐ भावं तु बादरायणोऽस्ति हि ॐ ॥

**परि०**— अननुष्ठितसाधनं चेति बहुव्रीहिः । अनुष्ठितस्यासिसाधयिषितत्वात् । सिसाधयिषितस्यैव च फलत्वादिति भावः । एतच्च मोक्षस्याफलत्वायोक्तम् । तत्साधनज्ञानस्य देवैः सम्पादितत्वादिति भावः । **अत एवेति** । स्वयोग्यफलस्य वसुत्वादेर्ज्ञानस्य च प्राप्तत्वेन तत्सकलविद्याविशेषेऽप्यधिकारासम्भवादेव क्वचिद्विद्यायामधिकार इति कल्पोऽपि नेत्यर्थः । **एवमिति** । अधिकारो नेति मन्यत इत्यर्थः ॥ छ ॥ **पदादेरिति** । वसुत्वादिपदमवान्तरफलम् आदिपदोपात्तज्ञानं परमफलमिति ज्ञेयम् । तत्प्रतिविधानार्थं = तन्निषेधार्थम् ।





**वं०प०— सर्वत्र** = सर्ववेदोक्तोपासनादौ । **अत एवेति** । फलस्य नित्यसिद्धत्वादेव क्वचित् कस्मिंश्चिद्वेदोक्तोपासनादावप्यनधिकार इत्यर्थः । **अवान्तरेति** । ज्ञानरूपेत्यर्थः ।

**आनन्दः— अधिकाराक्षेपार्थमिति** । अधिकारार्थमिव प्रतीयमानमित्यर्थः । सर्वथाक्षेपार्थत्वे विरोधकथनं विरुद्धमापद्यतेति भावः । विध्यर्थानुष्ठानसाध्यफलकामो हि तत्राधिकारी । न च तत्प्रतिविधिरस्तीत्याह **तान् प्रतीति** । **अत एवेति** । उपासनासाध्यज्ञानस्य नित्यसिद्धत्वादेवेत्यर्थः । **अवान्तरफलस्येति** । प्रकाशवानस्मिन्लोक इत्यादेः । **तत्प्रतिविधानार्थमिति** । तत्प्रतिविधानार्थमिवेत्यर्थः ।

**कं०रा०— देवतेति** । देवतापदप्राप्तिफलकत्वादित्यर्थः । ननु देवैर्देवतापदस्य प्राप्ततया तत्पदप्राप्तिफलार्थं मध्वाद्युपासनास्वधिकाराभावेऽपि तदुपासनासाध्यज्ञानार्थं तत्र तेषामधिकारोऽस्त्वित्यत आह **सर्वज्ञत्वेनेति** । **अत एवेति** । देवानां सर्वज्ञत्वेनोपासनासाध्यज्ञानस्य नित्यसिद्धत्वादेव । क्वचिद्वेदोक्तोपासनादावधिकार इति द्वितीयपक्षोऽपि न सम्भवतीत्यर्थः ॥ **असिद्ध इति** । अन्यार्थमित्यत्रेवासिद्धेऽर्थे विधिरित्यत्राप्युपासाया इत्येतदनुवर्तत इत्यर्थः ।

**शे०वा०—** ननु तत्फलायेत्युत्तरभाष्यमनर्थकम् । न च जैमिनिमतभगवन्मतयोर्विषयभेदोपपादनार्थं तदिति वाच्यम् । तत्प्रतिपादनस्याप्यनर्थकत्वात् । न च तयोर्विरोधाभावोपपादनार्थं तदिति वाच्यम् । तदुपपादनस्य प्रकृते सङ्गत्यप्रतीतेः । न च मध्वादिष्वित्यादिना देवानामधिकारे जैमिनिमतविरोधस्य शङ्कितत्वान्न तद्विरोधपरिहारस्य प्रकृतासङ्गतिरिति वाच्यम् । तथाऽपि तेन शङ्कितविध्यनुपपत्तिमपरिहृत्य, तच्छङ्कितविरोधमात्रपरिहारे निमित्ताभावादित्यतोऽनुपपत्तिद्वयस्य शङ्कितत्वेऽपि तस्य परिहारार्थं प्रवृत्ते 'भावं त्वि'ति सूत्रे विध्यनुपपत्तिपरिहारेण तत्परित्यागेन, भाष्यकारीयाविरोधोपपादनस्योपपन्नत्वादित्याशयेन, सूत्रे प्रसक्तन्यूनताशङ्कापरिहारकतया भाष्यं योजयितुं, विषयप्रदर्शनपूर्वकं सूत्रद्वयमाक्षेपपरतया तावद्योजयति **अत्रेत्यादिना** । देवानां वैदिकोपासनादावनधिकारः किं तेषां विशेषविधिप्रयुक्तः किंवा सामान्यविधिप्रयुक्तः इति विकल्पं मनसि निधायाद्यं दूषयति **तान्प्रतीति** । द्वितीयमाशङ्कते **आत्मानमिति** । **किंवा क्वचिदिति** । मोक्षफलकोपासनादावित्यर्थः । **देवतापदेति** । वस्वादिपदेत्यर्थः । **तस्य चेति** । वस्वादिपदस्य वस्वादिभिः प्राप्तत्वान्न तत्रार्थिता सम्भवतीति भावः । न केवलमस्मिन्पक्षे वस्वादीनां मधुविद्याफले वसुत्वादावधिकाराभावो दोषः, किन्तु विद्यासाध्ये वसुत्वादिसाधने ज्ञानेऽर्थित्वाभावोऽप्यपरो दोषो वस्वादीनां सिद्धज्ञानत्वादित्याह **सर्वज्ञत्वेनेति** । अत्र चशब्दाध्याहारेण नित्यसिद्धत्वाच्चेति योज्यम् । अत एव टीकायां दोषान्तरतया चेदं दूषणमुक्तमिति द्रष्टव्यम् । यद्वा देवतापदस्य प्राप्ततयाऽप्राप्तत्वाभावेनाफलत्वमुपपाद्यानुष्ठितसाधनत्वेनाननुष्ठितसाधनत्वाभावेनाफलत्वमुपपादयति **सर्वज्ञत्वेनेति** । मोक्षफलकोपासनादावधिकार इति द्वितीयं दूषयति **अत एवेति** । देवानां मोक्षार्थित्वेऽपि न तत्साधने विद्यासाध्ये ज्ञानेऽर्थिताऽस्ति । तेषां सार्वज्ञ्येन सर्वविद्योक्तज्ञानित्वात् । न हि स्वर्गार्थिनोऽपि कृतयज्ञस्य पुनर्यज्ञविद्याविचारेऽधिकारोऽस्तीति भावः ।

एवं सूत्रद्वयमधिकाराक्षेपपरतयोपपाद्य तत्परिहारतयोत्तरसूत्रमुत्थापयति **एवमिति** । पदादेरित्यत्रादिपदेन मोक्षपरिग्रहः । अवान्तरफलस्य वस्वादिपदस्य प्राप्तत्वात्परमप्रयोजनस्य च मोक्षस्यार्थतः प्राप्तत्वेनेत्यर्थः । **विधेरिति** । आत्मानमुपासीतेति सामान्यविधेरित्यर्थः । विशेषविधिस्तु स्वरूपेणैव नास्तीति भावः ।

**वा०र०**— स्वयमेवोत्प्रेक्षितस्य केचित्पक्षस्यास्य पक्षस्य च प्रधानप्रमेये साम्यमेव अवान्तर-विशेषाभिप्रायेण पृथगभिधानं प्रकृतासङ्गतिरिति वाच्यमित्यनन्तरं तद्विरोधपरिहाराकरणेऽपि बाधकाभावेन तत्परिहारस्य नावश्यकत्वे वा तत्परिहारस्य भावं त्वित्यादिना सिद्धान्तयता सूत्रकारेणैव कर्तव्यतया भाष्यकारेण तस्याकर्तव्यत्वात् कर्तव्यत्वेऽपि वा तेन शङ्कितेति पाठः स्वरसः । तथापाठाभावे इति वाच्यमित्यनन्तरं उक्तोऽर्थो बहिरेवावगन्तव्यः । **अविरोधोपपादनस्येति** । विरोधपरिहारोपपादनस्येत्यर्थः । **यदप्राप्तमिति** मूलम् । अप्राप्ते वाऽननुष्ठितसाधने वा फलपदव्यवहारात्फलत्वं द्विरूपेण प्रसिद्धमित्यर्थः । एतमर्थं मनसि कृत्वैव यद्वा देवतेति टीकाकृद्वक्ष्यतीति ज्ञेयम् । न केवलमस्मिन्पक्ष इति वाक्ये वसुत्वादावर्थत्वाभाव इति पाठः । अधिकारेति क्वचित्कपाठेऽपि अर्थित्वमेवार्थ इति ज्ञेयम् । दोषान्तरतयैवेदमिति पाठे चशब्दाध्याहारकल्पनात्र पक्षे भवतीत्यपरितोषात् प्रागुक्तानानुष्ठितसाधनत्वोपपादकत्वेन याजयति **यद्वेति** । प्राप्तेरेकविधत्वाभावादाह **अवान्तरेति** ।

**विठ्ठल०**— **ज्योतिषेति** सूत्रार्थः । **सर्वज्ञत्वेनेति** । **अत एवेति** । स्वयोग्यफलस्य ज्ञानस्य च सिद्धत्वादेव क्वचिदधिकार इति द्वितीयोऽपि नेत्यर्थः । **अवान्तरफलस्येति** । भोगादेरित्यर्थः । **पदादे**रित्यादिपदेन मोक्षसाधनज्ञानग्रहणम् ।

**॥ इति एतत्सूत्रोत्थाप्यपूर्वपक्षः (देवानां वेदविद्याधिकारो नास्तीति) ॥**

* * *

**॥ अथ एतत्सूत्रोक्त उत्तरपक्षः (देवानां वेदविद्याधिकारोऽस्त्येवेति) ॥**

**॥ तत्र च जैमिनिभगवन्मतयोर्विरोधपरिहारः ॥**

**॥ तत्राप्यादौ फलान्तरसत्त्वेन, असिद्धार्थत्वेन चेति हेतुद्वयेन सिद्धान्तकथनम् ॥**

**१६ सु०— तत्र यत्पूर्वपक्षिणोदाहृतं जैमिनिवचनं, तस्य परिहारो नास्ति । तत्किं भगवन्मतविरुद्धत्वेनाप्रमाणमेव प्रतिपत्तव्यमिति । मैवम् । भिन्नविषयत्वेन विरोधाभावा-दित्याह तत्फलायेति ।**

**अनु०— तत्फलाय विधिः सिद्धे चोपासाया निराकृतः ।**





**यतो जैमिनिनाऽन्यार्थमसिद्धेऽर्थे विधिस्तथा ॥**

**विद्याधिराजस्य मतमविरोधस्तयोस्ततः ।**

**तत्** इति 'वसूनामेवैको भूत्वा' इत्यादिश्रुतिप्रसिद्धं परामृशति । **सिद्धे** ज्ञाते ब्रह्म-स्वरूपे, विषयसप्तमीयम् । **उपासाया** विधिरिति सम्बन्धः । **अन्यार्थं** फलान्तरार्थम् । **तथा असिद्धेऽर्थे विधिः** उपासाया इत्यत्राप्यनुवर्तते । अत्रेतिशब्दाध्याहारेण **मतम्** इति योज्यम् । **तयोः** मतयोः ।

**परि०— इत्यादिश्रुतीति** । 'स एतदेवामृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती'त्यादिश्रुतिसिद्धमित्यर्थः । **इति योज्यमिति** । विद्याधिराजस्य फलान्तरार्थमसिद्धेऽर्थे विधिरिति मतमिति योज्यमित्यर्थः ।

**वं०प०— उदाहृतं** किञ्च जैमिनिरित्यादिनेत्यर्थः ।

**कं०रा०—** नन्वन्यार्थमुपासाया विधिस्तथाऽसिद्धेऽज्ञातेऽर्थे उपासाया विधिर्विद्याधिराजस्य मतमिति योजना न युक्तेत्याशङ्क्याध्याहारेण योजना कर्तव्येत्याह **अत्रेति** । अन्यार्थमसिद्धेऽर्थे विधिस्तथा विद्याधिराजस्य मतमित्यत्रेतिशब्दाध्याहारेण अन्यार्थमुपासाया विधिस्तथा असिद्धेऽर्थे उपासाया विधिरिति विद्याधिराजस्य मतमिति योजना कार्येत्यर्थः ।

**शे०वा०—** इदानीमुत्तरभाष्यं विरोधपरिहारकतया योजयितुं शङ्कितदोषपरिहाराभावप्रयुक्तं सूत्रे न्यूनत्वमाशङ्कते **तत्रेति** । ननु भगवन्मतविरुद्धत्वेन जैमिनिमतस्याप्रामाण्यान्न तद्विरोध इत्यन्यथासिद्धत्वान्न तत्परिहार इति न न्यूनत्वमित्यतो न मुनिमतस्याप्रामाण्यमङ्गीकर्तुं युक्तमन्यथा भगवन्मतस्यापि तदापत्ते-रित्याशयेनाह **तत्किमिति** । तथा च विरोधापरिहाराद्भावं त्वित्यपूर्णः परिहार इति शेषः । इदानीं सूत्रे प्रसक्तन्यूनत्वपरिहारकतया भाष्यं योजयति **मैवमिति** । **इतिशब्दाध्याहारेणेति** । अन्यथा फलान्तरार्थ-मुपासाया विधिरित्यादेर्भगवन्मतत्वालाभादिति भावः ।

**वा०र०— विषयसप्तमीयमिति** मूलम् । अनेन ज्ञातब्रह्मस्वरूपविषये उपासनाया विधिर्निराकृत इति योजनासूचनेन ज्ञातब्रह्मविषयकोपासनाविधिर्निराकृत इत्युक्तं भवति । ज्ञानं च योग्यतानुसारेण अपूर्णमित्येव सिद्धत्वमभिप्रेतम् । ननु सर्वप्रकारेणेति मूल एवाग्रे व्यक्तम् । अत्र जगद्विषयेऽपि सिद्धज्ञानत्वं योग्यतया

पूरणत्वमुपलक्षणया ग्राह्यम् । तथाऽसिद्धेऽर्थेति मूलम् । अनेनाज्ञातब्रह्मस्वरूपादीनां ब्रह्मस्वरूपादिप्रकाशार्थमिति फलितं भवति । तथा च फलान्तरार्थं ब्रह्मस्वरूपाद्यज्ञानिनां तज्ज्ञानार्थं चोपासनाधिकार इति योजितं भवति ।

**॥ इति फलान्तरसत्त्वेन, असिद्धार्थत्वेन चेति हेतुद्वयेन सिद्धान्तकथनम् ॥**

* * *

**॥ ततश्च तद्धेतुद्वयस्य समर्थनम् ॥**

१७ **सु०**— ननु किं तदन्यत्फलं कथं च सर्वज्ञानामसिद्धोऽर्थः, येन देवानामप्युपासनाविधानोपपत्तिरित्यत आह— **मोक्ष इति।**

**अनु०— मोक्षे फलविशेषोऽस्ति न च सर्वं प्रकाशते ॥**
**सर्वदा तेन देवानामपि युक्ता ह्युपासना ।**

यच्च प्रकाशते, न तत् **सर्वदा**। तेन तदुभयार्थम्। हिशब्दो यस्मादित्यर्थे।

ननु सर्वज्ञानां सर्वं न प्रकाशत इति विप्रतिषिद्धम्, मैवम्, परमेश्वरव्यतिरिक्तानां सर्वज्ञत्वासिद्धेरित्याह **नित्यमिति।**

**नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ॥**
**स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम्।**
**अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा ॥**

**पूर्णम्** अशेषार्थविषयम् । तुशब्दोऽवधारणे, **विष्णोरेवेति** सम्बध्यते ॥ **स्पष्टातिस्पष्टविषयमिति,** निरतिशयस्पष्टमित्यर्थः ।

ननु स्पष्टता नाम ज्ञानस्य विशेषविषयता । सा च पूर्णमित्यनेनैव गता । मैवम् । अपरोक्षत्वादिवत्स्पष्टताया विषयानपेक्षज्ञानधर्मत्वाङ्गीकारात् । तस्य चानुभवसिद्धत्वात् ।





**ब्रह्मणः** हिरण्यगर्भस्य । **अशेषवस्तुगं** परब्रह्मातिरिक्ताशेषवस्तुविषयम्; अत्रा-प्येवेति सम्बध्यते, न तु सर्वार्थविषयत्वाद्युक्तविशेषणोपेतमित्यर्थः ।

अत्र ब्रह्मसंवेदनस्य पृथगुक्तिः कैमुत्यार्थम् । विष्णुसंवेदनोक्तिस्तु सर्वविषयत्वस्य विष्णुज्ञानलक्षणत्वेनेतरेषां तदसम्भावितमिति सूचयितुम् ।

**मितवस्तुगतं** परमेश्वरातिरिक्तकतिपयार्थविषयम् ।

एतेन 'भावमि'ति सूत्रं व्याख्यातं भवति ।

अत्र च 'यावत्सेवा' इत्यादिभाष्योदाहृतं वचनं प्रमाणमिति ।

**परि०**— सर्वदेत्येतद्वाक्यभेदेन योजयति **यच्चेति** । **तेन** इत्यनुवादः । **तदुभयार्थम्** इति व्याख्या । अप्रकाशितगुणविशेषप्रकाशार्थं कदाचित्प्रकाशस्य तिरोहितस्य पुनःप्रकाशार्थमिति वा । मोक्षे सुखविशेषार्थमप्रकाशितप्रकाशार्थमिति वार्थः । **यस्मादित्यर्थ इति** । तेन इत्यतः पूर्ववाक्येन तस्यान्वय इति भावः । **परब्रह्मातिरिक्ताशेषेति** । आलोचने सतीति योज्यम् । सर्वविषयत्व-योग्यताभिप्रायं वा । न चेदं मुक्तब्रह्मपरम् । साधकप्रस्तावात् । **अत्राप्येवेतीति** । अवधारणार्थः तुशब्दो ब्रह्मान्याशेषविषयमेवेति सम्बध्यत इत्यर्थः ।

**वं०प०**— **उभयार्थमिति** । मोक्षे फलविशेषार्थं तस्य सर्वदा प्रकाशार्थं चेत्यर्थः । **सर्वार्थविषयत्वेति** । पूर्णत्वेत्यर्थः । नन्वन्येषामित्युक्त्या ब्रह्मज्ञानस्यापि भगवद्विषयेऽसर्वविषयत्वस्य प्राप्तत्वात् पृथगुक्तिः किमर्थेत्यत आह **अत्रेति** । यदा ब्रह्मज्ञानं भगवद्विषयेऽसर्वविषयकं तदाऽन्यज्ञानमसर्वविषयकमिति किं वक्तव्यं, जगद्विषये-ऽप्यसर्वविषयकत्वादिति कैमुत्यार्थमित्यर्थः ।

**आनन्दः**— नन्वन्येषां क्रमशो ज्ञानमित्यनेनैव ब्रह्मज्ञानस्यापि सङ्ग्रहसम्भवात् पृथक्वचनमनर्थक-मित्यत आह **अत्र ब्रह्मेति** । यदा चतुर्मुखज्ञानमपि नोक्तविशेषणोपेतं तदा किमु वक्तव्यम्, अन्येषां ज्ञानमुक्तविशेषणेनोपेतमितीत्यर्थः । **एतेनेति** । मोक्षो फलविशेषोऽस्तीत्यादिनेत्यर्थः । बादरायणस्तु देवानां ब्रह्मविद्यायां अधिकारभावं मन्यते । अस्ति हि फले ज्ञाने च विशेष इति व्याख्यातमित्यर्थः ।

**कं०रा०**— **तदिति** । मोक्षफलविशेषार्थमसिद्धज्ञानविशेषार्थं चेत्यर्थः । ननु हिरण्यगर्भज्ञानस्यासङ्को-चेनाशेषवस्तुविषयत्वं न सम्भवतीत्यतो व्याचष्टे **अशेषेति** । **एवेतीति** । एवार्थकतुशब्दः सम्बध्यत इत्यर्थः ।

तत्सम्बन्धेन लब्धमर्थमाह **न त्विति** । **ब्रह्मेति** । ब्रह्मणोऽशेषवस्तुगमिति हिरण्यगर्भज्ञानस्य पृथगुक्तिः । यदा हिरण्यगर्भज्ञानमपि परब्रह्मातिरिक्ताशेषवस्तुविषयमेव न तु सर्वविषयम् । तदेतरेषां देवानां ज्ञानं सर्वविषयं न भवतीति किमु वक्तव्यमिति कैमुत्यार्थमित्यर्थः । ननु सर्वज्ञानां देवानां सर्वं न प्रकाशत इत्येतद्विरुद्ध-मित्याशङ्कायां परमेश्वरव्यतिरिक्तानां सर्वज्ञत्वासिद्धिव्युत्पादनायान्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा इत्येतदेव वक्तव्यम् । 'नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनमि'ति विष्णुसंवेदनोक्तिस्तु व्यर्थेत्यत आह **विष्ण्विति** । विष्णुसंवेदनोक्तिस्तु सर्वविषयत्वस्य विष्णुज्ञानलक्षणत्वेनेतरेषां ज्ञानस्य सर्वविषयत्वमसंभावितमिति सूचयितु-मित्यर्थः । **अत्र चेति** । मोक्षे फलविशेषोऽस्तीत्यत्र परमेश्वरव्यतिरिक्तानां सर्वज्ञत्वं नास्तीत्यत्र च 'यावत्सेवा-परेतत्वे तावत्सुखविशेषता । सम्भवाच्च प्रकाशस्य परमेकमृते हरिमि'ति भाष्योदाहृतवचनं प्रमाणमित्यर्थः ।

**श्रीनिधि०— निरतिशयस्पष्टमिति** । मितवस्तुगतमित्यस्य संव्ययामितविषयत्वमिति नार्थः । तत्त्वा-भिमानिनां अनन्तदेहेषु युगपत्स्थितानां तथा तत्तन्नियामकानां अनन्तपदार्थज्ञानस्यावश्यकत्वात् । किन्तु स्वोत्तमज्ञातव्यत्तयपेक्षया स्वज्ञातव्यतीतानां अल्पत्वमित्येवार्थः । अत एवाह **कतिपयार्थविषयमिति** । अन्यथा अल्पसंख्यावदविषयमित्यवक्ष्यत् । पञ्चानन मुखः पञ्चजन हन्तापि पञ्चैव जनान् ररक्ष पञ्चभ्य एकस्मादपि मामवेत् ।

**शे०वा०—** विषयभेदेनाविरोधस्य तत्फलायेत्यनेनैव सिद्धे किं मोक्ष इत्युत्तरेणेत्यतस्तत्रोक्तफलान्तरा-द्यर्थत्वोपपादनार्थं तदिति भावेन तथा योजयति **नन्विति** । ननु न च सर्वं प्रकाशत इत्येतावता असिद्धार्थत्वोप-पादनेन विद्यासाध्यज्ञानेऽर्थित्वादुपासनाधिकारसमर्थनात् सर्वदिति शब्दवैयर्थ्यमित्यतो, नात्र सर्वं सर्वदा न प्रकाशत इति सम्बन्धः, येन सर्वदित्यस्य वैयर्थ्यं, किन्तु सर्वं न प्रकाशते यच्च प्रकाशते न तत्सर्वदिति । ततश्च पदद्वयस्याप्यसिद्धार्थोपपादकत्वान्न वैयर्थ्यमित्याशयेनाह **यच्च प्रकाशत इति** । तेनेत्यादिफलवाक्ये-ऽपेक्षितं पूरयति **तदुभयार्थमिति** । मोक्षे फलविशेषार्थमसिद्धार्थप्रकाशार्थं चेत्यर्थः । तेनेति तच्छब्दस्य यत एवं तेनेति यच्छब्दसापेक्षत्वात् हिशब्दं तदर्थतया व्याचष्टे **हिशब्द इति** । ईश्वरादिज्ञाने तारतम्यप्रतिपादनं भाष्य-कारीयमनर्थकमित्यतो व्याघातपरिहारार्थं तदित्याशयेन व्याघातशङ्कामुत्थापयति **नन्विति** । ब्रह्मणोऽशेष-वस्तुगमिति मितवस्तुगतमिति च विषयवैलक्षण्यप्रयुक्तज्ञानतारतम्यप्रतिपादकोत्तरवाक्यानुसारेण पूर्णमित्य-स्यार्थमाह **पूर्णमशेषार्थमिति** । सुसूक्ष्मैरप्यशेषैश्चेत्यादिवक्ष्यमाणप्रकारेण स्वपरगताशेषविशेषविषयकमित्यर्थः । विष्णोरेव सर्वविषयकं ज्ञानमित्यर्थलाभाय तुशब्दमवधारणपरतया व्याचष्टे **तुशब्द इति** । तावताऽपि विष्णोर्वेदनं पूर्णमेवेत्येवोक्तं स्यात् न तु विष्णोरेव ज्ञानं पूर्णमित्यतो भिन्नक्रमतया तुशब्दसम्बन्धमाह **विष्णोरेवेति सम्बध्यत इति** । ननु स्पष्टत्वस्य विशेषविषयत्वातिरिक्तस्य ज्ञाने दुर्निरूपतया तद्रूपत्वात् स्पष्टातिस्पष्टविशदत्वोक्त्या निरुपचरितसकलविशेषविषयकत्वमेवोक्तं भवति । तच्च पूर्णमित्यनेनैव सिद्धम् । तस्याशेषार्थविषयकतया व्याख्यातत्वात् । तथा च स्पष्टेत्यादिविशेषणमनर्थकमिति शङ्कते **नन्विति** । सा च पूर्णमित्यनेनैव गतेत्युप-लक्षणम् । लक्ष्मीज्ञानादिगृहीते विषये ईश्वरज्ञानस्य साम्यापत्तिश्चेत्यपि द्रष्टव्यम् । **अपरोक्षत्वादिवदिति** ।





अत्रादिपदेन परोक्षत्वादिसङ्ग्रहः । न चैतदप्यसिद्धम् । 'परोक्षत्वापरोक्षत्वे विशेषौ ज्ञानगौ यथा' इत्यादिनोत्तरत्र तस्योपपादयिष्यमाणत्वादिति भावः । विष्णोः पूर्णमित्युक्तस्यैवार्थस्य कथनाद् ब्रह्मणोऽशेषवस्तुगमितत्येतत्पुनरुक्तमित्यतो, नात्र ब्रह्मशब्दो विष्णुपरस्तस्य तत्र मुख्यत्वेऽपि विष्णोः पृथगभिधानात्, किन्तु चतुर्मुखपरः । तथा च चतुर्मुखज्ञानप्रकारप्रदर्शनार्थत्वान्न वैयर्थ्यमित्याह **ब्रह्मण इति** । अन्यत्रालोचने सर्वविषयं 'ब्रह्मा तु सर्वगं पश्येदि'त्यादिनिरवकाशवाक्यानुसारेणाशेषवस्तुगमित्येतद्व्याख्याति **परं ब्रह्मेति** । **अत्रापीति** । ब्रह्मणोऽशेषवस्तुगमेवेति सम्बध्यत इत्यर्थः । तद्व्यवच्छेदं दर्शयति **न त्विति** । आदिपदेन 'नित्यं वृद्धिक्षयापेतमि'त्युक्तनित्याविकारित्वस्य स्पष्टेत्यादिनोक्तनिरतिशयस्पष्टत्वस्य च सङ्ग्रहः । **कैमुत्यार्थमिति** । यदा हिरण्यगर्भज्ञानमपि कतिपयार्थविषयं तदा रुद्रादिज्ञानमल्पार्थविषयमिति किम्, इति सूचयितुं, ब्रह्मणोऽशेषवस्तुगमिति ब्रह्मज्ञानं पृथगुक्तमित्यर्थः । अन्यथाऽन्येषामित्यनेनैव रुद्रादिज्ञानस्येव हिरण्यगर्भज्ञानस्याप्युक्तिसम्भवात्, पृथक् तदभिधानानर्थक्यादिति भावः । ब्रह्मणोऽशेषवस्तुगमन्येषां, क्रमशो ज्ञानं मितवस्तुगमित्येतावतैव देवतानामसर्वज्ञत्वप्रतिपादनेन न तु सर्वं प्रकाशते देवानामित्यत्र प्राप्यव्याघातशङ्कापरिहारात् 'नित्यं वृद्धि' इत्यादिना विष्णुसंवेदनकथनमनर्थकमित्यत आह **विष्णिवति** । अनेन कुत एवं हिरण्यगर्भादिज्ञानानामसर्वविषयत्वमित्यतः सर्वविषयकत्वस्य विष्णुज्ञानमात्रनिष्ठत्वादिति हेतुहेतुमद्भावेन भाष्ययोजना सूचिता भवति । मितवस्तुगतत्वस्य हिरण्यगर्भज्ञानादन्यज्ञानानां भेदोक्तिरित्यतस्तत्तथा व्याचष्टे **मितेति** । **एतेनेति** । मोक्षे फलविशेषोऽस्तीत्यादिनेत्यर्थः । अन्यथा सूत्रार्थकथनरूपत्वाभावात् मोक्षे फलविशेषोऽस्तीत्यादेरभाष्यत्वं स्यादिति भावः । ननु स्यादेतदेवं यदि तत्तद्विद्योक्तानुष्ठानेन तत्रोक्तान्यदपि फलं प्रकाशविशेषश्च भवतीत्येतत्सिद्धं स्यात् । न चैतदस्ति । प्रमाणाभावात् । तस्मान्नैवं सूत्रव्याख्यानं युक्तमित्यत आह **अत्र चेति** ।

**वा०२०— अधिकारसमर्थनादिति** । उपासनाधिकारः सम्भवतीति समर्थने सिद्धेरित्यर्थः । **फलवाक्येऽपेक्षितमिति** । यद्यपि तेनेत्यस्य तदुभयार्थमिति व्याख्यानमित्यपि वक्तुं शक्यं तथापि यस्मादित्यर्थकहिशब्दयोजना तस्मादिति पूरणीयम् । एवेति मत्वा तेनेत्येतद्यथाश्रुतार्थमेवाकृतमिति ज्ञेयम् । ब्रह्मणोऽशेषवस्तुगमिति मितवस्तुगतमिति च विषयवैलक्षण्येति पाठः । क्वचिन्मितवस्तुगतविषयेति पाठः । तत्र मितवस्तुगतं यज्ज्ञानं तस्य यो विषयः अल्पो भगवद्व्यतिरिक्तस्तद्वैलक्षण्यं भगवदतिरिक्तविषये सर्वं तत्प्रयुक्तेति योजना । **वक्ष्यमाणेति** । ज्ञानपादे वक्ष्यमाणेत्यर्थः । न च सर्वैर्विशेषैस्तमित्येतदनुभाष्यमूलानुसारेणाह **गतेत्युपलक्षणमिति** । **उत्तरत्रेति** । ज्ञानपादे पृथगभिधानादिति । तथा च मुख्यार्थे बाधके समर्थान्तरग्रहणे मुख्यामुख्यन्यायविरोधो नेति भावः । **तस्य चेति** मूलम् । विषयानपेक्षज्ञानधर्मरूपस्पष्टत्वं हि सर्वानुभवसिद्धं मध्यमे प्रकाशे यावद्रेखोपरेखाविशिष्टस्यावभासेऽपि महाप्रकाशे तद्वस्तुन एव ज्ञानं स्पष्टमिति सिद्धेत्यर्थः । **इयमिति** । मितवस्तुगतमितीयमित्यर्थः । तत्तथेत्यत्र तदिति सामान्येन परामर्शो वा मितवस्तुगतत्वस्य वा परामर्शः यथा भेदकं स्यात्तथेत्यर्थः । **असर्वज्ञत्वेति** । असर्वज्ञत्वमित्येतत्प्रतिपादकत्वमित्यर्थः । इत्येतदित्युत्तरानुसारात् देवानां यदसर्वज्ञत्वमिति सापेक्षसमासश्च नित्यसापेक्षत्वात् नित्यमिति वाक्यस्येति शेषः ॥

आनन्दाब्धिप्रजातत्रिदशतगुरुश्रीनिवासानुज श्री-
विद्याधीशाख्यरत्नाद्भुतविदमृतगोः केशवाचार्यवर्यात्।
श्रीरुक्मिण्याख्यवाप्यस्य विबुधनरसिंहस्य गुर्वीयसौध-
व्याख्यापाठादिशोधात्मकविवृतिकृतानन्तगोद्विष्टपादः॥

इति श्रीमत्सकलविद्वद्वृन्दशिखामणि श्रीपाण्डुरङ्गकेशवाचार्यवर्यनामक श्रीगुरुराजवर्यविरचित श्रीमन्न्यायसुधाविषमपदवाक्यव्याख्यानरूपशेषवाक्यार्थचन्द्रिकायाः व्याख्यापाठादिशोधात्मकविवृतौ गुरुराजपुत्रपाण्डुरङ्गनरसिंहसूरिविरचितायां वाक्यार्थरत्नमालाभिधायां प्रथमाध्यायायस्य तृतीयः पादः॥

**विठ्ठल०**— 'न च सर्वं प्रकाशते सर्वदि'त्यस्य सर्वदित्येतद्वाक्यभेदेन योजयति **यच्चेति**। अत एवोक्तं सन्न्यायरत्नावल्यां सामस्त्येन भगवत्तत्त्वावबोधे प्रमाणाभावात् अवगतभगवदंशे कदाचिद्विस्मरणसंभवादिति। **अत्राप्येवेति**। तुशब्दस्येवार्थकतया व्याख्या तदभिप्रायेण **एवेति सम्बध्यत** इत्युक्तम्। **कैमुत्यार्थमिति**। सर्वाधिकचतुर्मुखस्यापि यावद्ब्रह्मज्ञानाभावेन सार्वज्ञाभावः। किमन्येषामिति कैमुत्यार्थमित्यर्थः। **एतेनेति**। मोक्षं इत्यादिना अन्यार्थमित्यादिग्रन्थेन चेत्यर्थः। ननु वसूनामेवैको भूत्वेत्यादौ वस्वादिपदानामेवोपासना-फलत्वोक्तेः कथं मोक्षे फलविशेषोऽस्तीत्युच्यते। तत्र मानाभावादित्यतः तत्र मानान्तरमस्तीत्याह **अत्र चेति**।

**॥ इति तद्धेतुद्वयस्य समर्थनम्॥**

* * *

**॥ अथ चान्ते जैमिनिभगवन्मतयोरविरोधस्य समर्थनम्॥**

**१८ सु०— 'ननु जैमिनिभगवन्मतयोरविरोध इति न युक्तम्। जैमिनिर्हि श्रुतफला-द्यतिरिक्तं फलादिकं विद्यानामस्तीति वा मन्यते नास्तीति वा। आद्ये कथमनधिकारं ब्रूयात्। द्वितीये तु कथं न विरोध' इति चेन्न; भगवतः सूत्रकारस्याशेषविशेषज्ञत्वेन विशदं वचनम्, जैमिनिस्तु सामान्यवेदी फलान्तरादिकमजानन्ननिराकुर्वन्यथाश्रुतमङ्गीकृत्यानधि-कारमुक्तवानित्यविरोधोपपत्तेरित्याह— इत्यादय इति।**

**अनु०— इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि।
जैमिन्याद्यास्तु सामान्यवेत्तृत्वात्तत्तथा वदन्॥**





## विद्येशमतमेतस्मान्नैव सद्भिर्विरुध्यते ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य तृतीयः पादः ॥

मोक्ष इत्युक्तपरामर्शार्थ **इतिशब्दः** । **तुशब्दो** **विद्यापतेस्तु** इति योज्यः । **हृदि वर्तन्ते** । तस्मादसौ विशदमवादीदिति शेषः । **तत्** देवतानधिकारादिकम् । **तथेति** सम्मुग्धमित्यर्थः । अस्याप्युपपादनाय नित्यमित्यादिपूर्ववाक्यमनुसन्धेयम् । **विद्येशेति** उपसंहारः । **अयं न्यायो**ऽन्यत्राप्यनुसन्धेय इति ज्ञापयितुम् **इत्यादय** इति **जैमिन्याद्या** इति **सद्भिरिति** **चोक्तमिति** ॥

**परि०**— तद्व्यवच्छेद्यमाह **नन्वित्यादि** । पूर्णपदोक्तासङ्कुचितसर्वार्थविषयकत्व-निरतिशय-स्पष्टत्व-वृद्धिक्षयापेतत्व-विशेषणयुक्तमित्यर्थः । **एतेनेति** । मोक्ष इत्यादिना अन्यार्थमित्यादिग्रन्थेनेति वार्थः । **अत्र चेति** । सुखविशेषादिसत्त्वे चेत्यर्थः । **मोक्ष इत्युक्तेति** । मोक्ष इत्याद्युक्तेरित्यर्थः । हृदीत्यनुवादः । वर्तन्त इति शेषोक्तिः । **अस्यापीति** । इत्यादयो विशेषाः हृदि वर्तन्त इत्येतदुपपादनाय न केवलमितरेषां तादृशज्ञानमसम्भाावितमिति प्रदर्शनार्थमित्यपेरर्थः । न च विष्णुज्ञानस्य तादृशत्वे विद्यापतेः सूत्रकारस्य किमागतमिति शङ्क्यम् । अस्य विष्णववतारत्वस्य तमेव शास्त्रप्रभवमिति ग्रन्थादावेवोक्तत्वादिति भावः । 'अविरोधस्तयोस्तत' इत्युक्तत्वात्पुनरुक्तिरित्यत आह **विद्येशेत्युपसंहार इति** । **अयं न्याय इति** । अत्रेव तत्र तत्र प्रस्तुतभिन्नविषयत्वाद्यविरोधव्युत्पादनन्यायः । **अन्यत्र** । 'चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः', 'सुकृतदुष्कृते एवेति तु बादरिरि'त्यत्र । तथा 'शेषत्वात्पुरुषार्थवादो यथान्येष्वि'ति जैमिनिः, 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनादि'त्यत्र । तथा 'परामर्शं जैमिनिरचोदना चापवदति हि अनुष्ठेयं बादरायणस्साम्यश्रुतेः' इत्यत्र । तथा 'स्वामिनः फलश्रुतेरित्यात्रेयः', 'आर्त्विज्यमित्यौडुलोमिः', 'पक्षेण तृतीयमि'त्यत्र तथा 'कार्यं बादरिरस्य गत्युपपत्तेः', 'परं जैमिनिर्मुख्यत्वात्' 'अप्रतीकालम्बनान्नयतीति बादरायण' इत्यापाततो विरोधस्थले-ऽनुसन्धेय इति ज्ञापयितुमित्यर्थः । तथा व्यक्तमेतद्भाष्य एव तत्र तत्रेति भावः । **इति चोक्तमिति** । आदिपदयुक्ततया, बहुवचनान्ततयोक्तम् । अन्यथा जैमिनेरेवात्र प्रस्तुतत्वादेकवचनान्ततया स एवो-च्येतेति भावः ।

॥ इति श्रीराघवेन्द्रयतिकृतश्रीमन्न्यायसुधाटिप्पण्यां प्रथमाध्यायस्य तृतीयः पादः ॥

**वं०प०— श्रुतेति** । 'वसूनामेवैको भूत्वा' इत्यादावित्यर्थः । **अस्यापीति** । भगवतो विशदवादित्वस्य जैमिन्यादेः सम्मुग्धवादित्वस्य चेत्यर्थः । सद्भिरित्यस्य जैमिनिबादर्यौडुलोम्याश्मरथ्यैरित्यर्थः ।

इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचिते टीकाऽगृहीतसुधावाक्यार्थविवरणे प्रथमाध्यायस्य तृतीयः पादः ॥

**आनन्दः**— ननु जैमिन्यादीनां स मुग्धवचनं विद्येशस्य तु विशदमित्येतत्कुत इत्यत आह **अस्यापीति** । तस्य पूर्णज्ञानत्वादेतेषां अल्पज्ञत्वादित्यर्थः ॥

**कं०रा०— मोक्ष इतीति** । मोक्षे फलविशेषोऽस्तीत्यादिनोक्तं यत्प्रमेयं तत्परामशार्थि इतिशब्द इत्यर्थः । **अस्यापीति** । इत्यादयो विशेषा विद्यापतेर्वेदव्यासस्य हृदि सदा वर्तन्ते । जैमिन्याद्यास्तु सामान्यवेदिन इत्यस्यापि उपपादनाय 'नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनमि'त्यादिपूर्ववाक्यमनुसन्धेयमित्यर्थः । **विद्येशेत्युपसंहारः इति** । तथा च विद्येशमतमेतस्मान्नैव सद्भिर्विद्यत इत्यस्योपसंहाररूपत्वाद्विद्याधिराजस्य मत-मविरोधस्तयोरित्यत्रोक्तस्य भगवन्मतजैमिनिमताविरोधस्य अत्रोक्तावपि न पुनरुक्तिरिति भावः । जैमिन्याद्यास्तु सामान्यवेत्तृत्वादिति मूले वेत्तृशब्दः विद विचारण इत्यस्माद्विचारसाध्यज्ञानलक्षकादुत्पन्नः । तेन विद ज्ञान इत्यस्य सेट्वाद्वेदितृत्वादिति भाव्यमिति चोद्यमानावकाशमिति बोध्यम् ।

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यसर्वतन्त्रस्वतन्त्रश्रीमद्व्यासतीर्थमुनिवर्यपौत्रश्रीपतितीर्थपूज्यपादानां शिष्येण कंभालूररामचन्द्रभिक्षुणा कृतायां श्रीमन्न्यायसुधाव्याख्यायां प्रथमाध्यायस्य तृतीयः पादः ॥

**शे०वा०**— विरोधस्य तत्फलायेत्यादिना परिहृतत्वात्पुनस्तत्परिहारोऽनर्थक इत्यतः पूर्वोक्तपरिहारे प्राप्तानुपपत्तिपरिहारार्थत्वात्तस्य नानर्थक्यमित्याशयेन पूर्वपरिहारेऽनुपपत्तिमुत्थापयति **नन्विति** । इत्यादय इत्यत्रेतिशब्दपराप्रष्टव्यं दर्शयति **मोक्ष इत्युक्तेति** । एतद्वाक्यार्थस्य सूत्रकारस्य विशदवचने हेतुसमर्पकत्व-घटनाय तु तुशब्दस्यावधारणार्थत्वं मनसि निधाय भिन्नक्रमतया सम्बन्धमाह **तुशब्द इति** । अपेक्षिताध्याहारेण साकाङ्क्षतां परिहरति **वर्तन्त इति** । विशदवचनस्यात्राश्रुतत्वात्कथमेतद्वाक्यार्थं प्रति तस्य साध्यतया सम्बन्ध इत्यत आह **तस्मादिति** । **अस्याप्युपपादनायेति** । न केवलं न तु सर्वं प्रकाशत इत्यत्र प्राप्तव्याहतिशङ्कापरिहाराय देवानामसर्वज्ञत्वप्रतिपादकत्वं, किं नाम सूत्रकारस्य सर्वज्ञत्वेन विषदवचनेऽप्यन्येषामसर्वज्ञत्वात् सम्मुग्धवचन-मित्येतदुपपादकत्वमपीत्यपिशब्दार्थः । तथा कुतोऽन्येषामसर्वज्ञत्वं येन सम्मुग्धवचनमित्यत आहेति नित्य-मित्यादिवाक्ययोजना सूचिता भवति । विरोधपरिहारस्येत्यादय इत्यनेनैव कृतत्वाद्विद्येशेत्येतदनर्थकमित्यत उपसंहारत्वान्नानर्थक्यमित्याह **विद्येशेति** । मोक्षे फलविशेषोऽस्तीत्युक्तविशेषस्येतिशब्देन समर्पणादादिपद-मनर्थकम्, **मध्वादिष्वसम्भवादनधिकारं जैमिनिरिति** जैमिनिमतविरोधस्यैव प्रस्तुततया जैमिनिमात्रग्रहणे कर्तव्ये जैमिन्याद्या इत्यत्रादिपदमनर्थकम्, उपसंहारेऽपि जैमिनिना भगवन्मतं न विरुध्यत इत्येव वक्तव्यत्वात्सतेत्येक-





वचनेनैव पूर्तेर्बहुवचनमनर्थकमित्यतोऽत्रोक्तन्यायस्य **'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । अवस्थितेरिति काशकृत्स्नः । ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः । एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः'** इत्याद्यधिकरणेष्वनुसन्धेयत्वसूचनार्थं तदिति भावेनाह **अयमिति** ।

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात् ।
अस्त्वेषा भक्तियुक्ता श्रीविद्याधीशपादयोः सेवा ॥

इति श्रीमत्पदवाक्यप्रमाणविदामग्रेसराणां श्रीमत्सकलविद्वच्चक्रचूडामणीनां श्रीमद्विद्याधीशतीर्थपादानां निजशिष्यस्य केशवस्य कृतौ श्रीमद्गुरुराजोपदिष्टमार्गानुवर्तिन्यां श्रीमन्न्यायसुधाविषमपदवाक्यार्थविवृतौ शेषवाक्यार्थचन्द्रिकायां प्रथमाध्यायस्य तृतीयः पादः ॥

**विठ्ठल०— अस्याप्युपपादनायेति** । न केवलं परमेश्वरातिरिक्तानां सार्वज्ञासंभवोपपादनाय किन्तु 'इत्यादयो विशेषा' हृदि वर्तन्ते इत्यस्याप्युपपादनान्नित्यं वृद्धिक्षयोपेतमित्यादिपूर्ववाक्यमनुसन्धेयमित्यर्थः । **अन्यत्रेति** । मुनिमतभगवन्मतानां आपाततो विरोधवत्प्रतीयमानस्थल इत्यर्थः । **इति चोक्तमिति** । आदिपदयुक्ततया बहुवचनान्ततया चोक्तम् । अन्यथा जैमिनेरेवात्र प्रस्तुतत्वेनादिपदं विहायेकवचनान्ततयोच्येतेति भावः ।

इति श्रीमन्न्यायसुधागूढवाक्यार्थविवृतौ पर्याप्तः प्रथमेऽध्याये तृतीयश्चरणः शुभः ॥
प्रथमाध्यायस्य तृतीयः पादः ॥

**॥ इति जैमिनिभगवन्मतयोरविरोधस्य समर्थनम् ॥**
**॥ इति एतत्सूत्रोक्त उत्तरपक्षः (देवानां वेदविद्याधिकारोऽस्त्येवेति) ॥**

## ॥ इति देवताधिकरणम् ॥

## ॥ १-३-८ ॥



॥ अथ पादान्त्यमङ्गलाचरणम् ॥

१९ सु०—

इति श्रीमत्पूर्णप्रमतिभगवत्पादसुकृते-
रनुव्याख्यानस्य प्रगुणजयतीर्थाख्ययतिना ।
कृतायां टीकायां विषमपदवाक्यार्थविवृतौ
तृतीयः पादोऽयं प्रथमविषये पर्यवसितः ॥

इति श्रीमन्न्यायसुधायां प्रथमाध्यायस्य तृतीयः पादः ॥
॥ १-३ ॥

* * *

इति
**श्रीमद्बादरायणविरचितानां** वेदार्थनिर्णायकानां श्रीमद्ब्रह्मसूत्राणां
**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य** द्वितीयव्याख्यानस्य **श्रीमदनुव्याख्यानस्य**
**श्रीज्जयतीर्थविरचितायां** विषमपदवाक्यार्थविवृतौ टीकायां **श्रीमन्न्यायसुधायां**
**परिमळाद्युपेतायां**
**प्रथमाध्याये प्रथमपादः** संपूर्णः ॥

अनेन कर्मणा एतद्ग्रन्थप्रतिपाद्यः
समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः
प्रीयताम् । प्रीतो भवतु ॥

**श्रीकृष्णार्पणमस्तु ॥**

* * *

कायेन वाचा मनसेन्द्रियैर्वा बुध्याऽत्मना वाऽनुसृतःस्वभावम् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

* * *



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## प्रथमाध्यायस्य चतुर्थः पादः

## ॥ अथ आनुमानिकाधिकरणम् ॥

## ॥ १-४-१ ॥

॥ श्री गुरुभ्यो नमः ॥ हरिः ॐ ॥

**॥ अथ पादप्रतिपाद्यभेदविवेकस्य अत्रानुक्तेः कारणम् ॥**

**१ सु०— अन्यत्रैवप्रसिद्धशब्दसमन्वयप्रतिपादनं पादार्थ इति भाष्यात् परिशेषाद्वा सिद्धम् । अन्यत्रप्रसिद्धेभ्योऽन्यत्रैवप्रसिद्धानां विवेकश्च भाष्य एवोपपादित इति नेहोच्यते ॥**

**परि०— भाष्यादिति**। 'श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानामि'त्यादिभाष्यादित्यर्थः। **उपपादित इति** । श्रुतिलिङ्गादिभिरित्युक्त्या उपपादित इत्यर्थः । तथा च तट्टीकायां बलवदिति विशेषणदानेन विवृतोऽयं विवेक इति न न्यूनताऽऽशङ्केति भावः ।

**यादु०— अन्यत्रप्रसिद्धेभ्य इति** । प्रथमपादे समन्वितानां लोकत एवान्यत्र प्रसिद्धिः । एतत्पादीयानां च श्रुतिलिङ्गादिभिः सेति विवेक इत्यर्थः ।

**श्रीनिधि०— अन्यत्रप्रसिद्धेभ्योऽन्यत्रैवप्रसिद्धानामिति** । लोकतो अन्यत्रैव प्रसिद्धाः, अन्यत्रप्रसिद्धाः, बलवच्छ्रुत्यादिभिरन्यत्रप्रसिद्धा अन्यत्रैवप्रसिद्धा इति विवेक इत्यर्थः ।





**शे०वा०—**

यद्विद्याधीशगुरोः शुश्रूषाऽन्या न रोचते तस्मात्।
अस्त्वेषा भक्तियुता श्रीविद्याधीशपादयोः सेवा ॥ १ ॥

एकवाक्यताऽऽदिसिद्धयेऽवश्यमभिधातव्यस्य पादप्रतिपाद्यस्य पादान्तर इवात्रानभिधानात्प्रसक्तामनुभाष्यकाराणां न्यूनतां परिहरति **अन्यत्रैवेति**। **भाष्यादिति**। 'श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामि'त्याद्येतत्पादीयभाष्यादित्यर्थः। ननु भाष्यादेतत्पादार्थसिद्ध्याऽत्र तदनभिधाने पादान्तरेऽपि भाष्यात्तत्सिद्धेरविशेषात् तत्रापि पादप्रतिपाद्यं न वक्तव्यं स्यात्। यदि च प्रस्थानभेदात् भाष्यात्सिद्धस्यावश्यवक्तव्यत्वात्तत्र तदभिधानमिति मन्यसे, तदेतदत्रापि तुल्यमित्यरुचेराह **परिशेषाद्वेति**। समन्वेतव्यतया प्रसक्तेष्वन्यत्रप्रसिद्धादिषु तत्र तत्र तेषां निरूपणेनैतेषामेवावशिष्टत्वादित्यर्थः। ननु व्यर्थ एवायं पादः। न चान्यत्रैवप्रसिद्धशब्दसमन्वयार्थत्वात्तत्सार्थक्यम्। इन्द्रादिशब्दानामन्यत्रैवप्रसिद्धानामपि विष्णौ समन्वयस्य प्रथमपाद एव सिद्धत्वात्। न च तेषामन्यत्रैवप्रसिद्धत्वाभावः। तथा सति तृतीयपादवैयर्थ्यापातात्। अन्यत्रैवान्यत्रापीत्यतः प्रकारान्तराभावादित्यतः 'श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धानामि'ति भाष्ये लोकतोऽन्यत्रैवप्रसिद्धा अन्यत्रप्रसिद्धाः, श्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धेभ्योऽन्यत्रैवप्रसिद्धा, इत्यन्यत्रप्रसिद्धेभ्योऽन्यत्रैवप्रसिद्धानां भेदस्योक्तत्वान्नानुपपत्तिरित्याह **अन्यत्रेति**।

नन्वेतदप्ययुक्तम्। अन्यत्रप्रसिद्धत्वेनाभिमतस्यानन्दमयनाम्नोऽन्यस्मिन्नर्थविशेषे, सर्वगतत्वान्तर्यामित्वादिलिङ्गात्मकशब्दजातस्याप्यन्यत्रादित्यादौ, इन्द्रादिशब्दानामिन्द्रादाविव, लोकतोऽप्रसिद्ध्याऽन्यत्रप्रसिद्धत्वाभावापातात्। प्रत्युतादित्यादिश्रुत्यादिना सर्वगतत्वादेरन्यत्र प्रसिद्धेरुक्तत्वादवरत्वादिलिङ्गेनान्यत्रप्रसिद्धाव्यक्तादिशब्दानामिवान्यत्रैवप्रसिद्धता स्यात्। यथा च सर्वगतत्वादेरन्यत्रप्रसिद्धिसाधकाऽऽदित्यादिश्रुतिरन्तर्यामित्वादेरन्यत्रप्रसिद्धिसाधकशरीरित्वादिलिङ्गं च लोकतोऽन्यत्रप्रसिद्धम्। तथाऽव्यक्तादिशब्दस्यान्यत्रप्रसिद्धिसाधकमवरत्वादिलिङ्गमपि लोकतोऽन्यत्रप्रसिद्धमेव। किं चैवमन्यत्रैवप्रसिद्धाव्यक्तादिशब्देष्वपि लोकतोऽन्यत्रप्रसिद्धेः सत्त्वात् अन्यत्रप्रसिद्धेन्द्राकाशादिशब्देषु श्रुत्यादिनाऽप्यन्यत्रप्रसिद्धेः सत्त्वात्साङ्कर्यं स्यादिति चेन्न। प्रबलश्रुतिलिङ्गादिभिरन्यत्रैवप्रसिद्धा अन्यत्रैवप्रसिद्धाः, श्रुत्यादितो लोकतो वाऽन्यत्रैवप्रसिद्धास्त्वन्यत्रप्रसिद्धा, इति विवेकस्य विवक्षिततत्वात्। श्रुत्यादेः प्राबल्यं च यद्यप्यापाततो ब्रह्मण्यसम्भवमात्रं न सम्भवति। अव्यक्तादिशब्दानामन्यत्र प्रसिद्धिसाधकावरत्वादीनामिव गुहाप्रविष्टत्वादेरन्यत्रप्रसिद्धिसाधकद्वित्वादीनामप्येकस्मिन् ब्रह्मण्यसम्भवेन बलवच्छ्रुतिलिङ्गादिभिरन्यत्रप्रसिद्धतया अन्यत्रैवप्रसिद्धताऽऽपातात्। नापि सर्वथा ब्रह्मण्यसम्भवः। सिद्धान्तानुदयाऽऽपातात्। तथापि, प्रवृत्तिनिमित्तस्य तदधीनत्वादिना ब्रह्मणि शब्दस्य मुख्यत्वेऽपि तस्य शब्दस्य तद्युक्तवाक्यस्य वाऽपरममुख्यवृत्त्याऽन्यपरत्वं विनाऽनुपपद्यमानत्वमेव श्रुत्यादेर्बलवत्त्वं सम्भवति। न हि गुहां प्रविष्टावित्यादिषु द्विवचनं तद्युक्तवाक्यं वाऽपरममुख्यवृत्त्याप्यन्यपरम्। अन्यत्रैवप्रसिद्धेषु तु 'अव्यक्तात्पुरुषः परः', 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादिष्वव्यक्तादिशब्दस्तद्युक्तवाक्यं वाऽपरममुख्यवृत्त्याप्यन्यपरमेव। अन्यथा देवतातारतम्यकर्मादि न सिद्ध्येत्। वाक्यान्तरस्याप्येतत्तुल्यत्वात्। अत एव 'कामादितरत्र तत्र





चायतनादिभ्यः' इत्यधिकरणेऽपरममुख्यवृत्त्या श्रीतत्त्वपरत्वेनोदाहृत 'सैषा प्रकृतिरविकृतिरि'ति वाक्यमेव प्रकृत्यधिकरणे टीकायामुदाहृतमिति द्रष्टव्यम् । अथवा ब्रह्मपरत्वे बहुविप्लवापत्तिरूपतर्कानुगृहीतत्वं बलवत्त्वं बहुविप्लवापत्तिश्चैतत्पादीयाधिकरणीयेषु भाष्यटीकोक्तैवानुसन्धेयेति सङ्क्षेपः । विस्तरस्तु तात्पर्यचन्द्रिकायां द्रष्टव्यः ।

**वा०र०— इत्याद्येतत्पादीयेति** । इत्यादिकं यदेतत्पादीयं भाष्यं तस्मादित्यर्थः । अनेन पादार्थ इति भाष्यादित्यस्य पादार्थ इत्येतत्प्रमेयं भाष्यासिद्धमिति योजना सूचिता भवति । तत्र तत्र तेषां तेषामिति पाठः स्वरसः । तत्र तत्र प्रथमादिपादे तेषां तेषामन्यत्रप्रसिद्धादीनां समन्वयनिरूपणेनेत्यर्थः । आनन्दमयाधिकरण-चन्द्रिकानुसारेण भाष्योक्तं पादभेदं समर्थयितुमाक्षिपति **नन्वेतदप्युक्तमित्यादिना तात्पर्यचन्द्रिकायां द्रष्टव्य इत्यन्तेन** । तत्र श्रुत्यादेः प्राबल्यं चेत्येतत्पर्यन्तग्रन्थः आनन्दमयाधिकरणटीकाव्याख्यावसरे व्याख्यातः । उत्तरग्रन्थस्तु चन्द्रिकाटीकानुसारेण व्याकर्तव्योऽस्ति । तृतीयपादीयास्मदीयविचारोऽप्यत्र ज्ञेयः ।

**स०व्र०— अन्यत्रप्रसिद्धेभ्य इति** । लोकतोऽन्यत्रैवप्रसिद्धानां समन्वयः प्रथमपादे, अत्र श्रुतिलिङ्गा-दिभिरिति विवेको भाष्ये स्पष्ट इत्यर्थः ।

**विठ्ठल०— मूले पादप्रतिपाद्यानुक्तेर्निमित्तमाह अन्यत्रेति** । लोकतोऽन्यत्रप्रसिद्धाः प्रथमद्वितीयपादीयाः एतत्पादीयास्तु श्रुत्यादिभिरन्यत्रप्रसिद्धा इति विवेक इत्यर्थः ।

**चषकः—**

श्रीनिवासार्यहृत्पद्ममन्दिरो हयकन्धरः ।
सुनन्दतात्सेवया मे भक्त्यालंकृतयाऽनया ॥ १ ॥

पादान्तरेषु तत्तत्पूर्वोत्तरपादभेदतदेकवाक्यतोभयोपरक्तावसित्युत्पादाय तत्तत्प्रतिपाद्यं यथा भाष्यकृदभा-षिष्ट, तद्वत्प्रकृतेऽपि भाषणीयतया तदभाषणनियन्त्रितां न्यूनतां प्रतिविधत्ते **अन्यत्रैवेति** । **भाष्यात्** श्रुति-लिङ्गादिभिरन्यत्रैवप्रसिद्धानामित्याद्यानुपूर्वीकैतत्पादीयभाष्यात् । अथ भाष्ये भाषणेनैव तदधिगमादत्र तदनभिहितौ तुल्यदिशा पादान्तरेष्वपि तदनभिधानप्रसङ्गः । प्रस्थानभेदात्तदभिधानावश्यम्भावोपपादने तु प्रकृते तथाभावो-ऽवर्जनीय इत्यरुचेराह **परिशेषाद्वेति** । समन्वेतव्यतया प्रसक्तान्यत्रप्रसिद्धादिप्रतिषेधप्रतिसन्धानपूर्वकं परिशिष्य-माणप्रतिसंहितेरित्यर्थः । **अन्यत्रप्रसिद्धेभ्य इति** । द्वितीयादौ समन्वितानां कोशादिव्युत्पादितान्यत्रिकप्रसिद्धि-रेतत्समन्वेतव्यानां च लिङ्गादिव्युत्पादिता सेति विवेक इत्यर्थः । प्रपञ्चनं तु तात्पर्यचन्द्रिकातोऽवसेयम् ।

**॥ इति पादप्रतिपाद्यभेदविवेकस्य अत्रानुक्तेः कारणम् ॥**

* * *





॥ अथ 'ॐ तदधीनत्वादर्थवत् ॐ' इति सूत्रव्याख्यानम् ॥

॥ तत्रादौ एतत्सूत्रपरिहार्यशङ्का, तन्निरासश्च ॥

॥ तत्राप्यादौ 'महतः परमव्यक्तं' इत्यत्रोक्तमव्यक्तं तदुपलक्षितं दुःखिबद्धावरादिशब्दवाच्यं च ब्रह्मैव तदधीनत्वात् ॥

॥ तत्रापि चादौ तद्धितान्तशब्देषु तदस्यास्तीति स्वाम्यसम्बन्धे दुःखित्वादिकं ब्रह्मणो भवति ॥

२ सु०—

**ब्र०सू०— ॐ आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॐ ॥**

अत्र 'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' इति वाक्यमुदाहृत्य, अव्यक्तशब्दं परं ब्रह्मैवेत्युपपादितम् । तत्र यदुक्तं पूर्वपक्षिणा 'अव्यक्तं चेत्परं ब्रह्म तदा तस्य पुरुषा(द)वरत्वं प्राप्नोति । न च तद्युक्तम्, सकलश्रुत्यादिविरोधात्' इति, तत्परिहारार्थं सूत्रम् **तदधीनत्वादर्थवदिति** ॥

**ब्र०सू०— ॥ ॐ तदधीनत्वादर्थवत् ॐ ॥**

तस्यार्थं विवृणोति **दुःखीति** ।

**अनु०— दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ॥ शब्दा ब्रह्मणि वर्तन्ते**

अव्यक्तग्रहणमुपलक्षणम् । यत्र वाक्ये सर्वेश्वरत्वविरोधि दुःखित्वादिकं प्रतीयते 'जीवा एव तु दुःखिनः', 'योनिमन्ये प्रपद्यन्ते' इत्यादौ, तस्य सर्वस्यापि समन्वयोऽत्र प्रतिपाद्यत इत्यतो दुःख्यादिग्रहणम् ॥ नाव्यक्तादिशब्दानां ब्रह्मपरत्वेऽप्यवरत्वादिप्राप्त्या सर्वमानविरोधोऽस्ति; यतः स्वस्मिन्नवरत्वाद्यभावेऽपि तद्वतां प्रधानादीनां ब्रह्माधीनत्वेन हेतुना दुःखी, बद्धः, अवरः, इत्याद्या अपि शब्दा ब्रह्मणि वर्तन्त इत्यङ्गीकृतम् ।



**एतदुक्तं भवति । दुःख्यादिशब्दबलादेव हि दुःखित्वादिप्राप्तिः, ततश्च प्रमाणविरोधो वाच्यः । न च दुःख्यादिशब्दो नियमेन दुःखादिसमवायस्य वाचकः, किन्तु तदस्यास्तीति तत्सम्बन्धमात्रस्य । सम्बन्धश्च समवाय इव स्वाम्यमपि भवति । 'तत्र निरनिष्टो निरवद्यः', 'नामानि सर्वाणि यमाविशन्ती'ति निरवकाशश्रुतिद्वयान्यथाऽनुपपत्त्या दुःखादिनियन्तृत्वेन दुःख्यादिशब्दप्रवृत्तिरित्यङ्गीकारे काऽनुपपत्तिरिति ।**

**परि०— अव्यक्तशब्दमिति** । अव्यक्तमितिशब्दो यस्य तदिति बहुव्रीहिः । **सकलश्रुत्यादीति** । सर्वश्रुतिश्रौतस्मृतियुक्तीनामितरासाधारणनिरतिशयसद्धर्मपुरस्कारेणैव ईश्वरपरत्वस्य, 'सर्वे वेदा युक्तयः सुप्रमाणा' इत्यादिप्रमाणसिद्धत्वादिति भावः । तत्परिहारार्थम् = अवरत्वपरिहारेण तादृशशब्दार्थत्वं हरेर्व्युत्पादयितुमित्यर्थः । साध्यमध्याहृत्य तत्र हेतुत्वेन मूलं योजयति **नाव्यक्तादीत्यादिना** । तुशब्दो अप्यर्थ इति मत्वा तस्य स्वस्मिन्नवरत्वाद्यभावेऽपीत्येकमर्थमुक्त्वा अन्यमर्थमाह **इत्याद्या अपीति** । न केवलं गुणवाचकाऽनन्दमयादिशब्दा इत्यर्थः । एवंकल्पनं निर्बीजमित्यत आह **एतदुक्तमिति** ।

**गु०दी०— स्वाम्यमपि भवति** इत्यत्र स्वाम्यं स्वस्वाभिभावः ।

**यादु०— पुरुषादवरत्वमिति** । अव्यक्तादिति पञ्चम्युक्तेन परत्वावधित्वेनार्थात्प्राप्नोतीत्यर्थः । **अव्यक्तग्रहणमिति** । आद्यसूत्रे आनुमानिकमित्यनेनेति शेषः । 'योनिमन्य' इति वाक्यं योनिप्राप्तिप्रतिपादनद्वारा बद्धत्वप्रतिपादकम् । इदमुपलक्षणम् । 'कार्यकारणबद्धौ तौ', 'सोऽवरः' इत्यादिकं साक्षादेव बद्धत्वावरत्वादिप्रतिपादकमपि ग्राह्यम् । अन्यथा कृदन्तेषु बद्धादिषु रूढेषु चावरादिशब्देषु कथमित्यग्रेतनफक्किकानुपपत्तेरित्यवगन्तव्यम् ।

**वं०प०— अव्यक्तग्रहणं** भाष्येऽव्यक्तग्रहणं दुःख्यादिशब्दानामप्युपलक्षणार्थमित्यर्थः । योनिमित्यादौ बद्धत्वमुच्यत इति ध्येयम् । ननूभयोरपि शब्दार्थत्वे स्वाम्यस्यैव ग्रहणे को हेतुरित्यत आह **तत्र चेत्यादि** । भगवतो दुःख्यादिशब्दवाच्यत्वे दुःखवत्त्वप्राप्त्या 'निरनिष्ट' इति निरवकाशश्रुतिविरोधः तदर्थं तद्वाच्यताऽनङ्गीकारे, नामानीति निरवकाशश्रुतिविरोध इति श्रुतिद्वयान्यथाऽनुपपत्त्या, अस्ति दुःख्यादिशब्दवाच्यत्वं, दुःखवत्त्वप्रसङ्गस्तु स्वाम्यमादायैव परिहरणीय इति ज्ञायत इति भावः ।

**आनन्दः—** ननु पूर्वत्र चात्रापि पादार्थः कुतो न कथ्यत इत्यत आह **अन्यत्रैवेति** । न चैवं तर्हि पूर्वत्रापि न वक्तव्यः । भाष्यादेव तदवगमसम्भवादिति वाच्यम् । तद्विवरणार्थत्वादस्य ग्रन्थस्य यस्य तेन स्पष्टप्रतीतिः तस्याकथनम् । यस्य तु तस्य कथनमिति भावः । भाष्यानुसन्धानमप्यत्रावश्यकमिति प्रदर्शनाय च अकथनमिति ध्येयम् ।

**श्रीनिधि०— अव्यक्तग्रहणमुपलक्षणमिति** । आनुमानिकमिति सूत्रपदेनाव्यक्तग्रहणमुपलक्षणतयेति भावः ।

**शे०वा०—** 'तदधीनत्वादर्थवदि'ति सूत्रार्थविवरणार्थत्वान्न 'दुःखी'त्याद्युत्तरभाष्यमनर्थकमित्यभिप्रेत्य सूत्रस्य वैयर्थ्यशङ्कां तत्प्रयोजनदर्शनेन परिहर्तुं तत्सुबोधत्वाय पूर्वसूत्रमुपन्यस्य, विषयवाक्यप्रदर्शनपूर्वकं पूर्वसूत्रप्रमेयं तावदनुवदति **आनुमानिकमपीति** ॥ ॐ **आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** ॐ ॥ **उपपादितमिति** । भाष्य इति शेषः । इदानीं सूत्रवैयर्थ्यशङ्कां परिहरति **तत्रेत्यादिना** । **पुरुषादवरत्वमिति** । पुरुषगतपरत्वं प्रति पञ्चम्या अवधित्वस्य बोधितत्वात् तस्य चावरत्वाविनाभूतत्वात् अव्यक्तादिति पञ्चम्या अवधित्वोक्त्याऽवरत्वप्राप्तिरिति भावः । **सकलश्रुत्यादीति** । 'निरनिष्टो निरवद्य' इत्यादिश्रुत्यादीत्यर्थः । तेन विष्णोर्दोषात्यस्पृष्टिनियमप्रतिपादनादिति भावः ॥ ॐ **तदधीनत्वादर्थवत्** ॐ ॥

ननु चानुमानिकमिति सूत्रेऽव्यक्तस्यैव सूत्रकृता प्रतिज्ञातत्वाद्भाष्यकृता 'अव्यक्तशब्दः' इत्येव व्याख्यातव्यम् । दुःखिबद्धावराद्या इति कथं व्याख्यातम् । तथा सति व्याख्यानव्याख्येययोर्विसंवादप्रसङ्ग इत्यतः स्यादयं सूत्रभाष्ययोर्विसंवादः । यदि सौत्रोऽव्यक्तशब्दः स्वमात्रग्राहकः स्यात् । न चैवम् । तथा सति सूत्रत्वव्याघातप्रसङ्गात् । किं तु 'उपलक्षणत्वं शब्दानाम्' इत्युक्तरीत्या शब्दान्तरोपलक्षणमतो न विसंवाद इत्याह **अव्यक्तग्रहणमिति** । ननु नाव्यक्तशब्दस्य शब्दान्तरोपलक्षकत्वं सम्भवति । तथा सत्यव्यक्तशब्देन दुःख्यादिशब्दानामिव सर्वशब्दानामुपलक्षयितुं शक्यत्वात् तेनोत्तराधिकरणानारम्भप्रसङ्गादित्यतः किं समानन्यायशब्दान्तरविषयाधिकरणानारम्भप्रसङ्गो वा बाधकः, किं वा न्यायान्तरविषयशब्दान्तरगोचराधिकरणानारम्भप्रसङ्गः । नाद्यः । इष्टत्वात् । नान्त्यः । वैषम्यात् । दुःख्यादिशब्दानां समानन्यायतासम्बन्धेनोपलक्षणया ग्रहणसम्भवेऽपि तदितरेषामुपलक्षणायां नियामकसम्बन्धाभावात् । शब्दत्वेन सन्दिग्धशब्दत्वेन वोपलक्षणायाः प्रागेव दूषितत्वादिति भावेन, अव्यक्तशब्देन दुःख्यादिशब्दोपलक्षणानियामकं समानन्यायतासम्बन्धमाह **यत्र वाक्य इति** । **इत्यत इति** । इत्यभिप्रायेणेत्यर्थः । **स्वस्मिन्निति** । ब्रह्मणीत्यर्थः । 'दुःखिबद्धावराद्यास्त्वि'ति मूले तुशब्दोऽपिशब्दार्थ इत्याशयेनाह **इत्याद्या अपीति** । ननु दुःख्यादिशब्देन दुःखादिसमवायस्य प्रतीतेः कथं दुःखादिनियन्तृतया दुःख्यादिशब्दप्रवृत्तिरङ्गीकर्तुं शक्यत इत्यतोऽभिप्रायमाह **एतदुक्तं भवतीति** । अस्तु दुःख्यादिशब्दस्य दुःखादिसम्बन्धमात्रवाचकत्वं, तथाऽपि कुतः समवायस्यैव परित्याग इत्यत आह **तत्रेति** ।

**वा०र०— पूर्वसूत्रमुपन्यस्येति** । सूत्रार्थविचाराभावेन नेदमधिकरणप्रारम्भाय सूत्रोदाहरणमपि तु विषयोपस्थापनायेति पूर्वमेव वर्णितमस्माभिः । किं समानन्यायशब्दान्तरविषयाधिकरणानारम्भप्रसङ्गः । किं वेति पाठः सुगम एव । क्वचित्प्रसङ्गो बाधक इति पाठस्तत्र वस्तुगत्या आपाद्यमानस्य बाधकत्वाभिप्रायेण तथोक्तं तत् प्राक् बाधकत्वेन प्रसक्तत्वात् । अत एव नाद्यः इष्टत्वादित्यस्य सुगमपाठे इष्टापादनत्वार्थतया प्रतीतिः स्फुटैव । बाधकपदघटितपाठे तु तादृशप्रसङ्गस्येष्टतया बाधकत्वाभावादित्यर्थोऽवधेयः । **प्रागेवेति** । आनन्द-





मयनय एवेत्यर्थः । इत्याशङ्कापरिहारायेत्यर्थप्रतीतिवारणायेत्यत इत्यनूद्य तदर्थमाह **इत्यत इति** । **समवायस्यैवेति** । सम्बन्धस्यान्तरस्याङ्गीकृतत्वादवधारणं मूलटीकयोः समवायव्यवहारोऽन्यरीत्येति न दोषः ।

**स०व्र०— अव्यक्तशब्दमिति** । अव्यक्तमितिशब्दो यस्येति विग्रहः । **अव्यक्तं चेदिति** । पुरुषगतपरत्वं प्रति पञ्चम्या अवधित्वस्य बोधितत्वेन, व्याप्तत्वात्, अवधित्वोक्त्या अवरत्वं प्राप्नोतीति भावः । **अव्यक्तग्रहणमिति** । सूत्र इति शेषः । **दुःख्यादिग्रहणमिति** । अनुव्याख्यान इति शेषः ॥

**विट्ठल०— अव्यक्तशब्द**मित्यत्र बहुव्रीह्या अव्यक्तशब्दवाच्यमित्यर्थः । **अव्यक्तग्रहणमिति** । आनुमानिकमित्युक्तमव्यक्तग्रहणमित्यर्थः । साध्यमध्याहृत्य तत्र हेतुतया मूलं योजयति **नाव्यक्तादीति** । तुशब्दोऽप्यर्थ इत्यभिप्रेत्योक्तं इत्याद्या अपि शब्दा इति अनौचित्यद्योतनं वा आनन्दमयादिशब्दसमुच्चयो वापिशब्दार्थः । दुःख्यादिशब्दानां दुःखादिसमवायिवाचित्वाद्बद्धादिशब्दानां बन्धकर्मवाचित्वादवरादिशब्दानां चावरत्वाध्याहारवाचित्वात् कथमेषां शब्दानां भगवत्परत्वं न च दुःखस्वाम्यादिकमपि तदर्थ इति वाच्यम् । तत्र नानाभावादित्यत आह **एतदुक्तं भवतीति** ।

**चषकः— अव्यक्तशब्दमिति** । बहुव्रीहिणा सामानाधिकरण्यमुपपादनीयम् । **पुरुषावरत्वमिति** । अव्यक्तपदप्रकृतिकपञ्चमीप्रत्यायितपरत्वनिरूपितावधित्वानुपपत्तिप्रतिसन्धानेनावरत्वाविनाभूततल्लिङ्गकपरामर्शेन वा समुत्पादितधीगोचरावरत्वमित्यर्थः । **योनिमन्य इति** । तत्प्राप्तिप्रतिपादनमुखेन बद्धत्वं प्रतिपादयतीति भावः । कृदन्तेषु बद्धादिशब्देषु रूढेषु चावरादिशब्देष्वित्युत्तरग्रन्थानुरोधेन कार्यकारणबद्धौ तौ 'सोऽवर' इत्यादिकमप्युदाहार्यम् । तत्सम्बन्धमात्रस्य निरूपितत्वप्रत्यासत्त्या प्रकृत्यर्थभूतदुःखादिविशेषितसम्बन्धत्वरूपसामान्यधर्मावच्छिन्नस्य आश्रयत्वादिरूपसमवायत्वात्मकविशेषधर्मावच्छिन्ने स्वामित्वत्वादिरूपतादृशधर्मावच्छिन्ने वा मत्वर्थीयानां शक्त्यभ्युपगमे धनी दण्डीत्यादिप्रयोगाणामनिर्वाहापत्तेश्चन्द्रिकायामेव निरूढत्वात् । (उपरक्तावसितेः = सम्बद्धनिर्णयस्य) (नन्दतु = नन्दतात्) ।

**॥ इति तद्धितान्तशब्देषु तदस्यास्तीति स्वाम्यसम्बन्धे दुःखित्वादिकं ब्रह्मणो भवति ॥**

* * *

**॥ ततश्च तत्र कृदन्तेषु बद्धादिशब्देष्वपि बन्धादिकर्मत्वं तदस्यास्तीति सम्बन्धमात्रं स्वाम्यमुद्दिश्य ब्रह्मैवोच्यते ॥**

**॥ तत्र चान्ते रूढेषु अवरादिशब्देष्वपि अवरत्वादिनिमित्ताधीनप्रवृत्तित्वात् च ब्रह्मैवोच्यते ॥**

३ **सु०—** भवत्वेवं तद्धितान्तेषु गतिः, कृदन्तेषु बद्धादिशब्देषु रूढेषु चावरादिशब्देषु कथम् । इत्थम् ।

**बद्धशब्दस्य बन्धं प्रति कर्मत्वं प्रवृत्तिनिमित्तम् । तद्यस्यास्ति तत्र स शब्दो वर्तते । यस्यास्तीति च सम्बन्धमात्रमुच्यते । सम्बन्धविशेषे प्रमाणाभावात् ।**

**एवं कारकान्तरवाचिष्वपि द्रष्टव्यम् । अवरादिशब्दा अपि अवरत्वादिनिमित्ताधीनप्रवृत्तय एवमेव योज्याः । किञ्च 'प्रातिपदिकाद्धात्वर्थ' इति ण्यन्तेभ्यः पचाद्यचि विहिते सुलभैवावरादिशब्दप्रवृत्तिः ।**

**स्यादेषा व्याख्या, यत्र शब्दतोऽवरत्वादिप्रतीतिः, यत्र पुनः 'अव्यक्तात्पुरुषः पर इत्यादावर्थादवरत्वादिप्राप्तिस्तत्र कथम्, न हि शब्दवदुपपत्तिर्व्याख्यानमर्हति । उच्यते । अव्यक्तादिति पञ्चम्या हि पुरुषगतं परत्वं प्रति अव्यक्तस्यावधित्वमस्तीत्येतावदेव लभ्यते । न च 'तदस्यास्ती'त्यनेन समवाय एव प्राप्नोतीति नियमोऽस्ति, तत्स्वामित्वेनाप्युपपत्तेः । ततश्च यद्गतं परत्वं प्रति अवधित्वं तस्यावरत्वमर्थादापद्यताम् । परगतं तु यत्स्वामिकं तस्यावरत्वादिकं प्रति स्वाम्यमेवार्थादापद्यत इति न कश्चिद्विरोधः ।**

**परि०— तद्धितान्तेष्विति** । मत्वर्थकतद्धितसंज्ञकप्रत्ययान्तेष्वित्यर्थः । **कर्मत्वमिति** । 'तयोरेव कृत्यक्तखलर्थाः' इति भावकर्मणोः क्तप्रत्ययविधानात् बधधातोश्च सकर्मकत्वादिति भावः । **प्रमाणाभावादिति** । सूत्रे 'तयोरेवे'त्यस्य भावत्वकर्मत्ववतोरित्यर्थः । तत्र च सम्बन्धसामान्येनैव कर्मत्ववत्त्वं प्रतीयते । स्वाम्यसम्बन्धेन कर्मत्ववत्त्वं च हरेरपीति तत्र बद्धशब्दवृत्तौ नानुपपत्तिरिति सम्बन्धमात्रपक्षे अतिप्रसङ्गभङ्गस्तु चन्द्रिकायां व्यक्तः । ननु भवत्वेवं कृदन्तेषु । 'योनिमन्ये प्रपद्यन्त इति तिङन्तेषु कथमित्यत आह **एवं कारकान्तरेति** । बन्धं प्रतीत्यनुषङ्गः । योनिप्रतिपत्तिरूपबन्धं प्रति कर्तृत्वं हि प्रपद्यन्त इति तिङ्प्रत्ययप्रवृत्तिनिमित्तम् । 'लः कर्मणि च भावे चाकर्मकेभ्य' इति सूत्रे चकारात्कर्तरि लकारा भवन्तीत्युक्तत्वात् । कर्तृत्वं च यस्यास्ति तत्र हि प्रत्यया भवन्ति । यस्यास्तीति च सम्बन्धमात्रम् । समवायरूपविशेषे मानाभावात् । स्वाम्यसम्बन्धेन च कर्तृत्वं हरेरप्यस्तीति योनिप्रतिपत्तिरूपबन्धकर्तृत्वनियन्तृत्वेन हरौ', 'योनिमन्ये प्रपद्यन्ते', 'रमणीयां योनिमापद्यन्त' इत्यादितिङन्तशब्दवृत्तौ काऽनुपपत्तिरिति । तथा 'त्वं बन्धदो मुक्तिदोऽतो मतो नः' इत्यादौ यत्र बन्धं प्रति सम्प्रदानकारकवाचिचतुर्थ्यन्तं पदमधिकरणादिकारकवाचिसप्तम्यन्तादिकं वा तत्र सर्वत्रापि तादृशपदवाच्यत्वमेवं द्रष्टव्यमित्यर्थः । **एवमेवेति** । अवरत्वं यस्यास्ति तत्र शब्दो वर्तते । स्वाम्यसम्बन्धेन तद्धरेरप्यस्तीति तत्र शब्द इत्येवं योज्यमित्यर्थः । **प्रातिपदिकाद्धात्वर्थ इतीति** । तृतीयाद्यपादे





'सत्याप-पाश-रूप-वीणा-तूल-लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिजि'त्यत्र उक्तचुरादिगणमध्ये 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चे'ति पठितस्य गणसूत्रस्यायमर्थः। प्रातिपदिकात्करोतीत्यादिधात्वर्थे विवक्षिते बहुलं णिज् भवति। णिचि परे इष्ठन्प्रत्यये परतो यत्कार्यं तत्कार्यं भवतीति। तथा च 'अवरं करोति' 'बन्धं करोती'त्यर्थे णिचिकृते णिचि इष्टवदित्युक्त्या टेरिति सूत्रेण इष्ठेमेयस्यु परतः टेर्लोपो भवतीत्युक्तटिलोपे च ण्यन्तादवरादिशब्दात्। 'सनाद्यन्ता धातव' इति धातुसंज्ञायां 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इत्यत्र पचादेराकृतिगणत्वस्य 'यङोऽचि चे'त्यत्राज्ग्रहणेन ज्ञापितत्वात्पचाद्यचि कृते 'णेरनिटी'ति णिलोपे स्वाद्युत्पत्तौ अवरो बद्ध इत्यादिशब्दप्रवृत्तिर्हरौ सुलभैवेत्यर्थः। 'स बद्धः स दुःखी स बन्धयति स दुःखयती'त्यादिकौषारवश्रुतेरिति भावः। **अर्थादिति**। अन्यथानुपपत्तितः। अविनाभावबलादिति यावत्। अव्यक्तादिति पञ्चम्युक्तं यद(परा)वधित्वमवरत्वेन विनानुपपन्नं सत्स्वव्यापकमवरत्वं स्वाधिकरणे आक्षिपतीत्यर्थादवरत्वादिप्राप्तिरित्युक्तम् **उपपत्तिरिति**। व्याप्यव्यापकरूपोऽर्थ इत्यर्थः। अनुपपत्तिरूपेति वार्थः। **परगतं त्विति**। अन्यगतं तु परत्वावधित्वं यत्स्वामिकं येन स्वामिना नियमितं तस्य स्वामिनः परत्वावधित्वसमानाधिकरणावरत्वादिकं प्रतीत्यर्थः।

**यादु०— तद्धितान्तेष्विति**। मत्वर्थीयतद्धितातेष्वित्यर्थः। **कथमिति**। तत्र सम्बन्धबोधकप्रत्ययवदत्र तद्बोधकाभावादिति भावः। **सम्बन्धमात्रमुच्यत इति**। न चातिप्रसङ्गः शङ्कनीयः। प्रयोगे सति निमित्तानुसरणम्। न तु निमित्तमस्तीति प्रयोगः। प्रकृते नामानि सर्वाणीति श्रुत्या शक्तेः प्रमितत्वेन प्रयोगस्यापि प्राप्तत्वादित्याशयात्। **एवं कारकान्तरेति**। जायमानो म्रियमाण इत्यादिकर्तृवाचकेषु, (?)व्रश्चन इत्यादिकरणवाचकेषु, दानीय इत्यादिसम्प्रदानवाचिषु, प्रभवः प्रलय इत्याद्यपादानवाचिषु दोहन इत्याधिकरणवाचिषु च शब्देषु कर्तृत्वादिकं प्रवृत्तिनिमित्तं तद्यस्यास्तीत्यादि पूर्ववत् द्रष्टव्यमित्यर्थः। **एवमेवेति**। अरत्वादिकमवर इत्यादिरूढशब्दप्रवृत्तिनिमित्तं, तद्यस्यास्तीत्युक्तरीत्यैवेत्यर्थः। अवरादिपदेषु योगमाश्रित्य समाधानान्तरमाह **किञ्च प्रातिपदिकादिति**। 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चे'ति धातुसूत्रात् अवरादिशब्देभ्यस्तत्कारणादिरूपे धात्वर्थे चौरादिके णिचि सति, तस्य 'अचोञ्णिती'ति प्राप्तवृद्ध्यपवादायेष्टवद्भावस्योक्तत्वेन इष्टे परतष्टेरिति टिलोपस्य विधानाट्टिलोपे च सति 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां पचाद्यचि कृते 'णेरनिटी'ति णिलोपे च सत्यवरयतीत्यादिकर्तृव्युत्पत्त्याऽवरादिशब्दानां ब्रह्मणि वृत्तिः सुलभैवेत्यर्थः। **परगतं तु** इत्यत्र परत्वं प्रत्यवधित्वमित्यनुवर्तते।

**वं०प०— तद्धितान्तेष्विति**। अत इनिठनाविति सूत्रेण दुःखशब्दात्तस्यास्तीति मतुबर्थे तद्धितरूपे इन्प्रत्यये सति दुःखीत्येवंरूपाः शब्दास्तद्धितान्ता इत्यर्थः। **कृदन्तेष्विति**। बध बन्धनेऽस्मात् क्तप्रत्यये ककारलोपे झषस्तथोर्ध्वोऽधः झषः परयोस्तकारथकारयोर्धः स्यात्। डु धाञ् धारणपोषणयोरिति धाधातुं वर्जयित्वेति सूत्रेण तकारस्य धकारे सति बध् ध बद्ध इति कृदन्तः। कृदतिङिति तिङ्वर्जप्रत्ययस्य कृत्त्वोक्तेः क्तप्रत्ययस्य कृत्त्वेन





तदन्तत्वादस्येत्यर्थः । सम्बन्धविशेषः आधाराधेयभावरूपः । तद्घटकः समवाय इति यावत् तस्मिन्निति यावत् । प्रसिद्धत्वात्कर्तृव्युत्पत्तेरिति न्यायविवरणानुसारेणाह **किञ्चेति** । तथा चावरशब्दात्त(?) प्रातिपदिकादित्यादि-धातुसूत्रस्य चुरादिगणे पठितत्वेनास्मात्सूत्रात् चौरादिके णिचि प्रत्यये तस्य च णिच्प्रत्ययस्य इष्टवद्भावाङ्गीकारात् इष्ठन् इमनिच् ईयस् प्रत्ययानां पुरतः स्थितानां यत्कार्यकारित्वं पूर्वं टिलोपकारित्वरूपं तादृक्स्वभावस्य णिचोऽङ्गीकारात् पूर्वं टिभूतरेफस्थाकारलोपे अवर् णिच् इति स्थिते 'सनाद्यन्ता धातवः', गुप्तिज्किद्भ्यः सनि'ति सूत्रमारभ्य विहिता ये सनादयः सन्प्रत्ययमारभ्य 'कमेर्णिङ्' इत्येतत्सूत्रपर्यन्तं ये प्रत्यया विहितास्तदन्ता ये शब्दास्ते धातुसंज्ञाः स्युः । तथा च णिचोऽप्येतदन्तर्गतत्वेन तदन्तावरशब्दस्यानेन सूत्रेण धातुसंज्ञायां 'धातोः' अतःपरं नन्दिग्रहीत्यादिना वक्ष्यमाणा ये अच् इत्याद्याः प्रत्ययास्ते धातोरुपरि ज्ञेय इत्युक्तत्वेनावरशब्दस्यापि सनाद्यन्ता इति धातुसंज्ञाकरणादस्माद्धातोर्नन्दिग्रहिपचादिभ्यो ल्युणिन्यच इति सूत्रेणास्यापि पचादिगणस्थत्वा-त्कर्तरि अच्प्रत्यये सति अवर् णि अच् इति स्थिते पश्चात् 'णेर निटि' अनिडादावार्धधातुके परे णिचो लोपः स्यादिति सूत्रेण 'तिङ् शित्सार्वधातुकमि'ति तिङ्शितोरेव सार्वधातुकत्वात् 'आर्धधातुकं शेष' इति तिङ्-शिद्भिन्नस्याऽर्धधातुकत्वविधानात् अच्प्रत्ययस्य सेट्कत्वाभावेनानिट्त्वादार्धधातुकत्वाच्चास्मिन् परे णिचो लोपे अच्प्रत्ययस्थचकारलोपे च सति अवर् अ अवरेति रूपम् । ततश्चावरयतीत्यवर इति कर्तृव्युत्पत्तिः सुलभैवे-त्यर्थः । उपपत्तिः अव्यक्तादिति अवध्यर्थकपञ्चमीप्रयोगरूपयुक्त्या प्राप्तावरत्वरूपार्थ इति यावत् । सत्यं, यत्र शब्दतोऽवरत्वादिकं प्रतीयते तत्रैवेषा व्याख्या । यत्र त्ववरत्वादिकमर्थतः प्राप्तं तत्र स्वाम्यमप्यर्थत एव प्राप्त-मित्येवोच्यते न त्ववरशब्दार्थतया व्याख्यायते । येन न ह्युपपत्तिः शब्दवद्व्याख्यानमर्हतीत्युक्तो विरोधो नाम दूषणं स्यादित्याशयेन समाधत्ते **उच्यत इत्यादिना** । अत एव समवायस्यैव प्रयोगे निमित्तत्वं न स्वाम्यस्येति यतोऽत एवेत्यर्थः ।

**श्रीनिधि०**— तथा हि व्याख्यातं भाष्ये **कारकान्तरवाचिष्विति** । करणाद्यर्थककृत्प्रत्ययान्तेषु शब्देष्वित्यर्थः । **अवरत्वादिनिमित्ताधीनप्रवृत्तय इति** । अवरत्वादिरूपं निमित्तं तदधीनप्रवृत्तय इति अवरत्वादिरूपं निमित्तं तदधीनप्रवृत्तय इत्यर्थः । **अर्थादिति** । अवरत्वं विना परत्वावधित्वयोगादिति भावः ।

**शे०वा०**— **तद्धितान्तेष्विति** । मत्वर्थीयतद्धितान्तेष्वित्यर्थः । **कथमिति** । तत्र सम्बन्धसामान्य-बोधकप्रत्ययवत् प्रकृते तद्बोधकप्रत्ययाभावादिति भावः । **कर्मत्वं प्रवृत्तिनिमित्तमिति** । 'तयोरेव कृत्यर्थखलर्थाः' इति क्तस्य कर्मणि विधानादिति भावः । **सम्बन्धमात्रमुच्यत इति** । समवायादिरेवोच्यत इति न नियमः, किन्तु सर्वेऽपि सम्बन्धा उच्यन्त इत्यर्थः । कुत एतदित्यतः समवायादिरेवोच्यते न स्वामित्वमित्यत्र प्रमाणाभावा-दित्याह **सम्बन्धविशेष इति** । उक्तमेव न्यायं कर्त्रादिकारकान्तरवाचिकृदन्तशब्देष्वप्यतिदिशति **एवमिति** । जायमान इत्यादिषु शब्देषु जन्यादिकं प्रति कर्तृत्वादिकं हि प्रवृत्तिनिमित्तं, तद्यस्यास्ति तत्र स शब्दो वर्तते, यस्यास्तीति च सम्बन्धमात्रमेवोच्यते, सम्बन्धविशेषे प्रमाणाभावात् । तथा च जन्यादिनियन्तृत्वेन कर्त्रादि-





कारकान्तरवाचित्वात्कृदन्तजायमानादिशब्दानामपि तत्र वृत्तिरिति भावः । अवरादिशब्दा इत्यत्रादिपदेनानित्यादिशब्दानां सङ्ग्रहः । **एवमेवेति** । अवरत्वादिकं ह्यवरादिरूढशब्दप्रवृत्तिनिमित्तं, तद्यस्यास्ति तत्र स शब्दो वर्तते, यस्यास्तीति च सम्बन्धमात्रमुच्यते । तथा चावरत्वादिनियन्तृत्वेनावरादिशब्दानामपि भगवति प्रवृत्तिरिति भावः । अवरादिशब्देषु योगमाश्रित्य समाधानान्तरमाह **किञ्चेति । प्रातिपदिकाद्धात्वर्थ इति** । प्रातिपदिकाद्धात्वर्थे णिच् भवति । तस्मिंश्चेष्ठनीव कार्यं भवतीति धातु(गणपठित)सूत्रार्थः । तथा चावरादिशब्देभ्यः 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चे'ति धातु(गण)सूत्रेण धात्वर्थे णिचि, तस्येष्ठवद्भावे च जाते, णिचि परतष्टिलोपापेक्षया, परत्वात् 'अचो ञ्णिती'ति पूर्वं वृद्धौ सत्यां पश्चात् टेरिति इष्ठेमेयस्सु परतष्टिलोपविधानात् टिलोपे, निष्पन्नानामवरादिशब्दानां 'सनाद्यन्ता धातव इति' णिजन्ततया धातुसंज्ञायां, पचाद्यचि कृते णेरनिटीत्यनेन णिचो लोपे अवरयतीत्यवर इति कर्तृव्युत्पत्त्याऽवरादिशब्दानां सुलभैव ब्रह्मणि वृत्तिरिति भावः । **अर्थादिति** । अनुपपत्त्येत्यर्थः । पञ्चम्युक्तपरत्वावधित्वस्यावरत्वाविनाभूतत्वादिति भावः । नन्ववरत्वमस्यास्तीति सम्बन्धसामान्यविवक्षयोपपत्तिरप्यवरादिशब्दवद्व्याख्यायतामिति न तत्राप्यनुपपत्तिरित्यत आह **न हीति । यद्गतमिति** । परत्वं प्रत्यवधित्वं यद्गतं तस्येति सम्बन्धः । परगतं त्वित्यत्र, परत्वं प्रत्यवधित्वमित्यनुवर्तते **अर्थादिति** । परत्वावधित्वस्वामित्वाविनाभूतत्वात्तेनावरत्वस्वामित्वस्यैव प्राप्तिरिति भावः ।

**वा०र०**— यद्यपि श्रुत्यादिसमवाये पारदौर्बल्यसमवेता इत्यादिप्रयोगात् समवायपदमन्यथयितुं शक्यम्, तथापीह सम्बन्धमात्रमित्युत्तरत्रोक्तेर्यथास्थितमेव जायमान इत्यादिष्विति आदिपदेन जनिविषयजनकादिशब्दस्य भुज्यादिविषयभुञ्जानादिकर्तृवाचिशब्दस्य करणसम्प्रदानादिवाचिशब्दानां च ग्रहणं जन्यादीत्यादिपदेन भुज्यादिपरिग्रहः । कर्तृत्वादिकमित्यादिपदेन करणत्वादिसङ्ग्रहः । जनकादिशब्दविवक्षयापि जायमान इत्यादिष्वित्युक्तत्वादिति बोध्यम् । जन्यादिकर्तृत्वादिनियन्तृत्वेनेति पाठः । जन्यादि इत्येव पाठेऽपि तत्कर्तृत्वादीत्येवार्थः । योगिनमन्य इत्येतद्वाक्यादिलब्धमनित्यत्वादिकमित्याशयेनाह **अनित्यादीति** । धातुवृत्त्याद्यनुसारेण सूत्रं व्याचष्टे **प्रातिपदिकादिति** । धात्वर्थे तत्करोतीत्यादिरूपेण करोत्यादिधातोरर्थविशेष इत्यर्थः । बहुलमिति शेषः । अत एव तत्पादान्तभविनोदाहरिष्यति **इष्टे इवेति** । सप्तम्यन्ताद्वतिः प्रतियोगिनि सप्तमीनिर्देशात् तेनेष्टनि परे यद्विहितं कार्यं तदेवातिदिश्यते न तु इष्टनो यत्कार्यं तदपि तेन बहुत्र नाचष्टे । बहयति इत्यत्र इष्टस्य इद् चेति सूत्रेणणेः इट् न भवति अन्यथेष्टस्यापि यद्वेति सूत्रेण बहोरुत्तरस्य इष्टस्य इडागमे बहोश्च भूरादेशो भू इष्ट इति रूपस्य दृष्टतया बहियतीत्यत्रापि णेर्पिडागमे हूयतेति रूपापत्तिरित्यालोच्योक्तं **इष्टनीवेति कार्यमिति** । प्रातिपदिकस्य पुंवद्भावाभावे टिलोपादि तत्तप(?)मित्यर्थः । तसिलादिष्वाकृत्वसु च इति इष्टनपुंवद्भाव उक्तः । ररुतो हलादे लघोरिति रभावः । टेरिति टिलोपः इत्यादिकं कार्यं शेष्यादाववधेयं पाणिनीसूत्रत्वप्रतीतिवारणाय धात्वित्युक्तम् । उक्तमिष्टश्चेत्यन्तमेकसूत्रं तत्करोति तदाचष्ट इति द्वितीयं तेनातिक्रामतीति तृतीयमित्येवं प्रातिपदिकादित्यादि त्रिसूत्र्याः चुरादिगणे पठितधातुसूत्रतायाः आकरे स्पष्टत्वात् धात्वर्थ इति अवरं करोतीत्यादिरूपेण करोतेर्धातोरर्थे णिचि तदन्तावरशब्दोऽपि कृधात्वर्थक एव पर्यवसन्न इति भावः । प्रातिपदिकात् केवलाद्वासुवता





वतीति शेषः । प्रयोगशब्देन कुतः शक्तिप्रसक्तिरित्यतस्तत्र तस्य प्रयोगदर्शनादित्यभिप्रेत्य तं दर्शयति **प्रयोगमूलमिति** । शक्तिमूलमित्यर्थः । **इष्टत्वादिति** । बद्धादिशब्दानां राज्ञि शक्तेरङ्गीकृतत्वात्तदापादनं नानिष्टमित्यर्थः । **असिद्धेरिति** । बद्धादिशब्दानां राज्ञि शक्तेरेव सत्त्वेन शक्त्यभावस्यासिद्धेरित्यर्थः । अपेक्षिताध्याहारपूर्वकमाकाङ्क्षाक्रमेण विवक्षितार्थोपपादकतया वाक्यं योजयति **राजाऽधीनेत्यादिना** । ननु मुख्यप्रयोगे निमित्तस्य सामग्रीत्वात् तस्याश्च कार्याव्यभिचारात् कथं सत्यां सामग्र्यां कार्याभावः, तथा सति निमित्तस्य सामग्रीत्वाभावप्रसङ्गादित्यतोऽप्रतिबद्धसामग्र्या एव कार्यजनकतया, सति प्रतिबन्धके कार्याभावो युक्त एवेत्यभिप्रेत्य विवक्षितं हेतुहेतुमद्भावं सयुक्तिकमुपपादयितुमाह **इदमिति** । **अर्थेति** । उदाहृतकोटिद्वयेत्यर्थः । **न चेति** । अत्र 'न चे'त्यस्य स्वातन्त्र्यस्याकारणत्वं न च गमयतीति सम्बन्धः । प्रतिबद्धस्य कार्याजनकत्वमात्रेणाकारणत्वेऽतिप्रसङ्गं सूचयन्नुक्तमुपपादयति **न हीति** ।

**वा०र०— परेणापादितत्वादिति** । आपादयितुं शक्यत्वादित्यर्थः । अत एव वक्ष्यति **आपादयितुमशक्यत्वादिति** । सम्भावितपक्षौ बहिरेव विकल्पेति पाठः । पक्षानिति तु लेखकप्रयुक्तं बहुवचनम् । **प्रयोगदर्शनादिति** । प्रयोगोत्पत्तिशास्त्रत्वाच्छब्देषु न व्यवस्था स्यादित्येतद्व्याकरणाधिकरणे स्मृतिपादोपान्त्ये भाष्यकारीयप्रयोगमूलं व्याकरणमित्यादिरूपप्रयोगमूलकग्रन्थकारप्रयोगदर्शनादित्यर्थः । **सिंहसादृश्यरूपेति** । हिंसकत्वरूपस्येत्यर्थः । **सत्यपि तस्मिन्निति** । तस्मिन्नपि सतीति सम्बन्धः । तेन न वैय्यर्थ्यशङ्कावकाशः । सतीत्येव पाठस्तु स्वरस एव । **शक्तिमूलमिति** । शब्दशक्तीत्यर्थः । **नानिष्टमित्यर्थ इति** । तथा सति उच्चारणरूपप्रयोगः स्यादिति तु प्रयोगो नामोच्चारणमिति द्वितीयान्तर्भूतमिति न पृथक् तन्निरासस्यावश्यकतयेति भावः । **शक्त्यभावस्यासिद्धेरित्यर्थ इति** । विपर्ययपर्यवसानसहितापादनस्यानुमानतो प्रतिपादकैवमनिष्टापादनविपर्यये पर्यवसानं चोभयं मिलितमेवानुमितिसाधनं भवति इति तर्कस्य प्रामाण्यमुपपद्यत इति पद्धतौ यथार्थज्ञानसाधनत्वोपपत्त्यर्थं पर्यये (?) पर्यवसानस्यादरणेन नन्वनिर्धूमस्तस्मान्निर्वह्निर्नेति साधनप्रकारमाश्रित्यानुमानत्वोपपादनसिद्धेः । प्रकृतेऽपि यदि साम्यं प्रवृत्तिनिमित्तं स्यात् तर्हि राज्ञिबद्धादिशब्दशक्तिः स्यान्न चासावस्ति ततो न साम्यं प्रवृत्तिनिमित्तमिति विपर्ययपर्यवसानसाहित्येनानुमानताया वाच्यताया आपाद्याभावस्य हेतुताप्राप्तेः साधनीभूतशक्त्यभावस्यासिद्धिर्दूषणतयोक्तेति स्पष्टमिति तदुपपादनमात्रं कृतमिति द्रष्टव्यम् ।

**स०व्र०— अमुख्यप्रयोगविषयत्वादिति** । यदि शक्यसम्बन्धविवक्षया तीरे गङ्गाशब्दप्रयोगः तर्हि शक्यसम्बन्धस्यान्यत्रापि सत्त्वात् गङ्गाशब्दप्रयोगः स्यादित्यतिप्रसङ्गे तत्रायं न्यायः प्रवर्तत इति भावः । ननु न्यायसङ्कोचे किं नियामकमत आह **तत्र हि निमित्तमिति** । **तत्र** लाक्षणिके । **निमित्तं** शक्यसम्बन्धलक्षणम् । **किं त्विति** । प्रयोजनादेरप्यपेक्षितत्वादिति भावः । **मुख्येति** । **निमित्तमेव** प्रवृत्तिनिमित्तमेव । अन्यस्यानपेक्षितत्वादिति भावः । **न हीति** । शक्यसम्बन्धस्य सत्त्वेऽपि प्रयोजनाभावात् सामग्र्यभावेन न प्रयोगः शार्दूले । निमित्तस्यैव सामग्रीत्वे तस्य सत्त्वात् प्रयोगः स्यात् । उपगोरपत्ये औपगवशब्दस्येवेति भावः । ननु प्रयोगशब्दस्य शब्दशक्त्यर्थकत्वे ज्ञापकं किमित्यत आह **प्रयोगमूलमिति** । शक्तिमूलमित्यर्थः ।





**विठ्ठल०— किन्तु तदेकदेश इति** । सिंहो देवदत्त इत्याद्यमुख्यप्रयोगेषु मुख्यार्थसादृश्यादिरूपः क्रौर्यादिसिंहशब्दप्रवृत्तिनिमित्तैकदेश एवासामग्रीत्यर्थः । प्रयोगे सति निमित्तानुसरणमित्युक्तन्यायो अमुख्यप्रयोगविषयक एव न तु मुख्यप्रयोगविषयक इत्येतदुपपादयति **न हीति** । सिंहशब्दो सिंहगुणयोगाद्देवदत्ते प्रयुक्त इत्येतावता तद्गुणयुक्ते शार्दूले न हि प्रयुज्यते । अतोऽमुख्यप्रयोगेष्वेवायं न्यायः न तु मुख्यप्रयोगेषु तत्र उपगोरपत्यतारूपनिमित्तसद्भावे औपगवशब्दप्रयोगस्य नियतत्वादिति भावः । ननु प्रयोगशब्दस्य शक्तिवाचकत्वाभावाद्विकल्प एवानुपपन्न इत्यतः शक्तावपि प्रयोगशब्दमुदाहृत्य दर्शयति **प्रयोगमूलमिति** । शक्तिमूलमित्यर्थः । अन्यथासिद्धेः स्फुटमप्रतीतेस्तद्व्युत्पादयितुमाह **इदमुक्तं भवतीति** । **न च संशय इति** । स्वातन्त्र्यस्याकारणत्वं नावगमयतीत्यन्वयः ।

**चषकः— शार्दूल इति** । सिंहनिरूपितसादृश्यविशेषित इत्यादिः । **औपगवेति** । अपत्यार्थाऽणन्तेत्यादिः । **नाधाक्षीदिति** । भस्मीकरणार्थकस्य दहेर्लुङि रूपमेतत् ।

११ **सु०— न संशयकारणत्वमात्रं प्रयोगप्रतिबन्धकम् । व्याख्यानतः संशयनिवृत्तिसम्भवात् । यथोक्तम् । 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमि'ति । अन्यथा राजा जयीत्यपि प्रयोगो न स्यात् । तत्राप्युक्तविधया संशयावतारादित्यत आह अमङ्गलत्वादिति ।**

**अनु०— अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ॥**
**अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् ॥**

**तुशब्दोऽवधारणे । शब्दस्य** इति जात्यपेक्षमे(त्ये)कवचनम् । राज्ञो बन्धनादौ **अमङ्गले (योगात्)** योग्यता(त्व)सद्भावात्, आकाङ्क्षादेश्च स्फुटत्वात् 'राजा बद्ध' इत्यादिपदानां पाक्षिकराजबन्धाद्यमङ्गलप्रतीतिजनकत्वसम्भवात् । राज्ञोऽमङ्गलाभिधानस्य च राजतत्पुरुषाप्रीतिहेतुत्वादेव शब्दस्य प्रयोगनिवर्तनं स्यात् ।

अयमभिसन्धिः । न केवलं संशयप्राप्तेः प्रयोगाभावः, किन्तु संशयनिमित्ताप्रीतिहेतुकानर्थशङ्कयैव । न पुनः स्वातन्त्र्यस्याकारणत्वादिति । तर्हि राजा पराजयीत्यपि न प्रयोक्तव्यमिति चेत् । भृत्यद्वारैव राजा विजयते पराजयते चेति प्रसिद्धतया संशयानुत्पादात् ।





**परि०— यथोक्तमिति।** लणितिसूत्रे महाभाष्ये उक्तमित्यर्थः। अलक्षणम् = असूत्रमित्यर्थः। तत्र हि प्रत्याहारसूत्रेषु अइउण् लणिति णकारानुबन्धं द्विःकथमुपात्तवान् सूत्रकारः। तथात्वे 'अणुदित्सवर्णस्य चाप्रत्यय' इत्येवमादावणित्ययं किंपूर्वेण णकारेण गृहीतप्रत्याहारस्य निर्देशोऽथ परेणेति सन्देहावस्कन्दनादित्याशङ्क्य व्याख्यानतो विशेषप्रतिपत्तिः न हि सन्देहादलक्षणमितिपरिभाषांज्ञापनाय द्विरुपात्तो णकारानुबन्ध इत्युक्त्वा अणुदित्सवर्णस्येत्येकं विनान्यत्र सर्वत्र न परेणेति व्याख्यास्यामः। न हि सन्देहमात्रादलक्षणं भवतीत्युक्तम्।

**यादु०— व्याख्यानत इति।** परिभाषेयम्। अलक्षणम् = अज्ञापकमित्यर्थः।

**वं०प०— उक्तविधयेति।** किं राजाऽधीनस्य भृत्यस्य जयादिनैवमुच्यते किंवा राज्ञ एव जयादिनेत्युक्तविधयेत्यर्थः। **तर्हीति।** यद्यमङ्गलशब्दप्रयोगो न कर्तव्यस्तर्हीत्यर्थः। तत्रापि किं राजा स्वयमेव पराजित उत भृत्यद्वारेति तत्रापि संशयावतारेण तन्निमित्तराजतत्पुरुषाप्रीतिहेतुकानर्थशङ्का स्यादिति भावः।

**आनन्दः— न हि सन्देहादिति।** सन्देहाद्भवतीत्येतावता लक्षणत्वे ङे प्रथमयोरमित्यत्रापि ङे इत्येतच्चतुर्थ्येकवचनं वा सप्तम्येकवचनं वेति संशयस्य जायमानत्वात्तदपि लक्षणं न स्यादित्यर्थः। **अन्यथेति।** संशयस्य प्रतिबन्धकत्व इत्यर्थः। **उक्तविधयेति।** जयाधिकरणत्वाद्वा जयिशब्दप्रयोगः उत जयनियामकत्वादिति संशयः स्यादित्यर्थः। **तर्हि राजेति।** तत्रापि पराजयाधिकरणत्वाद्वा पराजयिशब्दप्रयोग उत तन्नियामकत्वादिति।

**शे०वा०—** नन्वमङ्गलादित्युत्तरभाष्यमनर्थकम्। न च संशयनिमित्ताप्रीतिहेतुकानर्थशङ्कायाः प्रयोगप्रतिबन्धकत्वकथनार्थं तदिति वाच्यम्। प्रयोगस्योक्तरीत्या संशयकारणतया तन्मात्रस्यैव प्रयोगप्रतिबन्धकत्वसम्भवेन विशिष्टप्रतिबन्धकत्वकल्पनानर्थक्यादित्यतः संशयकारणत्वमात्रस्य प्रयोगप्रतिबन्धकत्वानुपपत्तेर्युक्तमेव विशिष्टस्य प्रतिबन्धकत्वकल्पनमित्याशयेन संशयकारणतायां प्रयोगप्रतिबन्धकत्वानुपपत्तिशङ्कामुत्थापयति **न संशयेति।** व्याख्यानस्य संशयनिवर्तकत्वे परिभाषां प्रमाणयति **यथेति।** 'एकशतं षष्ठ्यर्था' इति 'अस्तेर्भूरि'-त्यादौ यत्रानेकेषां योगानां प्राप्तिस्तत्र स्थाने षष्ठी ग्राह्येति नियमार्थं प्रवृत्ते 'षष्ठी स्थाने योगे'ति सूत्रे स्थान इत्युक्तेऽप्यनन्तरे वा समीपे वेति सन्देहात्तन्निवृत्तये 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमि'ति भाष्यकारेणोक्तम्। व्याख्यानेन विशेषप्रतिपत्तिरर्थनिश्चयो भवत्येव न तु सन्देहाल्लक्षणाभासः। एवं च स्थान इति व्याख्यास्यामः। ततश्चार्थनिश्चय' इति भाष्यकृता व्याख्यातस्य सन्देहनिवर्तकताया उक्तत्वाद्व्याख्यानेन तन्निवृत्त्या अप्रतिबद्धसामग्रीबलाद्वद्धादिशब्दप्रयोगोऽवर्जनीय एवेति भावः। संशयकारणत्वमात्रस्य प्रयोगप्रतिबन्धकत्वेऽनिष्टमाह **अन्यथेति।**

**तत्राप्युक्तविधयेति।** राजा जयीति प्रयोगेऽप्याकाङ्क्षासन्निधियोग्यतानामुभयत्र सत्त्वेनार्थद्वयप्रतीतेरवर्जनीयतया किं राजाऽधीनस्य भृत्यस्य जयित्वेनैवमुच्यते। किंवा राज्ञ एव जयित्वेनेति व्युत्पन्नस्य संशय-





प्रसङ्गेन प्रयोगप्रतिबन्धसम्भवादिति भावः । जयीत्यपीत्युपलक्षणम् । पराजयीत्यपि द्रष्टव्यम् । प्रयोगाभाव-स्यान्यथासिद्ध्युपपादकस्याप्रियत्वादेवेत्यवधारणस्यात्राश्रवणात्तदर्थतया तुशब्दं व्याचष्टे **तुशब्द इति** । अमङ्गल-त्वाच्छब्दानामिति शब्दानां बहुत्वावगत्या शब्दैकत्वविवक्षया शब्दस्येत्येकवचनानिर्वाहान्नेदं व्यक्त्यैक्यनिबन्धन-मेकवचनं किन्तु जातिरूपार्थैक्यनिबन्धनमेवेत्याह **शब्दस्येतीति** । राज्ञो योगादमङ्गल इत्यादेरानर्थक्यमित्यतो-ऽमङ्गलत्वादित्यर्थे हेत्वर्थसमर्पकत्वान्न तदिति भावेन योग्यतया हेतुहेतुमद्भावेन योजनामाह **राज्ञ इत्यादिना** । कथमेतावता राजा बद्ध इत्यादिप्रयोगाभावस्यान्यथासिद्धिः समर्थितेत्यत आह **अयमिति** । **तर्हीति** । संशय-निमित्ताप्रीतिहेतुकानर्थशङ्कायाः स्वातन्त्र्यनिमित्तकशब्दप्रयोगप्रतिबन्धकत्व इत्यर्थः । **नेति** । तत्राप्युक्तविधया संशयनिमित्तकाप्रीतिहेतुकानर्थशङ्कायाः सत्त्वेन तया स्वातन्त्र्यस्य प्रतिबद्धत्वादिति भावः । **प्रसिद्धतयेति** । निर्णीतत्वेनेत्यर्थः । तथा चैककोटिनिर्णयान्न तत्र संशय इति प्रतिबन्धकाभावाद्युक्तः स्वातन्त्र्यनिमित्तकः पराजयीत्यादिप्रयोग इति भावः ।

**वा०र०— परिभाषामिति** । भाष्यकारीयामिति शेषः । परिभाषाकर्तृविचारस्तद्दृश्यत्वाधिकरणेऽस्माभिः कृतोऽवधेयः । बहवो हि षष्ठ्यर्थाः । स्वस्मामिसम्बन्धसमीपसमूहविकारावयवाद्याः तत्र यावन्तः शब्दे सम्भवति तेषु प्राप्तेषु नियमः क्रियते इत्येतत्काशिकाव्याख्यानावसरे मञ्जर्यमेकशतं षष्ठ्यर्था इत्यादिकं षष्ठीदण्डका-भिधग्रन्थोक्तरीत्या प्रतिपादितं भाष्ये सूत्रं प्रत्याख्यातम् । कथमस्तेर्भूरित्यतु(?) सन्देहः स्थाने नन्तरं समीप इति तत्र लभ्यानुरोधात् स्थान इति व्याख्यास्यामः इति च मञ्जरीग्रन्थोऽस्ति परिभाषाविवरणमप्युक्तस्थले उक्त-रीत्यास्ति तत्सर्वं मनसि निधाय सूत्रप्रवृत्तिमुपवर्ण्य व्याख्यानत इत्येतत्परिभाषाप्रवृत्तिवर्णनपूर्वकं तदर्थवर्णनादिकं जन्माधिकरणवाक्यार्थचन्द्रिकायां कृतं तदनुसारेण स्वयमपि परभाषाप्रवृत्तिवर्णनादिकं कुर्वन्नेव प्रकृतोपयोगं स्पष्टयति **एकशतमित्यादिना** । **इतीति** । इति षष्ठीदण्डके षष्ठ्यर्थानामनेकेषां मुक्तत्वादित्यर्थः । **योगानामिति** । सम्बन्धानामित्यर्थः । अस्तेरित्युक्ते हि अस्तेः स्थाने अनन्तरे समीप इत्येवं योगाः प्राप्ताः स्वामिभावादेः शब्दा-सम्भवात् प्राप्तयोगेष्वप्यानन्तर्यसामीप्ययोरस्तेर्भूरित्यत्रासम्भवेन लक्ष्यानुरोधेन नियमस्यावश्यकत्वादिति भावः । **स्थाने** षष्ठीति स्थाने योगैव षष्ठीत्यर्थः । तथैव पाठस्तु स्पष्ट एव । अन्यच्च स्थाने योगो यस्याः सेति व्यधिकरण-बहुव्रीह्याश्रयणात्सप्तम्य अलुगश्चाश्रयणात् स्थाने निमित्तभूते सति योगस्थान्यादेशलक्षणो यस्या सा स्थाने योग इत्यर्थो ध्येयः । अथवा स्थाने नन्तरे वा समीपे वेति अनेन योगनिमित्तभूतस्थानादीनामेव संशयकोटि-तयोक्तत्वायोगपदोक्तसम्बन्धं पुरस्कृत्य स्थाने षष्ठीत्येव यथाश्रुतं व्याख्येयम् । स्थान इत्यनेनापि स्थान्यादेव भावलक्षणसम्बन्धस्यैकदेशस्य व्यवहारः । विषयविषयीभावादिसम्बन्धस्थले विषयित्वादेः सम्बन्धैकदेशस्यापि सम्बन्धत्वेन व्यवहारदर्शनात् । स्थानशब्दश्चात्र प्रसङ्गवाची । यथा दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति दर्भाणां प्रस्तरणार्हतया प्राप्तौ शराणां प्रस्तरणं कार्यमित्यर्थप्रतीतिः । एवमिहापि अस्तेः प्रसङ्गे प्राप्तौ भूः प्रयोक्तव्यः । अस्त्यर्थं प्रतिपादयितुमुद्युक्तः आर्धधातुके विषये भवतिना प्रतिपादयेदिति यावत् । न तु गोः स्थाने अश्वे बध्यतामित्यत्रेवापकर्षार्थः । तत्र हि गौः गोष्ठतोऽपसार्याश्वबन्धानेति गम्यते । तदिहास्तिमपकृष्य भवति





प्रयोक्तव्यमित्यर्थः प्राप्तः । न चायं युक्तः शब्दार्थसम्बन्धस्य नित्यतया सता रूपादर्थादस्तेरपकर्षायोगादार्ध-धातुके परतोस्तेरप्रयोगस्य भूशब्दप्रयोगस्य च स्वाभाविकतया प्रकृतिप्रत्ययसमुदायस्यापि नित्यत्वात् तत्र प्रकृतेरपकर्षायोगेनार्धधातुकादपकर्षस्याप्ययोगात्, न वा श्लेष्मनिवृत्तिनिमित्तं कटुकमौषधमित्यर्थके श्लेष्मस्थाने कटुकमौषधमित्यत्रैव निवृत्तिवचनं तथा सति हि अस्तेर्निवृत्तये भूः प्रयोक्तव्यमित्यर्थः प्राप्नोति । न चासौ सम्भवति अस्तेरुपदेशसामर्थ्येन निवृत्तेरयोगात् मधुरायां व्यापादितस्य सृघ्ने जीवनायोगवत् आर्धधातुकाश्च निवृत्तिः तस्य सार्वधातुके श्रवणायोगाच्च । शिष्टमाकरे स्पष्टम् । **स्थान इत्युक्तेऽपीति** । अनेकसम्बन्धसंशय-निवृत्तये अस्तेर्भूरित्यादौ स्थाने योगैव सा षष्ठीति सूत्रकारेण स्थान इत्युक्त्या संशयनिराकरणेऽपीत्यर्थः । इत्युक्तेऽपीत्यनन्तरं स्थानेनेन्तरं समीपे वेति पाठः । स्थानपदाभावो लेखकागतः । स्थानेनेन्तरं समीप इतीत्यादि भाष्यानुगुण्यात् अत्र चेत्युक्तेति भाष्यकारेणेत्युक्तमिति सम्बन्धः । तथा च सूत्रकारेणैवमुक्तेऽपि भाष्यकारेण तु प्रकारान्तरमभिहितमित्यर्थसूचनेन तत्सूत्रं प्रत्याचक्षाणेनेति लभ्यते अस्तेर्भूरित्यत्र स्थान इत्यादि भाष्यानु-सारेणात्रापि स्थानेत्यतः प्रागस्तेर्भूरित्यत्रेति पूरणीयम् । अस्तेर्भूरित्यादाविति प्रकरणात् बुद्ध्या विवेकेनास्ते-र्भूरित्यस्यानुवृत्तिर्वा, भाष्यकारेणोक्तमित्युक्ते ........मिति मूलस्य भाष्यकारेणोक्तमित्यर्थ इति व्याख्यानं च सूचितं भवति । सन्देहं व्युत्पाद्य तन्निवृत्तय इति पाठस्तु स्वरस एव । सन्देहादिति पाठेऽपि सन्देहं व्युत्पाद्येति ल्यब्लोप-निमित्ता पञ्चमी । **अनन्तरे समीपे वेति** । यद्यपि समीपानन्तरशब्दयोस्तुल्यार्थतया पृथक्प्रयोगः कथमत एव न्यासमञ्जर्योः स्थानेनेन्तरं वेत्येव संशयः प्रदर्शित इत्याभाति तथापि व्यवहितस्यापि समीपत्वेनान्तराद्भेदेनोपा-दानसम्भव इति हरदत्तः । **एवं चेति** । अत्र प्रागुक्तमञ्जर्यनुसारेण भाष्यानुसारेण च लक्ष्यानुरोधादिति शेषः । अत्रार्थनिश्चय इत्यन्तं परिभाषाव्याख्यानं इति भाष्यकृते इत्यादिकं प्रकृतोपयोगप्रदर्शनं इतीत्यस्य तथा चेत्यर्थः । इति तथा चेति पाठस्तु स्वरस एव । अनेनैवं प्राप्ताख्यानं सूचितं भवति । सन्देहपरिहारस्य विशेषव्याख्यानमात्रेण सम्भवात् किं स्वतन्त्रप्रयोगान्तरकरणेनेति सिद्धे शब्दार्थसम्बन्ध इत्यादौ ग्रन्थारम्भवार्तिकव्याख्यानरूपभाष्योक्त-रीत्या सिद्धशब्दस्य नित्यार्थकत्वेन व्याख्यानमात्रेण सन्देहनिवृत्तेरिष्टतायामविवादाविति ज्ञेयम् । अधिकं जन्मा-धिकरणे सविस्तरमुपपादितमस्माभिः । **जातिरूपेति** । शब्दत्वरूपजातिस्त्वेकैवेति भावः । **प्रतिबद्धत्वादिति भाव इति** । प्रतिबद्धत्वकल्पनोपपत्तेरित्यर्थः ।

**स०व्र०— व्याख्यानतो विशेषप्रतिपत्तिरिति** । विशेषप्रतिपत्तिः संशयनिवर्तकैककोटिनिर्णयः सन्देहा-न्निमित्तात् सन्देहजनकत्वादिति यावत् । लक्षणं सूत्रम् । तेन तत्प्रयोगोऽपि लक्ष्यते । ततश्च सन्देहजनकसूत्रप्रयोगो न हि । यतो व्याख्यानतो विशेषप्रतिपत्तिर्भविष्यतीति योजना ।

**विठ्ठल०— व्याख्यानत इति** । अर्थसन्देहान्न हि सूत्रमसूत्रं भवति यतो व्याख्यानतोऽर्थविशेष-निश्चयादित्यर्थः । संशयकारणतामात्रं राजा बद्ध इत्यादि प्रयोगः प्रतिबन्धकं न भवति । व्याख्यानतः तन्निवृत्ति-रसंभवादस्तथा प्रयोगाभावेन बन्धादिस्वातन्त्र्यस्य न प्रवृत्तिनिमित्तत्वमिति चोद्यं स्फुटपरिहारानवबोधादाह **अयमभिसन्धिरिति** ।





**चषकः— व्याख्यानत इति** । इति परिभाषेयमधस्ताद्विशदीकृतैव । चौरादिकाल्लक्षदर्शनाङ्कनयोरिति पठितात्स्वार्थणिजन्तात् ल्युटि णिलोपे निष्पन्नो लक्षणशब्दो ज्ञापकवचनः ।

**१२ सु०— नन्वस्ति तावद् राजा बद्ध इत्यादिप्रयोगाभावः । स तु स्वाम्यस्याकारणत्वान्न भवति, किं तूक्तसंशयप्रतिबन्धादिति कुतो निश्चेयम् । न च वाच्यं मा भूदयं निश्चयः, प्रयोगाभावस्यान्यथासिद्धिशङ्काऽपि तर्कानुमाने शक्नोति दूषयितुमिति । वादिनोऽपि निश्चयस्यावश्यकत्वात्, अन्यथा स्वातन्त्र्यनिमित्तकसमन्वयानवधारणापातादि'-त्यत आह गुणास्त्विति ।**

## अनु०— गुणास्तु तादृशा यत्र प्रयुज्यन्तेऽखिला अपि ॥

**तादृशाः = स्वाम्यनिमित्तकाः शब्दाः, यत्र = यदि, गुणाः = शुभाभिधायिनो न तु पाक्षिकमप्यमङ्गलं प्रत्याययन्ति । तत्र = तर्हि । ते अखिला अपि प्रयुज्यन्ते । यथा जितं राज्ञेत्यादयः । प्राप्ताप्राप्तविवेकेनानर्थशङ्कैव प्रयोगाभावकारणम्, न तु स्वातन्त्र्यस्यानिमित्तत्वमिति निश्चीयत इति भावः । अत एवोक्तम् अखिला अपीति ॥ न चायं नियमोऽस्ति, निमित्तसद्भावे प्रयोगो भवतीति । अनन्तानां हि शब्दानां लक्षणानि व्याकरणकारैरुक्तानि, न च तेषां प्रयोगो दृश्यत इति स्फुटत्वान्नोक्तम् । तदेवं स्वातन्त्र्यस्य शब्दप्रवृत्तिहेतुत्वं मुख्यत्वं च सिद्धमित्याह पूज्येष्विति ।**

## अनु०— पूज्येष्वेव विशेषेण स्वातन्त्र्यं मुख्यकारणम् ।

**यतः, पूज्येषु = स्वामिषु, जयिप्रभृतयः शब्दाः प्रयुज्यन्ते; तेन ज्ञायते स्वातन्त्र्यं शब्दप्रवृत्तिकारणमिति । यतश्च, पूज्येष्वेव, विशेषेण = प्राचुर्येण, प्रयुज्यन्ते, न भृत्येषु; तेन निश्चीयते स्वातन्त्र्यं शब्दप्रवृत्तौ तद्गतत्वादपि मुख्यं कारणमिति ।**

**परि०— तर्कानुमाने इति** । यदि स्वाम्यं प्रवृत्तिनिमित्तं स्यात् तर्हि राज्ञि बद्ध इत्यादिप्रयोगः स्यादिति प्रागुक्ततर्के, न स्वाम्यं शब्दप्रवृत्तिनिमित्ते तस्य राज्ञि बद्धादिशब्दप्रयोगाहेतुत्वादिति तर्कस्य विपर्ययपर्यवसानेन लब्धमनुमानं च दूषयितुं शक्नोतीति सिद्धान्तिना न वाच्यमित्यर्थः । **वादिनोऽपि** सिद्धान्तिनोऽपि । **समन्वयेति** । शक्तितात्पर्येत्यर्थः । यत्रेति श्रवणात्तत्रेत्यध्याहृत्यार्थमाह **तत्र तर्हीति** ।





नन्वस्ति तावदित्यादिना कृतचोद्यस्य किमुत्तरमनेन लब्धमित्यतो भावमाह **प्राप्ताप्राप्तेति** । राज्ञि बद्धादिशब्दाप्रयोगे प्रयोजकतयेदं प्राप्तमिदमप्राप्तमिति विमर्शेनेत्यर्थः । स्वाम्येन निमित्तेन शब्दाप्रयोगे प्रतिबन्ध एव प्रयोजकतया प्राप्तः न तु स्वाम्यस्य शब्दप्रवृत्त्यनिमित्तत्वं प्रतिबन्धाभावे शब्दप्रयोग-दर्शनात् । अन्यथा = स्वम्यस्य शब्दप्रवृत्त्यनिमित्तत्वस्यैव दोषवाचिशब्दाप्रयोगप्रयोजकत्वे, गुण-वाचिशब्दप्रयोगोऽपि न स्यात् । अस्ति च सः तेन ज्ञायते प्रतिबन्धकरूपानर्थशङ्कैवाप्रयोगे कारणं न त्वन्यदिति निश्चीयत इत्यर्थः । यदपि मुख्यप्रयोगे तु निमित्तं सामग्रीति निमित्ते सति स्यादेवावश्यं प्रयोग इति प्रागुक्तं यदपि सन्न्यायरत्नावल्युक्तस्य खण्डनं तदुभयमसदिति भावेनाह **न चायं नियमो-ऽस्तीति । न च तेषां प्रयोगो दृश्यत इति** । एतच्च विवृतं चन्द्रिकायाम् ''धेनुशब्दप्रवृत्तिनिमित्तस्य धेट इच्चेति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ सत्त्वेऽपि तत्र तदप्रयोगः । यथा च निमित्ते सत्यपि कुलाले कुम्भकारशब्दस्येवोदञ्चनकारादिशब्दानामप्रयोगः तथा राज्ञि सत्यपि निमित्ते बद्धादि-शब्दाप्रयोगोऽस्तु । किं च त्वामतिक्रान्तानामित्याद्यर्थेऽतित्वाकं अतित्वयेत्यादयः मामतिक्रान्ताना-मित्याद्यर्थे अतिमाकमतिमयेत्यादयश्च लक्षणतो व्युत्पादिताः । न च तेषां प्रयोगोऽस्ति तद्वदिहाप्यस्तु'' इत्यादिग्रन्थेन । **तदेवमिति** । 'कुतो राज्ञि जयोऽन्यथा' इति 'न हि भृत्यस्ये'त्यादिना चोक्तप्रका-रेणेत्यर्थः।

**गु०दी०— यथा जितं राज्ञेत्यादय** इत्यत्र पालितं स्वराज्यं, नाशितं परराष्ट्रं, गृहीता परसेनेत्यादिक-मादिशब्देन गृह्यते । प्रागुक्तमर्यादया च बहवः प्रयोगाः ज्ञातव्याः ।

**यादु०— प्राप्ताप्राप्तेति** । स्वाम्यनिमित्तकत्वाविशेषेऽपि शुभाभिधायिनामेव सर्वेषां प्राप्तिरस्ति । अशुभाभिधायिनामप्राप्तिश्च । तयोर्विवेकेन विलक्षणकारणजन्यत्वविमर्शेत्यर्थः । **न तु स्वातन्त्र्यस्येति** । तथात्वे शुभाभिधायिनां यो नियमेन प्रयोगः सोऽपि न स्यादिति भावः । यदुक्तममुख्यप्रयोगविषयत्वादस्येत्यादिना प्रवृत्तिनिमित्तसद्भावे मुख्यप्रयोगस्यावश्यकत्वमिति तत्रापि व्यभिचारं स्वयमाह **न चायं नियम इति** । चशब्दो-ऽप्यर्थः । प्रयोगो = मुख्यप्रयोगः । **लक्षणानीति** । प्रकृतिप्रत्ययविभागेन प्रवृत्तिनिमित्तानीत्यर्थः । **न च तेषामिति**। अतित्वाकम् अतित्वया अतिमाकम् अतिमयेत्येवमादीनामित्यर्थः ।

**वं०प०— तर्कानुमान इति** । यदि स्वाम्यं प्रवृत्तिनिमित्तं स्यात्तदा बद्ध इत्यादिप्रयोगः स्यात् । न भवति च प्रयोगस्तस्मात्स्वाम्यं न प्रवृत्तिनिमित्तम् । प्रवृत्तिनिमित्तत्वेऽपि प्रयोगाभावस्योक्तसंशयेनान्यथासिद्धत्वान्न तर्कः युक्तः । तथा स्वाम्यं न प्रवृत्तिनिमित्तं प्रयोगाभावादित्यनुमानमप्युक्तरीत्याऽन्यथासिद्धत्वादयुक्तमित्यर्थः । कुतो न वाच्यमित्यत आह **वादिनोऽपीति** । स्वातन्त्र्यस्य निमित्ततां प्रतिपादयितुः सिद्धान्तिन इत्यर्थः ।





**निश्चयस्येति** । प्रयोगाभावः स्वातन्त्र्यस्याकारणत्वान्न भवति किन्तु संशयप्रतिबन्धादेवेति स्वातन्त्र्यस्य दुःख्यादिशब्दप्रवृत्तिनिमित्ततानिश्चयस्येत्यर्थः । माऽस्तु ममापि तन्निश्चय इत्यत आह **अन्यथेति** । स्वातन्त्र्यस्य प्रवृत्तिनिमित्ततानिश्चयादिनेत्यर्थः । यदुक्तं पूर्वपक्षिणा मुख्यप्रयोगे तु निमित्तमेव सामग्रीति तद्दूषयति **न चायमिति** । यतश्चेत्यनेन मुख्यत्वसिद्ध्युपसंहार इति ज्ञेयम् । शङ्कते **सत्यपीति** । प्रयोगाभावः कुतो न भवेत्, किन्तु भवेदेव । प्रयोगाभावः कुतः । संशयनिमित्तकराजतत्पुरुषाप्रीतिरूपप्रतिबन्धकस्य सत्त्वादिति शेषः । **निमित्तेति** । प्रयोगे स्वाम्यरूपनिमित्तेत्यर्थः ॥

**आनन्दः**— संशयनिमित्ताप्रीतिहेतुकानर्थसंशयानिवारणस्याशक्यत्वादिति आह **तर्कानुमान इति** । यदि स्वातन्त्र्यस्य शब्दप्रवृत्तिकारणत्वं स्यात्तदा राज्ञि बद्धादिशब्दप्रयोगः स्यादिति तर्कः, स्वातन्त्र्यं शब्दप्रवृत्ति-कारणं न सत्यपि तस्मिन्नप्रयुज्यमानत्वादित्यनुमानं चेत्यर्थः । **अन्यथेति** । स्वातन्त्र्यस्य प्रवृत्तिनिमित्तत्व-निश्चयाभाव इत्यर्थः । प्राप्ताप्राप्ते विवेकेनेति जयीत्यादिशब्दप्रयोगेन स्वातन्त्र्यस्य शब्दप्रवृत्तिनिमित्तत्वं प्राप्तं बद्ध इत्यादि प्रयोगादि प्रयोगाभावे च शब्दप्रवृत्तिनिमित्तत्वं प्राप्तं तयोर्विवेके प्रयोगाभावः किं निबन्धज इत्यादि विवेके क्रियमाणे इत्यर्थः । प्रयोगे तु निमित्तसामग्रीत्युक्तं दूषयति **न चायमिति** । अन्यथा एकस्य शब्ददोष-प्रत्यायकत्वेनानर्थहेतुत्वमित्येकं दोषाप्रत्यायकत्वेनानर्थहेतुत्वमिति द्वितीयम् । उभयत्रापि बहुभुक्शब्ददृष्टान्तः । तत्र प्रथमे यो दृष्टान्तः बहुभुक् शब्दस्तस्य एव दुःखादिशब्दो राजादौ प्रयुक्तोऽनर्थहेतुरिति दार्ष्टान्तिकमध्याहार्य-मित्यर्थः ।

**शे०वा०**— ननु च प्रतिबन्धकोक्त्या बद्धादिशब्दप्रयोगाभावस्य राज्ञि सिद्धेर्गुणा इत्याद्युत्तरवाक्य-मनर्थकम् । न च तथा प्रयोगाभावः संशयरूपप्रतिबन्धकप्रयुक्त एव न तु स्वाम्यस्याकारणत्वनिबन्धन इति निश्चयार्थं तदिति वाच्यम् । तन्निश्चयस्याप्यनर्थकत्वात् । न च प्रयोगाभावस्यान्यथासिद्धिनिश्चयेन परकीय-तर्कानुमाननिरासार्थतया तस्यावश्यकत्वमिति वाच्यम् । प्रयोगाभावस्यान्यथासिद्धिशङ्कयाऽपि परकीयतर्कानु-मानदूषणसम्भवेन तन्निश्चयस्याप्यनपेक्षितत्वादित्यतस्तावता परकीयतर्कादिर्दूषणसम्भवेऽपि तन्निश्चयाभावे समन्वयानवधारणप्रसक्त्या तदवधारणोपयोगितयोक्तनिश्चयस्यावश्यकतया तदुपपादकतयोत्तरवाक्यस्यार्थवत्त्वादिति भावेन तां शङ्कामुत्थापयति **नन्वस्तीत्यादिना** । विवक्षितनिश्चयोपपादकतया दुर्गमार्थत्वाद्वाक्यं व्याचष्टे **तादृशा इत्यादि** । ननु शुभाभिधायिनामस्तु प्रयोगस्तथाऽपि बद्धादिशब्दप्रयोगस्य कथमुक्तसंशयप्रतिबन्धनिबन्धनत्व-निश्चय इत्यत आह **प्राप्तेति** । प्राप्तिः = प्राप्तम्, अप्राप्तिरप्राप्तमितिभावे क्तप्रत्ययः । प्राप्त्यप्राप्तिनिमित्तको विवेकः प्राप्ताप्राप्तविवेकः । अयं भावः । सत्यपि स्वातन्त्र्ये तन्निमित्तकबद्धादिशब्दप्रयोगाभावस्य संशयनिमित्तका-नर्थप्राप्तावेव सत्त्वात्तन्निमित्तकानर्थाप्राप्तौ च प्रयोगाभावस्याप्यभावादन्वयव्यतिरेकाभ्यां बद्धादिशब्दप्रयोगे शङ्का-निमित्तकानर्थप्राप्तेः प्रतिबन्धकत्वनिश्चयः । न तु स्वातन्त्र्यस्यानिमित्तत्वं तदनुसारेण मन्तव्यम् । अन्यथा शङ्कानिमित्तकानर्थप्राप्त्यभावस्थलेऽपि प्रयोगाभावापत्तेः । अत एव वह्नौ सत्यपि जायमानस्य दाहाभावस्य

मणिसद्भावदशायामेव जायमानत्वात्तदभावे चाभावादन्वयव्यतिरेकाभ्यां दाहं प्रति मणेः प्रतिबन्धकत्वनिश्चयो न तु वह्नेरकारणत्वनिश्चयः । अन्यथोक्तरीत्या तत्रापि दाहं प्रति वह्नेः कारणत्वे, मणिसमवधानेऽपि तदापत्त्या, तदभावेन तस्य तत्राकारणत्वापत्तेरिति द्रष्टव्यम् । **न त्विति** । अन्यथा शुभाभिधायिनां यो नियमेन प्रयोगोऽस्ति सोऽपि न स्यादिति भावः । **अत एवेति** । यतोऽनर्थशङ्कैव प्रयोगाभावकारणं न तु स्वातन्त्र्यस्यानिमित्तत्वमत एवेत्यर्थः ।

ननु निमित्तस्यामुख्यप्रयोगाविनाभावाभाववत्, वक्ष्यमाणरीत्याऽनेकत्र व्यभिचारेण मुख्यप्रयोगाविनाभावस्याप्यभावेन प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोग इति न्यायस्य मुख्यामुख्यप्रयोगविषयतयोक्तरीत्याऽमुख्यमात्रप्रयोगविषयत्वासम्भवेन न्यायविरुद्धतयैव बद्धादिशब्दाप्रयोगस्य समर्थयितुं शक्यत्वेन संशयस्य प्रतिबन्धकत्वाश्रयणेन निमित्तस्य मुख्यप्रयोगाविनाभावेऽपि बद्धादिशब्दप्रयोगाभावस्य समर्थनमनुचितं भाष्यकाराणामित्यतोऽस्य प्रकारस्य स्फुटतया शिष्यैरेव ज्ञातुं शक्यत्वात्तमुपेक्ष्य निमित्तस्य मुख्यप्रयोगाविनाभावं चाङ्गीकृत्याभ्युच्चयेन संशयस्य प्रतिबन्धकत्वाश्रयणेन प्रयोगाभावस्य समर्थनं भाष्यकाराणामुपपन्नमित्याशयेन निमित्तस्य मुख्यप्रयोगाविनाभावं निराकरोति **न चेति** । नापीत्यर्थः । धेनुशब्दप्रवृत्तिनिमित्तस्य धेट इच्चेति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ, उदञ्चनकारशब्दप्रवृत्तिनिमित्तस्य कुलाले च सत्त्वेऽपि महिष्यादौ कुलालादौ च धेनुशब्दस्योदञ्चनकारशब्दस्य चाप्रयोगेन तत्र व्यभिचार इति भावः । तथा च राज्ञि सत्यपि निमित्ते बद्धादिशब्दाप्रयोगो युज्यत इति शेषः । युक्त्यन्तरेणाप्यप्रयोगमुपपादयति **अनन्तानां हीति** । अतित्वाकमतित्वया अतिमाकमतिमया इत्यादीनामित्यर्थः । **लक्षणानीति** = प्रकृतिप्रत्ययविभागकल्पनया प्रवृत्तिनिमित्तानीत्यर्थः । **न चेति** । त्वामतिक्रान्तानां मामतिक्रान्तानामित्याद्यर्थेऽतित्वाकमतित्वया अतिमाकमतिमया इत्यादेरप्रयोगादित्यर्थः । तथा च तद्वद्बद्धादिशब्दानामप्यप्रयोगो युक्त एवेति भावः । न च तेषामप्रयोगेऽपि व्याकरणस्मृत्या व्युत्पादितत्वात्प्रयोगयोग्यताऽस्त्येवेति वाच्यम् । तथा सतीहापि यदधीनो गुणो यस्येत्यादिस्मृत्या व्युत्पादितत्वाद्राज्ञि बद्धादिशब्दप्रयोगयोग्यतायाः सत्त्वेनेष्टापादनप्रसङ्गात् । स्वातन्त्र्यस्य शब्दप्रवृत्तौ हेतुत्वमुख्यत्वयोरुक्तत्वात्पुनस्तदभिधानमनर्थकमित्यतः 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादिप्रतिज्ञातप्रमेयद्वयोपसंहाररूपत्वान्नानर्थक्यमित्याशयेनोत्तरवाक्यं योजयति **तदेवमिति** । प्रमेयद्वयोपसंहाररूपत्वघटनायापेक्षिताध्याहारेण वाक्यं योजयति **यत इत्यादिना** ।

**वा०र०— स्थलेऽपि प्रयोगाभावापत्तेरिति** । दुर्बलेनास्ति प्रबलसन्निधौ तथा प्रयोगे करणादिति भावः । **इति द्रष्टव्यम्** इत्यत्र द्रष्टव्यमित्यधिकं लेखकागतम् । प्रयोगाविनाभावाभाववदिति राज्ञि बद्धादि प्रयोगाभावादिति भावः । **अनेकत्रेति** । धेन्वादिशब्दानां महिष्यादौ मुख्यप्रयोगाभावादिति भावः । **मुख्यामुख्येति** । अविशेषेणोभयविषयतयेत्यर्थः । **उक्तरीत्येति** । अमुख्यप्रयोगविषयत्वादस्य न्यायस्येति पूर्वशङ्कितरीत्येत्यर्थः । **निमित्तस्य मुख्येति** । अत्राविनाभावेऽपीत्यस्याविनाभावमङ्गीकृत्यापीत्यर्थः । तथैवोत्तरत्र वक्ष्यति । ततश्च तमङ्गीकृत्यासंशयस्य प्रतिबन्धकत्वाश्रयणेन कृतं यद्बद्धादिशब्दप्रयोगाभावसमर्थनं तदनुचितम् इति योजना ।





चन्द्रिकोक्तरीत्या सत्यपि निमित्ते मुख्यप्रयोगाभावोदाहरणानि ज्ञेयानीत्याशयेनोपलक्षणया स्वयमुदाहरणद्वयं दर्शयति **धेनुशब्देति**। धेट इच्चेति व्याकरणेति पाठः। धेट इति सूत्रे दाभाभ्यां नुरिति सूत्रान्नुरित्यनुवृत्तेर्धेट् पान इत्यस्माद्धातोर्नुप्रत्ययो भवति इश्चान्तादेश इति प्रतिपादितम्। इच्चेति पाठे इडागम इत्यर्थस्यायोगादिडादेश इत्यर्थकतया व्याख्याने कर्तव्येऽनुबन्धवैय्यर्थ्यं उणादिवृत्त्यादौ धेट इच्चेति तपरस्य पाठस्य दर्शनात् 'धापृवस्यज्यतिभ्यो नः' इति नप्रत्ययानुवृत्तौ धेट इच्चेति विहित नप्रत्ययान्ताः धेनः समुद्रे नः धां च धेनेति (?) धेना नद्यां नदे पुमानिति विश्वोक्तिमेदिन्युक्ता वाक् नाम सुधेनाजिगातीत्यादि वेदप्रयोगविषयाश्च धेनादिशब्दा इति सूत्रान्तरमर्थान्तरपरमिति ज्ञेयम्। चन्द्रिकायामपि धेट इच्चेति सविसर्गो वा पाठः। ततश्च धेटः धयन्ति तामित्यर्थे नुप्रत्यये च आदे उपदेशो शितीति प्राप्तत्वनिवृत्त्यर्थमिकारे चान्तादेश सार्वधातुकेति सूत्रेणार्धधातुके परतो गुणे धेनुरिति सिद्ध्यति। अत्र च पानकर्मत्वं क्षीरस्यैव न गोर्मुख्यं तथापि क्षीरद्वारेणामुख्यस्य तस्य विवक्षया धात्वर्थकर्मता गवि योज्येति प्रतीयते वदन्ति च तथाभियुक्ता इति ज्ञेयम्। उणादीनामध्युत्पन्नप्रातिपदिकता-परिभाषाया अपि 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्यस्ये'त्यष्टमीयसूत्रे कमीत्यनेनैव कंसङ्ग्रहणसिद्धौ पुनः कं सङ्ग्रहणात् ..... अन्यत्रापि तत्तज्ज्ञापकबलेन सिद्धोणादिप्रत्ययान्तानां रूढत्वेन रूढ्यैव महिष्यादा-वप्रयोगोपपत्त्या न व्यभिचार इत्यरुचेरुदाहरणान्तरमाह **उदञ्चनेति**। प्रवृत्तिनिमित्तस्य उदञ्चनकर्तृत्वरूपस्येत्यर्थः। अत्र चोपलक्षणया शब्दान्तरमपि ग्राह्यम्। उदञ्चनकारादीति चन्द्रिकानुसारात् कुलाल इत्यत्रापि तथैव। अत एव कुलालादाविति वक्ष्यतीति ज्ञेयम्। **इत्याद्यर्थ इति**। आदिपदेन त्वामतिक्रान्तो इत्यादेर्ग्रहणं यथायोग्यं क्रमः। एतत्क्रियाव्याख्यानेषु स्पष्टं शेष्यनुसारेण त्वाकं माकं त्वायां मायां त्वयां मायां युष्मयामस्मयां युष्मामस्मा-मित्यादिकं चादिपदेनोभयत्र ग्राह्यं सर्वविभक्तिगताप्रसिद्धप्रयोगोपलक्षणमिदम्। तस्याप्यादिपदेन सङ्ग्रह इत्यप्याहुः **व्याकरणस्मृत्येति**। वाक्यं योजयति ...(?)...ती द्वेधेति पूरणीयम्।

**स०व्र०— तर्कानुमाने इति**। यदि स्वतन्त्र्यं प्रवृत्तिनिमित्तं स्यात् तर्हि तद्वति बद्ध इत्यादिप्रयोगः स्यादिति तर्कः। स्वातन्त्र्यं शब्दप्रवृत्तिनिमित्तं न सम्भवति तद्वति अप्रयुज्यमानत्वादित्यनुमानं चेत्यर्थः। यत्रेति श्रवणात् तत्रेत्यध्याहृत्य तस्यार्थमाह **तत्र हीति**। **प्राप्ताप्राप्तविवेकेनेति**। संशये सति प्रयोगाभावप्राप्तिः। **तयोर्विवेकेनेति**। संशये सति प्रयोगो न प्राप्तः तदभावे प्रयोगो भवति। एवं सति स्वातन्त्र्यस्यानिमित्तत्वं कल्पनीयं प्रयोगाभावं प्रति संशयस्य न कारणत्वं कल्पनीयमित्यविवेके प्राप्ते स्वातन्त्र्येऽनिमित्तत्वे कल्पिते मङ्गलाभिधायिशब्दप्रयोगोऽपि न स्यात् निमित्ताभावात् तस्मात्संशयस्यैव प्रयोगाभावं प्रति कारणत्वं कल्पनीयं बाधकाभावात्। अन्यथा मण्यादिप्रतिबन्धके विद्यमानेऽपि दाहाभावात् वह्नेरपि दाहकारणत्वं न स्यादिति भावः। यद्वा स्वाम्यनिमि-त्तकत्वाविशेषेऽपि शुभाभिधायिनां सर्वेषामेव प्राप्तिः। अशुभाभिधायिनामप्राप्तिः तयोर्विवेकेन = विलक्षण-कारणजन्यत्वविमर्शेनेत्यर्थः। **न तु स्वातन्त्र्यस्येति**। तथात्वे शुभाभिधायिनां यो नियमेन प्रयोगः सोऽपि न स्यादिति भावः। यदुक्तं मुख्यप्रयोगविषयत्वादस्य न्यायस्येत्यादिना प्रवृत्तिनिमित्तसद्भावे मुख्यप्रयोगस्याव-श्यकत्वमिति तत्रापि व्यभिचारं स्वयमाह **न चायं नियमोऽस्तीति**। नापीत्यर्थः। **प्रयोग इति**। मुख्यप्रयोग

इत्यर्थः । **लक्षणानीति** । प्रकृतिप्रत्ययादिविभागेन स्वरूपाणीत्यर्थः । **न चेति** । कर्मण्यणिति विहितनिमित्ते विद्यमानेऽपि उदञ्चनकार इत्यादिप्रयोगो न दृश्यत इति भावः ।

**विठ्ठल०— तर्कानुमान इति** । यदि स्वाम्यं प्रवृत्तिनिमित्तं तर्हि भृत्ये बद्धे मृते वा राजा बद्धो मृत इत्यादि प्रयोगः स्यादिति भावः । साम्यं न प्रवृत्तिनिमित्तं सत्यपि तस्मिन् राज्ञि बद्धादिशब्दप्रयोगादर्शनादित्यनुमानमित्यर्थः । **वादिनोऽपि** सिद्धान्तिनोऽपि । न चास्ति तावदित्यादिना कृतचोद्यस्य किमुत्तरमनेन लब्धमित्यतो भावमाह **प्राप्ताप्राप्तेति** । साम्यनिमित्तकत्वाविशेषेऽपि शुभाभिधायिनां सर्वेषां शब्दानां प्राप्तिः प्रयोगः अशुभाभिधायिनां त्वप्राप्तिः सर्वथा अप्रयोग एवेति ह्यनेनोक्तं भवति । तद्विवेकेन ज्ञायते प्रतिबन्धकरूपाप्रयोगेनार्थशङ्कैवाप्रयोगनिमित्तं नान्यदिति निश्चीयत इत्यर्थः । **अत एव** एवं नियमज्ञापनार्थमेव यदुक्तममुख्यप्रयोगविषयत्वादस्य न्यायस्येत्यादिना प्रवृत्तिनिमित्तसद्भावे मुख्यप्रयोगनैयत्यमिति तत्रापि व्यभिचारं स्वयमाह **न चायमिति प्रयोग इति** । मुख्यप्रयोग इत्यर्थः । **लक्षणानीति** । प्रकृतिप्रत्ययविभागेन तत्स्वरूपाणीत्यर्थः । निमित्तकथनपराणि सूत्राणीति वा । **न च तेषां प्रयोग इति** । तथा ह्युक्तं चन्द्रिकायां धेनुशब्दनिमित्तस्य धेट इच्चेति व्याकरणोक्तस्य धानकर्मत्वस्य महिष्यादौ सत्त्वेऽपि तत्र तदप्रयोगः । तथा च निमित्ते सत्यपि कुलाले कुंभकारशब्दस्येव उदंचनकारादिशब्दानामप्रयोगः तथा राज्ञि सत्यपि निमित्ते बद्धादिशब्दाप्रयोगोऽस्त्वित्यादि ।

**चषकः— प्राप्ताप्राप्तेति** । येन नाप्राप्ते यो विधिरित्यादाविव भावसाधननिष्ठान्तोऽयं प्राप्तशब्दः । प्रतिषेधार्थश्च नञ् । प्राप्तितदभावनिमित्तको विवेक इत्यर्थः । शुभतदितराभिधायिनां स्वातन्त्र्यनिमित्तकत्वावैशेष्येऽपि शुभाभिधायिन एव प्रयुञ्जते नातादृशानिति तेन जानीमस्तदप्रयोगेऽन्यदेव निमित्तं नैतस्यानिमित्तत्वमिति भावः । **न चायं नियम इति** । धेनुपदप्रवृत्तिनिमित्तधानकर्मत्वस्य महिष्यादिसाधारण्येऽपि तत्र तदप्रयोगादिति भावः । **लक्षणानीति** । प्रकृतिप्रत्ययविशदीकरणेन प्रवृत्तिनिमित्तानीत्यर्थः । 'पाकमूलयोः कुणब्जे ह्चौ चे'त्यनुशासनेऽपि पीलुकुणः कर्णजाहमित्याद्यप्रयोगादिति भावः।

१३ **सु०— किमतो यद्येवमित्यत आह अत इति ।**

**अनु०— अतो दोषातिदूरत्वात्संशयस्याप्यसम्भवात् ॥**
**दोषाणां विष्णुगत्वस्य प्राज्ञबुद्धिव्यपेक्षया ।**
**स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दास्तु(श्च) विष्णवि ॥**

यतः स्वातन्त्र्यं कारणं, मुख्यं च, अतः **स्वातन्त्र्यार्थमभिप्रेत्य** दुःखिबद्धावराद्या **दोषशब्दा अपि** विष्णवि = विष्णौ, 'जीवा एव तु दुःखिन' (.?.) इत्यादौ, प्रयुज्यन्त इति





सम्बन्धः । सत्यपि निमित्ते यथा 'राजा बद्ध' इत्यादिप्रयोगाभावस्तथा 'विष्णुर्दुःखी'-त्यादिप्रयोगाभावोऽपि कुतो न भवेत्, अत्रापि पाक्षिकस्य विष्णुवैष्णवभयस्य प्रतिबन्धकत्वसम्भवादित्यत उक्तम् **दोषेति ।**

'निरनिष्टो निरवद्य' इत्यादिश्रुतेर्विष्णोः(ष्णौ) **दोषातिदूरत्वनिश्चयात् । प्राज्ञबुद्धिव्यपेक्षया दोषाणां विष्णुगत्वस्य** तद्विषयस्य **संशयस्यासम्भवात्** । निमित्तसद्भावात्प्रतिबन्धकाभावादपीत्यपेरर्थः ।

एतदुक्तं भवति । सत्यपि निमित्ते वैदिकप्रयोगनिवृत्तिर्हि विष्णुवैष्णव(वेभ्यो)-भयात्स्यात् । तत्कारणं च तदप्रीतिः । तत्रापि हेतुर्विष्णोरनेन दोषित्वमुच्यत इति संशयः । तस्य च निमित्तं वाक्यस्योभयार्थप्रतीतिजनकत्वम् । तस्याप्युभयत्र योग्यतादिसद्भावः । न चासावस्ति प्रकृते, विष्णुवैष्णवानां परमेश्वरनिर्दोषतानिश्चयवत्त्वेन योग्यताध्यवसायानुपपत्तेः, अन्यथा जरद्गवादिवाक्येऽपि तत्प्रसङ्गात् ।

यद्यपि वाक्यतात्पर्याज्ञे(ष्व)प्रीतिसम्भवस्तथाऽपि सदभिप्रायवाक्यप्रयोगनिवृत्तौ किमायातमिति । एतदप्युक्तम् **प्राज्ञबुद्धिव्यपेक्षयेति ।**

**स्वस्य परमवैदिकताख्यापनाय विष्णवीति वैदिकप्रयोगः ।**

**परि०— उभयार्थेति** । दोषवत्त्वतत्प्रतिस्वातन्त्र्यरूपोभयार्थप्रतीतिजनकत्वमित्यर्थः । विष्णाविति वाच्ये विष्णवीति कथमित्यत आह **स्वस्य परमवैदिकतेति** । 'मदे सुतस्य विष्णवी'ति वेदे श्रुतो वैदिकः प्रयोगः ।

**गु०दी०—** वैदिकसकलपदसमन्वये वेदस्थदुःखिबद्धादिपदानामपि भगवति समन्वेतव्यत्वादिति भावेनोक्तं **जीवा एव तु दुःखिन इत्यादाविति** ।

**यादु०— अन्यथेति** । वाक्यार्थव्यतिरेकनिश्चयेऽपि योग्यताध्यवसाय इत्यर्थः । **वाक्यतात्पर्याज्ञ इति** । विष्णुर्दुःखीत्यादि यद्वाक्यं तस्य यत्तात्पर्यमन्यगतदुःखादिनियामकताप्रतिपादकत्वरूपं तदज्ञ इत्यर्थः । **तथाऽपीति** । तं प्रति प्रयोगनिवृत्तिसम्भवेऽपीत्यर्थः । सन्त उक्ततात्पर्यज्ञानिनस्तदभिप्रायकास्तान्प्रति प्रवृत्तो योऽयं वाक्यप्रयोगस्तन्निवृत्तिसाधकं किमपि नागतमित्यर्थः । अयं भावः । ये वाक्यतात्पर्यं न जानन्ति तान्प्रति प्रयोगनिवृत्ति-





रिष्टैव । ये तु तज्जानन्ति तान्प्रति न प्रयोगनिवृत्तिः । अप्रीत्यादेः प्रयोगप्रतिबन्धकस्याज्ञानिगतत्वेऽपि ज्ञानिष्वभावादिति । **वैदिकः प्रयोग इति** । 'अस्येदिन्द्रो वा वृधे वृष्ण्यंशवो मदे सुतस्य विष्णवी'त्यादौ वेदे प्रयोगदर्शनादिति भावः । अन्यथा 'अच्च घेरि'त्यस्य प्रसङ्गेन विष्णाविति स्यादिति ध्येयम् ।

**वं०प०— वैदिकप्रयोगनिवृत्तिरिति** । दुःखस्वामित्वाद् दुःखीत्येवं समीचीनाभिप्रायोपेतं यद्वाक्यं तस्य या प्रयोगनिवृत्तिरित्यर्थः । **अन्यथेति** । प्रतिपाद्यार्थस्य बाधितत्वनिश्चयेऽपि यदि योग्यताऽध्यवसायः स्यादित्यर्थः । प्राज्ञबुद्धिव्यपेक्षयेत्यस्य व्यावर्त्यमाह **यद्यपीति** ।

**आनन्दः— जरद्गवादिवाक्य इति** । अयोग्यतानिश्चयेऽपि संशयश्चेदित्यर्थः ।

**श्रीनिधि०—** अन्यथा जरद्गवादिति योग्यताभावेऽप्यन्वयप्रतीतिजनकत्वे **एतदप्युक्तमिति** । **प्राक् प्राज्ञबुद्धिव्यपेक्षयेति** । श्रोतॄणां देवतानां प्राज्ञानां विदोषाणां विष्णुगतत्वविषयसंशयो न भवतीति विष्णुवैष्णवदेवतादिकोपाभावात् प्रयोगो न निवर्तत इत्युक्तम् । इदानीं तु वक्तॄणां तात्पर्याज्ञाने विष्णुवैष्णवानां कोपो भवत्येव । तेष्विति शङ्कायां तेषां प्रयोगनिवृत्तिरिष्टैव । अप्राज्ञबुद्धित्वात् तेषां तात्पर्यज्ञानानां प्रयोगो भवत्येवेत्येतज्ज्ञापनार्थमपि प्राज्ञबुद्धिव्यपेक्षयेत्युक्तमिति भावः ।

**शे०वा०—** शब्दप्रवृत्तिहेतुत्वमुख्यत्वव्युत्पादनप्रयोजनाभिधायकत्वान्नोत्तरवाक्यवैयर्थ्यमित्याशयेन स्वातन्त्र्यस्य शब्दवृत्तिहेतुत्वादिव्युत्पादनस्य कैमर्थ्याकाङ्क्षामुत्थापयति **किमत इति** । स्वातन्त्र्यं मुख्यकारणमिति प्रकृतस्वातन्त्र्यहेतुत्वतन्मुख्यत्वयोरत इत्यनेन परामर्श इत्याशयेनाह **यत इति** । अत इत्यस्य योग्यतया व्यवहितेनैव सम्बन्धमाह **अत इत्यादि** । दुःखिबद्धावराद्या इत्युपक्रमानुसारेणोक्तं **दुःखिबद्धेत्यादि** । दुःखिबद्धावराद्या इत्यत्र दोषशब्दत्वमेवादिशब्दसङ्ग्राह्यतावच्छेदकतयाऽभिमतमतो नातिप्रसङ्ग इत्यभिप्रेत्य दोषशब्दा इत्युपसंहारे उक्तमिति द्रष्टव्यम् । 'घेर्ङिती'त्यस्य 'अच्च घेः' इत्यनेन बाधिततयाऽप्रसक्तेराह **विष्णवीति** । मूले विष्णवीति प्रयोगस्तु छान्दस इति भावः । एतावतैव प्रयोजनाभिधानाद्दोषातिदूरत्वादित्यादेर्वैयर्थ्यमित्यतः प्रतिबन्धकाभावोपपादकत्वान्न तद्वैयर्थ्यमिति भावेन प्रतिबन्धकशङ्कामुत्थापयति **सत्यपीति** । विष्णुगत्वस्य संशयस्येत्यन्वयमित्यभिप्रेत्य कथं तर्हि सामानाधिकरण्यमित्यतो विषयविषयिभावः षष्ठ्यर्थः सम्बन्ध इत्याह **तद्विषयस्येति** । 'संशयस्यापी'त्यपिशब्दस्य यथाश्रुतस्यानर्थक्याद्भिन्नक्रमत्वमाश्रित्य तदर्थमाह **निमित्तेति** । अनेन संशयस्यासम्भवादपीत्यपिशब्दान्वय उक्तो भवति । विष्णोर्दोषातिदूरत्वस्य स्वरूपसतो न संशयाभावहेतुत्वं अप्रयोजकत्वात्, निश्चितस्यापि न साक्षादतोऽपेक्षितसाध्याध्याहारेण संशयाभावोपपादनपूर्वकं प्रतिबन्धकाभावमुपपादयितुमाह **एतदिति** । **अन्यथेति** । वाक्यार्थव्यतिरेकनिश्चयेऽपि योग्यताध्यवसाय इत्यर्थः । **तत्प्रसङ्गादिति** । योग्यताध्यवसायप्रसङ्गादित्यर्थः । **वाक्यतात्पर्याज्ञ इति** । विष्णुर्दुःखीत्यादिवाक्यस्य यत्तात्पर्यमन्यगतदुःखादिनियामकताप्रतिपादकत्वरूपं तज्ज्ञानशून्य इत्यर्थः । वाक्यतात्पर्याज्ञानिनि अप्रीत्यादेः सम्भवेन





तत्प्रतिबद्धत्वाद् दुःखीत्यादिवाक्यप्रयोगासम्भवेऽपि वाक्यतात्पर्यज्ञानिनामप्रीत्याद्यसम्भवेन न तान्प्रति विष्णुर्दुःखीत्यादिवाक्यप्रयोगनिवृत्तिप्राप्तिरित्याह **तथाऽपीति** । सन् अभिप्रायो = वाक्यतात्पर्यं येषां ते सदभिप्रायाः । वाक्यतात्पर्यज्ञानिन इति यावत् । तान्प्रतीति योज्यम् । यं प्रति अप्रीत्यादि प्रतिबन्धकं न तं प्रति दुःख्यादिप्रयोगः । यं प्रति दुःख्यादिप्रयोगो न तं प्रति अप्रीत्यादि प्रतिबन्धकमपीति भावः । दोषशब्दाश्च माधव इति वा दोषशब्दाश्च केशव इति वा पादपूरणे कर्तुं शक्येऽपि यद्भाष्यकारीयं विष्णवीति वचनं न तत्पादपूरणार्थं नापि महाशास्त्रप्रयोक्तॄणामसाधुत्वाज्ञानमूलकं तत्कल्पयितुं शक्यं किन्तु प्रयोजनान्तरार्थमेवेत्यभिप्रेत्य तत्प्रयोजनमाह **स्वस्येति** । 'अस्येदिन्द्रो वा वृधे वृष्ण्यं शवो मदे सुतस्य विष्णवी'त्यादिवैदिकप्रयोगदर्शनादिति भावः । छन्दस्त्वादच्च घेरित्यस्याप्रवृत्त्या घेर्ङितीत्यस्यैव च प्राप्त्या गुणेऽवादेशे च विष्णवीति रूपनिष्पत्तिर्द्रष्टव्या ।

**वा०र०— छान्दस इति भाव इति** । तादृशप्रयोगप्रयोजनं तूत्तरत्र मूल एव व्यक्तमिति भावः । **विषयविषयीति** । व्यधिकरणषष्ठ्या वेते इति सूचितमनेन भवति **न साक्षादिति** । संशयाभावहेतुत्वमिति वर्तते । **जरद्गवादीति** मूलम् । 'जरद्गवः कम्बलपादुकाभ्यां द्वारिस्थित' इत्यादि वाक्यं जरद्गवादिवाक्यम् । तच्च वाक्यार्थचन्द्रिकायामेव जिज्ञासाधिकरणपूर्वपक्षे प्रसिद्धत्वेनोक्तम् । 'शङ्खः कदल्यामि'त्येतदेवोदाहृतमिति नेह टीकाकृदाहृतवानिति ज्ञेयम् । विष्णुशब्दस्य केशवादिनामसु पाठमाश्रित्य माधवकेशवपदोपादानम् । इतीत्यस्येति प्रकारेणेत्यर्थाद्वा(?)पनशब्दस्य ग्रहणमिति प्रतीयते (?) । **विष्णवीत्यादीति** । अस्येदिन्द्र इति मन्त्रः पञ्चमाष्टके सप्तमाध्याये । आदिपदेन षष्ठाष्टकप्रथमाध्यायगतं 'यत्सोममिन्द्रविष्णवी'त्यस्य ग्रहणम् ।

**स०व्र०— अन्यथेति** । योग्यताऽऽद्यभावेऽपि वाक्ये प्रयोगनिवृत्तौ कारणाभावेन प्रयोगोऽस्त्येवेति तदर्थप्रतीतौ अङ्गीक्रियमाणायामित्यर्थः । **यद्यपीति** । सन् अभिप्रायो यस्य स तथोक्तः । तं प्रति वाक्यप्रयोगः **वैदिकप्रयोग इति** । 'अस्येदिद्रो वा वृधे वृष्ण्यं शवो मदे सुतस्य विष्णवी'त्यादौ वेदे प्रयोगदर्शनादिति द्रष्टव्यम् । अन्यथाऽच्च घेरित्यस्य प्रसङ्गे विष्णाविति भवेदिति भावः ।

**विठ्ठल०—** राज्ञोऽमङ्गलाभिधानस्य राजतत्पुरुषाप्रीतिहेतुत्वादिति प्रागुक्तत्वेन तदनुसारेणोक्तं **विष्णुवैष्णवभयस्येति** । **प्रवृत्तिनिमित्तसद्भावादिति** । स्वातन्त्र्यरूपप्रवृत्तिनिमित्तसद्भावात् संशयकारणत्वरूपप्रतिबन्धकाभावादित्यर्थः । संशयकारणत्वस्य प्रतिबन्धकत्वमुपपादयन् प्रकृते तदभावमुपपादयति **एतदुक्तं भवतीत्यादिना** । **तत्कारणं** भयकारणम् । **उभयार्थेति** । तद्गतत्वलक्षणदोषवत्वस्वातन्त्र्यरूपोभयार्थेत्यर्थः । **न चासाविति** । परमात्मनो दोषित्वयोग्यतासद्भावः प्रकृते नास्तीत्यर्थः । **अन्यथेति** । योग्यतावैपरीत्यनिश्चयेऽपि योग्यताध्यवसाय इत्यर्थः । **तथापीति** । तात्पर्याज्ञं प्रति प्रयोगनिवृत्तिसंभवेऽपीत्यर्थः । **सदिति** । सन्तः उक्ततात्पर्यज्ञानिनः तदभिप्रायकः तान्प्रति प्रवृत्तो योऽयं **वाक्यप्रयोगः** । तन्निवृत्तिसाधकं किमपि नागतमित्यर्थः । अथवा सन् अभिप्रायो येषां ते सदभिप्रायकाः तद्वाक्यप्रयोगनिवृत्तिसाधकं किमपि नास्तीत्यर्थः । अयं भावः । य उक्ततात्पर्याज्ञानिनः । तान् प्रति प्रयोगनिवृत्तिरिष्टैव । एतदज्ञानिनः तान् प्रति योगनिवृत्तिः तत्प्रति-

बन्धकारीत्यादेस्तेष्वभावादिति विष्णाविति वक्तव्ये विष्णाविति कथमित्यत आह **स्वस्येति** । मदेसुतस्य विष्णवीत्यादौ वेदे प्रयोगदर्शनादिति भावः । उपलक्षणं चैतत् । मङ्गलामङ्गलेऽन्यत्रेत्यत्र प्रगृह्य संज्ञया प्रकृतिवद्भावानाश्रयणमपि तथेति द्रष्टव्यम् । मणीवादित्वेन निषेधो वा । अत एव तत्त्वनिर्णयटीकायां स्वातन्त्र्यपूर्णतेऽल्पत्वेत्यत्र एवमेव समाहितम् ।

**चषकः— वाक्यतात्पर्याज्ञेष्विति** । समानविभक्तिकविष्णुदुःखिपदघटितवाक्यस्य यत्तात्पर्यमन्यगतदुःखादिनियामकताप्रतिपादकत्वरूपं तदजानानेष्वित्यर्थः ।

**॥ इति 'स्वातन्त्र्यस्य शब्दवृत्तेर्मुख्यकारणत्वम्' इत्यस्य प्रयोगादिना उपपादनम् ॥**

* * *

**॥ ततश्च उक्तार्थे श्रुतिसम्मतिः ॥**

१४ **सु०— अत्र श्रुतिसंमतिमप्याह वासुदेवेति ।**

**अनु०— वासुदेवश्रुतिश्चाह नैव विष्णावमङ्गलम् ।**
**मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत् ॥**
**स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ।**

**आह** एतमर्थमिति शेषः । यतो **नैव विष्णौ अमङ्गलं** दुःखादिकमस्ति । **ततो** योग्यताविरहेणार्थान्तरप्रतीत्यभावात् **स्वातन्त्र्यापेक्षया विष्णावमङ्गलोक्तितो दोषो**ऽनर्थो **नास्ति** । तस्माद् दुःख्यादिशब्दा अपि विष्णौ वेदे प्रयुज्यन्त इति शेषः । अन्यत्र तु राजादौ **यतो मङ्गलामङ्गले** सम्भवतोऽतो योग्यतासम्भवेनार्थान्तरप्रतिभासनात्पाक्षिकानर्थशङ्कया तत्रामङ्गलं राजा बद्ध इत्यादिकं **न वदे**दित्यर्थः ।

एकस्यैव शब्दस्य क्वचिद्दोषप्रत्यायकत्वेनानर्थहेतुत्वं क्वचित्तदभाव इत्येतद् दृष्टान्तेन बोधयति **बहुभुक्त्वमिति ।**

**बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित् ॥**





यथा बहुभुग्देवदत्त इत्युक्ते बहुभोगवानिति निन्द्यश्चेति प्रतीयते, 'अस्वर्ग्यं चातिभोजनमि'ति (श्रुतेः) स्मृतेः, उभयस्यापि देवदत्ते सम्भवेन योग्यत्वात् । अत एव देवदत्ताद्भीरुणा नैवं प्रयुज्यते । परमेश्वरे तु संसारधर्माणामत्यन्तासम्भवान्न दोषप्रतिभासः, किन्तु सर्वसंहर्तृत्वादिकमेव प्रतीयत इति (। तत्र) तत्प्रयोगः । दार्ष्टान्तिकमाह **एवमिति** ।

**एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ।**
**नैव दोषा हरौ**

**दोषा** दोषहेतवः । प्रथमदृष्टान्तस्यापि दार्ष्टान्तिकमध्याहार्यम् ।

कथं तर्हि परमेश्वरे दुःखित्वादिवेदनमनर्थहेतुत्वेनोच्यतेऽसन्नेव स भवतीत्यादावित्यत आह **तद्वद्बुद्ध्येति** ।

**तद्वद्बुद्ध्योक्ता दोषकारिणः ॥**

**तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः ॥**

दुःखादीनां तद्वत्तत्वविवक्षयेत्यर्थः । **तस्मादिति** श्रुतिः स्वोक्तार्थमुपसंहरति । अतोऽव्यक्तादिशब्दवाच्यः परमात्मेति सिद्धम् ॥

**परि०**— विष्णौ त्विति तुशब्दस्यान्वयेनानुवादोऽन्यत्र त्विति । मूले श्रुतित्वादेव ईदूदेद्द्विवचनमिति प्रगृह्य संज्ञानाश्रितेति भावः ।

**उभयस्यापि देवदत्ते सम्भवेनेति** । बहुभुक्त्वनिन्द्यत्वरूपोभयस्येत्यर्थः । **दार्ष्टान्तिकमाहेति** । बहुभुक्त्वं यथेत्यव्यवधानेनोक्तदृष्टान्तस्य दार्ष्टान्तिकमाह वासुदेवश्रुतिरित्यर्थः । **प्रथमदृष्टान्तस्यापीति** । राज्ञि बद्धमृतादिशब्दप्रयोगे दोषो यथा एवं हरौ बद्धमृतादिशब्दाः स्वातन्त्र्यापेक्षया प्रयुज्यन्ते चेन्न दोष इत्येतदध्याहार्यमित्यर्थः । यद्वा बहुभुक्त्वमित्यादिदृष्टान्तद्वयम् । बहुभुक्त्वं यथा नृषु दोषस्तथा राज्ञि बद्धादिशब्दप्रयोगो दोष इति दार्ष्टान्तिकमध्याहार्यमित्यर्थः । हरौ यथा न दोष इति द्वितीयदृष्टान्तस्यैवमित्यादिदार्ष्टान्तिकमित्यर्थः । **दुःखित्वादीति** । 'असद्ब्रह्मेति चेद्वेद' इत्यादिनोक्त-





दुःखित्वादिवेदनमित्यर्थः । 'जीवान्यत् ब्रह्म असत्' = 'दुःखिजीवात्मकमेव ब्रह्म' इति वेदनस्य दुःखित्ववेदनरूपत्वादिति भावः । 'अतो दोषातिदूरत्वात्' इति भाष्यकृतोपसंहृतत्वादाह **श्रुतिः स्वोक्तार्थमिति** । अधिकरणार्थमुपसंहरति **अत इति** ।

**गु०दी०— वैदिकप्रथमदृष्टान्तस्यापि दार्ष्टान्तिकम्** इत्यत्र यथा नृषु बहुभुक्त्वं दोष इति प्रथमदृष्टान्तस्य तथा राज्ञि बद्धमृतादिशब्दा अपि दोषा इति दार्ष्टान्तिकमध्याहार्यमित्यर्थः।

**यादु०— मङ्गलामङ्गलेऽन्यत्रेति** मूले ईदूदेद्द्विवचनमिति प्रगृह्यसंज्ञाभावः छान्दसः । मणीवादित्वेन प्रकृतिभावनिषेध इति वा ज्ञातव्यम् ।

**दार्ष्टान्तिकमाहेति** । नैव हरौ क्वचिदित्यनेनोक्तस्य द्वितीयदृष्टान्तस्य दार्ष्टान्तिकमाहेत्यर्थः । **प्रथमदृष्टान्तस्येति** । 'बहुभुक्त्वं यथा दोषो नृष्वि'त्यनेनोक्तस्य प्रथमदृष्टान्तस्याप्येवं बद्ध इत्यादिकं राज्ञि दोषप्रतीतिजनकमतो न तत्र प्रयोगार्हमिति दार्ष्टान्तिकमध्याहार्यमित्यर्थः । **दुःखित्वादिवेदनमिति** । यद्यपि तैत्तिरीयभाष्येऽसन्नेवेति वाक्यं 'पञ्चरूपं च तद्ब्रह्म जीवादन्यत्र विद्यते । इति ये तु विजानन्ति तेऽसन्तस्त आलयाः' इति ऐक्यज्ञानस्यैवानर्थहेतुताप्रतिपादकतया व्याख्यातं न परमेश्वरे दुःखित्वादिवेदनस्यानर्थहेतुताप्रतिपादकतया । तथाऽपि 'नासतो विद्यतेऽभावो नाभावो विद्यते सतः' इत्येतद्व्याख्यावसरे भावाभावशब्दपर्यायसदसच्छब्दयोः सुखदुःखादौ प्रयोगप्रदर्शनार्थमाचार्यैर्गीतातात्पर्ये अस्य वाक्यस्य गृहीतत्वाद्ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःख्येव भवतीत्यप्येतद्वाक्यस्यार्थो वर्णनीय इत्याशयेनैवमुक्तमित्यवधेयम् ॥

**वं०प०— इत्यादाविति** । 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः' इति वचनेन सच्छब्दस्य सुखवाचित्वेनासच्छब्दस्य दुःखवाचित्वाद्ब्रह्मासत् दुःखीति वेद चेत्स्वयमपि दुःखी भवतीत्यर्थः ॥

**आनन्दः— प्रथमदृष्टान्तस्यापीति** । राज्ञि यद्वत्पराजय इति प्रथमोदाहृतदृष्टान्तस्येत्यर्थः । यस्य प्रथमतत्त्वं बहूक्तमिति वासुदेवश्रुत्युदाहृतदृष्टान्तानुसारेण द्रष्टव्यम् । **दार्ष्टान्तिकमिति** । परमात्मन्यपि दुःखादिनियामकत्वेन दुःखादिशब्दप्रवृत्तिरिति दार्ष्टान्तिकमित्यर्थः ।

**श्रीनिधि०— बहुभोगवानिति**। निन्द्यश्चेति प्रतीयत इति शब्दस्य उभयप्रतीतियोग्यतावत्वादिति भावः। स्वर्ग्यं स्वर्गसम्बन्धि सम्बन्धश्च सादृश्यसाधनभावः। स्वर्गसाधनं न भवतीत्यर्थः। **असन्नेव स भवतीत्यादाविति**। यद्यपीदं तैत्तिरीयभाष्ये अन्यथा व्याख्यातम्। तथापि गीतातात्पर्ये 'नासतो विद्यते भावो नाभावो विद्यते सत' इति तद्व्याख्यानावसरे एवं व्याख्यातमिति न दोषः।

**शे०वा०— अत्रेति** । दुःख्यादिशब्दानां ब्रह्मणि दोषानभिधायकतया प्रयोज्यत्वं राजादौ तु तदभिधायकतयाऽप्रयोज्यत्वमिति यदुक्तमत्रेत्यर्थः । तत इत्युक्तत्वाद्यत इत्यस्य लाभं तत इत्यस्यावृत्तिं





अपेक्षितशेषपूरणं चाभिप्रेत्य योजयति **यत इत्यादिना** । **दृष्टान्तेनेति** । तथा च दृष्टातोपदर्शनार्थत्वान्नोत्तर-वाक्यवैयर्थ्यमिति भावः । ननु बहुभुगितिशब्दस्य हरौ यथा न दोषप्रत्यायकत्वमत एव तत्र प्रयोज्यत्वं चेति द्वितीयदृष्टान्तस्यैवं दुःख्यादिशब्दा हरौ न दोषप्रत्यायकास्तत एव तत्र प्रयोज्या इति दार्ष्टान्तिकाभिधानेऽपि बहुभुगितिशब्दस्य देवदत्ते दोषप्रत्यायकत्वं तत एवाप्रयोज्यत्वं च यथेति प्रथमदृष्टान्तस्य दार्ष्टान्तिकानुक्ते-र्न्यूनत्वमित्याशङ्क्यैवं बद्धादिशब्दा राजादौ दोषप्रत्यायकास्तत एवाप्रयोज्याश्चेति दार्ष्टान्तिकमध्याहार्यमित्याह **प्रथमदृष्टान्तस्यापीति** । **दुःखित्वादिवेदनमिति** । यद्यपि तैत्तिरीयभाष्येऽसन्नेवेति वाक्यं 'पञ्चरूपं च तद् ब्रह्म जीवादन्यन्न विद्यते । इति ये तु विजानन्ति तेऽसन्तस्तम आलया' इत्यादिनैक्यादिज्ञानस्यैवानर्थादिहेतुता-प्रतिपादकतया व्याख्यातम् । न तु परमेश्वरे दुःखित्वादिवेदनस्य, तथाऽपि 'नासतो विद्यतेऽभावो नाभावो विद्यते सत' इत्येतद्व्याख्यानावसरे भावाभावपर्याययोः सदसच्छब्दयोः सुखदुःखादौ प्रयोगप्रदर्शनार्थमाचार्यैर्गीता-तात्पर्यनिर्णयेऽस्य वाक्यस्योदाहृतत्वात्तदनुरोधेन तत्रैव ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःख्येव भवति ब्रह्म सुखरूपमिति वेद चेत्तर्ह्येनं वेत्तारं सुखिनं विदुरित्येतद्वाक्यव्याख्यानस्य तदभिमतत्वसिद्धिरित्याशयेनैवमुक्तमिति ध्येयम् । 'अतो दोषातिदूरत्वादि'त्युपसंहृतत्वात् 'तस्मात्ते दोषशब्दाश्चेति' पुनरुपसंहारानर्थक्यमित्यतो नायं भाष्यकारीयोपसंहारः किन्तु वासुदेवश्रुतिश्चाहेति सम्मतितयोदाहृतश्रुतेरेवेति नानर्थक्यमित्याह **तस्मादितीति** । **स्वोक्तमिति** । नैव विष्णावमङ्गलमित्यादिना स्वोक्तमित्यर्थः ।

**वा०र०— दुःखित्वादिवेदनस्येति** । अनर्थहेतुतेत्यादेरत्रापि सम्बन्धः । तत्रैव गीतातात्पर्यनिर्णय एव तदभिमतत्वेति भाष्यकाराभिमतत्वेत्यर्थः ॥

**स०व्र०—** मङ्गलामङ्गलेऽन्यत्रेत्यत्र 'ईदूदेद्द्विवचनमि'ति प्रगृह्यसंज्ञाभावः वेदत्वाद्वा, मणीवादित्वेन प्रकृतिभावनिषेधो द्रष्टव्यः ।

**उभयस्यापीति** । बहुभुक्त्वनिन्द्यत्वयोरित्यर्थः । यद्वा निन्द्यत्वास्वर्ग्यत्वयोरित्यर्थः । **दार्ष्टान्तिकमाहेति** । नैव हरौ क्वचिदिति अनेनोक्तस्य यथा बहुभुक्परमेश्वर इति उक्ते संहर्तृलक्षणो गुण एव प्रतीयते न दोष इति द्वितीयदृष्टान्तस्य दार्ष्टान्तिकमाहेत्यर्थः । **प्रथमदृष्टान्तस्यापीति** । बहुभुक्त्वं यथा दोषो नृष्वित्यनेनोक्तस्य बहुभुक् देवदत्त इत्युक्ते बहुभोगवान् इति निन्द्य इति प्रतीयत इत्यस्य प्रथमदृष्टान्तस्यापि वं राजा बद्ध इत्यादयोऽपि दोषप्रतीतिहेतव इति न प्रयोगार्हा इति दार्ष्टान्तिकमध्याहार्यमिति भावः । परमेश्वरे दुःखित्वादि-वेदनमिति । 'पञ्चरूपं च तद्ब्रह्म जीवादन्यन्न विद्यते । इति ये तु विजानन्ति तेऽसन्तस्तम आलया' इति व्याख्यातत्वेऽपि जीवैक्यवेदने दुःखित्वादिवेदनमवर्जनीयमेवेत्याशयेनैवमुक्तमित्यवधेयम् ।

**विठ्ठल०— उभयस्येति** । अत्यज्ञानत्वनिन्द्यत्वरूपोभयस्येत्यर्थः । निन्द्यत्वानिन्द्यत्वोभयस्येति वा । **दार्ष्टान्तिकमाहेति** । नैव हरौ क्वचिदित्यनेनोक्तस्य यथा बहुभुक् परमेश्वर इति प्रयुक्ते संहर्तृत्वलक्षणो गुणो लभ्यते ।

**न दोष इति**। द्वितीयदृष्टान्तस्य दार्ष्टान्तिकमाहेत्यर्थः। **प्रथमदृष्टान्तस्यापीति**। बहुभुक्तं यथा दोषो नृष्वित्यनेनोक्तस्य प्रथमदृष्टान्तस्यापि। एवं राजा बद्ध इत्यादयोऽपि दोषप्रतीतिहेतवो अतो न प्रयोग इति दार्ष्टान्तिकमध्याहार्यमित्यर्थः। **दुःखित्वादिवेदनमिति**। यद्यपि तैत्तिरीयभाष्ये असन्नेवेति वाक्यं 'पञ्चरूपं च तद्ब्रह्म जीवादन्यन्न विद्यत। इति ये तु विजानन्ति ते सन्तः तम आलयाः' इत्यैक्यज्ञानस्यैवानर्थहेतुत्वप्रतिपादकतया व्याख्यातं न परमेश्वरे। दुःखित्वादिवेदनस्य तथापि नासतो विद्यते भाव इत्येतद्वाक्यव्याख्यानावसरे भावाभावपर्यायसदसच्छब्दयोः सुखदुःखादौ प्रयोगदर्शनार्थं श्रीमदाचार्यैः गीतातात्पर्ये अस्य वाक्यस्य गृहीतत्वाद्ब्रह्म दुःखीति वेद चेत्तर्हि स वेत्ता दुःखी च भवतीत्येतद्वाक्यार्थे वर्णनीय इत्याशयेनैवमुक्तमित्यवसेयम्। अतो दोषातिदूरत्वादिति भाष्यकृतोपसंहृतत्वादाह **तस्मादिति श्रुतिरिति**। अधिकरणार्थमुपसंहरति **अत इति**।

**॥ इति 'स्वातन्त्र्यस्य शब्दवृत्तेर्मुख्यकारणत्वम्' इत्यस्योपपादने उक्तार्थे श्रुतिसम्मतिः॥**

**॥ इति 'स्वातन्त्र्यस्य शब्दवृत्तेर्मुख्यकारणत्वम्' इत्यस्योपपादनम्॥**

**॥ इति तदधीनत्वनिमित्तकप्रयोगप्रदर्शनम्॥**

**॥ इति एतत्सूत्रपरिहार्यशङ्का तन्निरासश्च॥**

**॥ इति 'ॐ तदधीनत्वादर्थवत् ॐ' इति सूत्रव्याख्यानम्॥**

## ॥ इति आनुमानिकाधिकरणम्॥

## ॥ १-४-१ ॥

***



## ॥ अथ ज्योतिरुपक्रमाधिकरणम् ॥

### ॥ १-४-२ ॥

**॥ अथ कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयः ॥**
**॥ तत्रादौ कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयो नेति पूर्वः पक्षः ॥**

### ब्र०सू०— ॥ ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॐ ॥

१५ **सु०—** 'ज्योतिष्टोमेन स्वर्गकामो यजेत', 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादि-कर्मकाण्डगते वाक्ये सन्देहः किमेतत् ब्रह्मणि समन्वेत्युत नेति । नेति पूर्वः पक्षः ।

तथाहि । किमत्र वाक्यार्थो ब्रह्म किंवा पदार्थः । नाद्यः । ज्योतिष्टोमकर्तव्यतादेर्वाक्यार्थतया प्रतीतेः । न द्वितीयः, पदानि हि अमूनि किं रूढ्या ब्रह्मवाचीनि किंवा योगेन । आद्येऽपि किं प्रसिद्धवसन्ताद्यात्मकत्वेन तत्पदानां ब्रह्मणि रूढिराश्रीयते उत (एवमेव) पृथगेव । नाद्यः, तेषां जडत्वानित्यत्वादिना ब्रह्मणोऽपि दूषणप्रसङ्गात् । न द्वितीयः, अनेकार्थतास्वीकारस्य अन्याय्यत्वात् । न हीश्वरे वसन्तादिशब्दानां रूढिः प्रमाणवती । न च रूढ्या समन्वयसमाश्रयणे प्रयोजनमस्ति, गुणपूर्त्यसिद्धेः । नापि योगेन, योगस्य रूढेर्जघन्यवृत्तित्वेन मुख्यार्थताऽसिद्धेः । न चैवंविधं योगमपि पश्यामः ॥ योगे च प्रकृत्यादिविभागः पूर्वोत्तरपदविभागश्चाङ्गीकरणीयः । तत्र प्रकृत्यादेरीश्वरवाचित्वमस्ति न वा । आद्ये, योगानुपपत्तिः सामर्थ्याभावात् । द्वितीये, ब्रह्मणि सर्वशब्दसमन्वयानुपपत्तिः, प्रकृत्यादेरन्यपरत्वात् । किञ्च सर्वेषां पदानां ब्रह्मपरत्वे विभक्तिवैयर्थ्यं कर्मानुष्ठानविलोपश्च प्राप्नोति, क्रियोपहितरूपत्वात्कारकाणां, क्रियाभिधायकस्य चाभावात्, अनुष्ठापकप्रमाणान्तरादर्शनात् । तस्मादयुक्तं समन्वयसूत्रमिति ।

**परि०—** ज्योतिरादिपदनिरुक्तेः सङ्गत्यर्थं तद्व्यावर्त्यं चोद्यं विवृण्वानो विषसंशयपूर्वपक्षानाह **ज्योतिष्टोमेनेति** । भाष्ये ज्योतिरादिशब्दनिरुक्तावप्यस्योक्तिरत्र पूर्वोत्तरपादविभागस्य स्फुटत्वाद्वक्ष्यमाणापेक्षस्य सुबोधत्वाय वा ज्योतिःशब्दोऽपि ज्योतिष्टोमपर्याय इति द्योतनाय वा । कालविधिपरे कर्मकर्तव्यत्वाप्रतीतेस्तत्प्रतीतये वा(एव) प्रधानवाक्ये तद्गुणविधिवाक्ये च सर्वत्र सन्देह इति





द्योतनाय वा निष्फलयूपादिबोधकवाक्यानां फलवज्जोतिष्टोमकर्तव्यतापर्यवसानस्य सुज्ञानत्वाय वा ज्योतिष्टोमवाक्यस्याप्युक्तिः । **समन्वेतीति** । शक्तितात्पर्यवद्भवति न वेत्यर्थः । भाष्ये समाकर्ष-नयस्थवाक्यान्वयादिति गुणसूत्रार्थस्याप्यत्राग्रे 'अङ्गीकृतेऽपि' इत्यादिना वक्ष्यमाणत्वाद्व्यावर्त्यकोटिः किमत्र वाक्यार्थो ब्रह्मेति । **ज्योतिष्टोमकर्तव्यतादेः** ज्योतिष्टोमेष्टसाधनत्वादेः । ज्योतिर्नयव्यावर्त्य-पूर्वपक्षमाह **न द्वितीय इत्यादिना** । अक्षादिशब्दानामिव न दोष इत्यत आह **न हीति** । आद्य-सूत्रव्यावर्त्यमुक्त्वा कल्पनेतिसूत्रव्यावर्त्यमाह **योगे चेति** । एतच्च चोद्यं 'तेषु तेषु पदार्थेषु रूढिः' इत्यादिना निरस्यते । प्रकृत्यादीत्यादिपदेन प्रत्ययग्रहः । **सामर्थ्याभावादिति** । भगवन्मात्रवाचक-पदयोरन्योन्याकाङ्क्षारूपसामर्थ्याभावादित्यर्थः । **किञ्चेति** । एतदपि सर्वस्य सम्बुद्ध्यन्ततोक्त्या निरस्यते । **कर्मानुष्ठानविलोपश्चेति** । एतदपि 'तेषु तेषु पदार्थेषु' इत्यादिना निरस्यते । ननु कर्तृकरण-त्वादिकारकत्वसिद्धये विभक्तिसाफल्यमस्त्वित्यत आह **क्रियेति** । क्रियां कुर्वद्धि कारकमिति क्रियोपाधिकरूपत्वादित्यर्थः । कर्मानुष्ठानविकोपः कुत इत्यत आह **अनुष्ठापकेति** । **अयुक्तं समन्वय-सूत्रमिति** । तत्राशेषशब्दसमन्वयस्य प्रतिज्ञानादिति भावः ।

गु०दी०— **अनेकार्थतास्वीकारस्य** इत्यत्र अनुशासनाभावे सतीत्युपस्कर्तव्यम् । अन्यथा गोशब्द-स्याप्यनेकार्थताभावप्रसङ्गात् । **विभक्तिवैयर्थ्यम्** इत्यत्र तृतीयासप्तम्यादिविभक्तीनां तिङन्तविभक्तीनां च वैयर्थ्य-मित्यर्थः । **सम्प्रसारणाभावस्तु छान्दस** इत्यत्र यजतेः क्प्रत्यये सति 'वचिस्वपियजादीनां किती'ति प्राप्त-सम्प्रसारणरूपेकाराभावः छान्दस इत्यर्थः ।

यादु०— नन्वक्षादिशब्देष्वनेकार्थतास्वीकारो दृश्यत इत्यत आह **न हीश्वर इति** । अनेकार्थेष्वक्षादि-शब्दानां रूढिः प्रमाणवतीति भावः । प्रकृत्यादीत्यत्रादिपदेन प्रत्ययग्रहणम् । **आद्ये योगेति** । जगज्जनक-त्वादिगुणलाभाय स्वीकृतयोगानुपपत्तिरित्यर्थः । **सामर्थ्येति** । प्रकृतिप्रत्यययोरुभयोरपि भगवान्नाममात्रत्वेन समुदायस्योक्तगुणप्रतिपादने सामर्थ्याभावादित्यर्थः । विभक्तिवैय्यर्थ्यमुपपादयति **क्रियोपहितेति** । 'क्रियां कुर्वद्धि कारकमि'ति तल्लक्षणादिति भावः । कारकाणामेव विभक्तिवाच्यत्वात्तेषां च क्रियाभावेऽभावाद्विभक्त्यर्थाभावः प्राप्त इत्युक्तं भवति । कर्मानुष्ठानविलोपश्चेत्युक्तमुपपादयति **अनुष्ठापकेति** ।

वं०प०— **पृथगेवेति** । वसन्ताद्यनात्मकत्वेन पृथगेव तत्र रूढिराश्रीयत इत्यर्थः । रूढेः सकाशादिति शेषः । न ह्यमुख्यवृत्त्या प्रतिपादितस्य मुख्यत्वं सम्भवतीति भावः । **एवंविधं** रूढ्यपेक्षया प्रबलम् । **कारकाणां** विभक्त्यर्थभूतकर्त्रादिकारकाणाम् । **क्रियोपहितरूपत्वात्** 'क्रियां कुर्वद्धि कारकमि'ति वचनेन क्रियासम्बद्धार्थाभि-धायकत्वादित्यर्थः । **अभावादिति** । क्रियाभिधायकस्यापि यजेतेत्यादेर्ब्रह्मपरत्वादित्यर्थः ।





**आनन्दः**— ननु तर्हि सैन्धवादिशब्दानामपि अनेकार्थत्वं न स्यादित्यत आह **न हीति**। तत्र प्रमितत्वान्नार्थत्वाङ्गीकारः न चैवं प्रकृत इति भावः । **सामर्थ्याभावादिति** । पर्यायपदयोरिवानन्वयोऽन्वययोग्यतारूपसामर्थ्याभावादिति भावः । विभक्तिवैयर्थ्यमुपपादयति **क्रियेति** । कर्मादिकारकरूपार्थे हि वाच्ये विभक्तयो विधीयन्ते कारकत्वं च कर्तृत्वं च तत्र सर्वेषां पदानां ब्रह्मपरत्वे क्रियाभिधायकाभावेन तत्कर्तृत्वरूपकारकत्वाभावे तत्र विधीयमानविभक्त्यादेर्वैयर्थ्यं स्यादित्यर्थः । कर्मानुष्ठानविलोपमुपपादयति **अनुष्ठापकेति** । अवते क्तिरिति प्रवेशनार्थादवतेः क्तिप्रत्यये ज्वरत्वरेति सूत्रेणोपधायावकारस्य च वूठि सति आद्युपसर्गस्य इकारेण सहाद्गुण इत्यनेन गुणे सति ओतिरिति सिद्ध्यतीति भावः ।

**श्रीनिधि०**— **दूषणप्रसङ्गात्** । जडत्वानित्यत्वादिति दोषप्रसङ्गात् जडत्वानित्यत्वादिदोषप्रसङ्गात् । सामर्थ्याभावात् । आकाङ्क्षायोग्यताद्यभावात् । विभक्तिवैयर्थ्यं कर्मानुष्ठानविलोपश्चेत्यत्र नेतुमाह **क्रियाभिधायकस्याभावादिति** । ननु क्रियाभिधायकस्याभावे कर्मा न विलोपो भवतु विभक्तिवैपरीत्यं कथं इत्यत आह **क्रियोपहितत्वादिति** । क्रिया कुर्वद्धि कारकमिति भावः।

**शे०वा०**— पदार्थतया वाक्यसमन्वयाक्षेपपरिहारार्थत्वान्न भगवति सकलशब्दयोगनिरूपणपरोत्तरभाष्यवैयर्थ्यमित्याशयेनोदाहरणसंशयप्रदर्शनपूर्वकं वाक्यानां भगवति समन्वयाक्षेपप्रकारं दर्शयति **ज्योतिष्टोमेनेत्यादि** । **एवमेवेति** । पृथगेवेत्यर्थः । कचित्तथैव पाठः । **अन्याय्यत्वादिति** । अन्यायश्चानेकार्थत्वमित्युक्तेरिति भावः । नन्वेवमक्षादिशब्दानामप्यनेकार्थत्वं न स्यादित्यतस्तत्राभिधानादिरूपप्रमाणबलात्तत्सम्भवेऽपीह तदभावान्न नानार्थत्वं युक्तमित्याशयेनाह **न हीति** । रूढिज्ञापकाभिधानादेरभावादिति भावः । **न चेति** । नापीत्यर्थः । **गुणपूर्त्यसिद्धेरिति** । तदधीनत्वन्यायेन ब्रह्मणि सर्वशब्दसमन्वये सर्वनियन्तृत्वादन्यस्य गुणस्यासिद्धेरित्यर्थः । **रूढेरिति** । कर्मादाविति शेषः । **मुख्यार्थताऽसिद्धेरिति** । ततश्च तत्तु समन्वयादित्यवधारणानुपपत्तिरिति भावः । अङ्गीकृत्य च ब्रह्मणि योगं कर्मादिनिष्ठरूढेस्तस्य दौर्बल्यमभिहितम् । वस्तुतस्तु योग एवासिद्ध इत्याह **न चेति** । नापीत्यर्थः । 'जातमोतमि'ति वक्ष्यमाणरीत्या योगोपलम्भान्न तदसिद्धिरित्यरुचेराह **योगे चेति** । प्रकृत्यादीत्यादिपदेन प्रत्ययपरिग्रहः। **आद्य इति**। प्रकृत्यादेरीश्वरवाचित्वे समुदायस्य ब्रह्मणि वृत्तिर्न स्यादित्यर्थः। तत्कुत इत्यतोऽवयवसमुदाययोर्द्वयोरपि भगवन्नाममात्रत्वेन समुदायस्य भगवत्प्रतिपादने सामर्थ्याभावादवयवार्थस्य पङ्कस्य पङ्कजेति समुदायार्थत्वाभावात् अन्यथा तत्प्रसङ्गादित्याह **सामर्थ्येति**। ततश्च न समुदायोक्तगुणलाभ इति भावः । नन्ववयववृत्त्या समुदायस्य परमेश्वरे वृत्तावयवानामन्यपरत्वाङ्गीकारान्न वृत्त्यनुपपत्तिः पुनस्तदवयवस्याप्यन्यपरत्वमुपादायावयवस्य भगवति वृत्त्युपपत्तेर्न सर्वशब्दसमन्वयानुपपत्तिरित्यरुचेराह **किञ्चेति**। प्रत्येकं सम्बन्धात्प्राप्नोतीत्येकवचनोपपत्तिः । ननु कारकेषु विभक्तयो वर्तन्त इत्यादिनाऽन्यत्र कारकाणामेव विभक्त्यर्थत्वव्यवस्थापनात् । भगवतश्च प्रधानक्रियास्ववान्तरक्रियासु च मुख्यकारकतया तस्यैव विभक्त्यर्थत्वसम्भवात्कथं विभक्तिवैयर्थ्यमित्यतः कारकाणां 'क्रियां कुर्वद्धि कारकमि'ति तल्लक्षणेन क्रियोपहितस्वरूपत्वाद्





ब्रह्मणः सर्वशब्दावाच्यत्वपक्षे क्रियावाचकपदेनैव क्रियासिद्ध्या तदुपहितस्वरूपकारकत्वस्य ब्रह्मणि सत्त्वेन तस्य विभक्त्यर्थत्वसम्भवेऽपि सर्वशब्दानां ब्रह्मवाचकत्वे क्रियाभिधायकाभावेन तदसिद्ध्या तदुपहितस्वरूपकारकत्व-स्याप्यभावान्न ब्रह्मणो विभक्त्यर्थत्वमित्याशयेनाह **क्रियेति** । कर्मानुष्ठाने लोपमप्युपपादयति **अनुष्ठापकेति** । ज्योतिषा यजेतेत्यादिवाक्यस्थानां ज्योतिरादिशब्दानां ब्रह्मपरत्वेन तत्प्रापकत्वाभावादन्यस्य च कर्मतदङ्ग-तत्क्रमदेशकालाधिकार्यादिप्रापकस्याभावादिति भावः ।

**वा०र०—** सूत्रानुव्याख्यानयोः ज्योतिःशब्दस्यैवोपादाने निर्वचने च सत्यपि ज्योतिष्टोमपदोपेतत्वा-द्वाक्यस्य मूल उदाहरणं वस्तुत उदाहरणत्वाभिप्रायेण ज्योतिःशब्दसमानार्थत्वाभिप्रायेण च । अत एव तत्त्वप्रकाशिकायां ज्योतिषां स्तोम इत्यादि रूपावेत्यादिना तच्छब्दपुरस्कार एव कृत इति ज्ञेयम् । पदार्थतया वाक्येवेति वाक्यार्थत्वेन वाक्यसमन्वयस्यानङ्गीकारात् तं व्यावर्तयितुं पदार्थतयेत्युक्तम् । वाक्यार्थतया वाक्य-समन्वयपक्षस्त्वाक्षिप्तोऽपि अनङ्गीकारपराहत इति न तदाक्षेपपरिहारार्थत्वोक्तिः । पदार्थत्ववाक्यार्थत्वरूपाभ्यां समन्वयक्षेपप्रदर्शनात् सामान्यत एव समन्वयेति तूत्तरत्रोक्तमिति ज्ञेयम् । **तत्तु समन्वयादित्यवधारणेति** । तत्तु समन्वयादित्यत्र संशब्दवाच्यमित्यवधारणानुपपत्तिः । ब्रह्मणो मुख्यवाच्यत्वस्यैवाभावे ब्रह्मैवेत्यवधारणा-योगादित्यर्थः । अथवा तुशब्दस्यावधारणार्थताया व्याख्यातत्वात् इन्द्रादिशब्दैर्ब्रह्मण इव कर्मादिवाचकशब्दैः कर्मादिरपि मुख्यतो वाच्यतया ब्रह्मैव शब्दमुख्यार्थ इत्यवधारणायोग इत्यर्थः । एकैकशब्दस्योभयार्थत्वे तावित्यवधारणानुपपत्तेरिति । एव तु वक्ष्यति ज्योतिरधिकरणविवरणस्थलीयैतन्मूलतयेत्यनुभाष्यव्याख्यावसरे मूलकार इति ज्ञेयम् । **रूढेस्तस्येति** । रूढेस्सकाशाद्योगस्येत्यर्थः । प्रकृत्यादेरीश्वरेत्युत्तरत्रैव प्रकृत्यादीत्यादि-पदस्यासङ्कुचितवृत्तित्वे पूर्वोत्तरपदेति पृथगभिधानानर्थक्यमित्यतः सङ्कोचेनार्थमाह **आदिपदेन प्रत्ययेति** । **प्रकृत्यादि विभागा हीति** । ओतिरित्यादि ज्योतिरादिशब्दे पूर्वोत्तरपदविभागस्तु ज्योतिष इत्यादि शब्दे ज्योतिष इत्यादि रूप इति विवेको ज्ञेयः । मूले **आद्य** इत्यस्य व्याख्यानं प्रकृत्यादेरीश्वरवाचित्व इति योग इत्यस्यार्थः । **समुदायस्य वृत्तिरिति** । ब्रह्मणीति योग्यतया पूरितमिति ज्ञेयम् । **अवयवसमुदायेति** । अत्र प्रकृतिप्रत्ययरूपौ पूर्वोत्तरपदरूपौ वावयवौ च तत्समुदायश्च तयोर्द्वयोरित्येवं अर्थः । अवयवपदमनुद्भूतभेदं तेन प्रकृत्याद्यवयवस्य तत्समुदायस्य चेति योजनान्न द्विवचनानुपपत्तिः । **वक्ष्यति चावयवानामिति** । ततश्चोक्तावयवयोर्भगवन्नाम-मात्रत्वेनावयवार्थस्य च पङ्कादेः समुदायार्थत्वाभावस्य दृष्टतया समुदायेनावयवार्थभगवत्प्रतिपादनं न सम्भवति । समुदायस्य तदवयवार्थसंसर्गप्रतिपादकस्यावयवार्थमात्रप्रतिपादने सामर्थ्याभावादिति योजनामस्तु योगोऽपीत्यत आह **ततश्चेति** । तेषु तेषु पदार्थेषु रूढिरङ्गीकृतेत्युत्तरभाष्यावतारमूले जातमोतं यस्मिन्निति व्युत्पत्त्यसम्भव-स्योक्तत्वादत्रासामर्थ्यम् । व्युत्पत्त्यसम्भवरूपं व्याख्येयम् । अत एव तदनुसारेण शङ्कते **नन्ववयवेति** । **कारकेषु हीति** । कारकवाचिन्य इत्यर्थः । **अन्यत्रेति** । सर्वान्तर्यामिणि हरावित्येतत्तत्त्वनिर्णयटीकायामित्यर्थः । **सर्वशब्देति** । कतिपयशब्दैर्वाच्यत इत्यर्थः । केनचिच्छब्देन वाच्यत्वेऽपि शब्दान्तरैव वाच्यत्व इति यावत् । तदसिद्ध्या





तदुपहितस्वरूपकारकत्वस्याप्यभावादिति पाठः । कारकाणामस्य भावादिति क्वचित्कपाठेऽपि कारकाणामभावात् कारकत्वस्य ब्रह्मण्यसम्भवे नेत्यर्थकत्वमित्याहुः ।

**स०व्र०— सामर्थ्याभावादिति** । प्रकृत्यादेरीश्वरवाचित्वे भगवन्नाममात्रत्वप्रसङ्गादित्यर्थः । विभक्तिवैय्यर्थमुपपादयति **क्रियोपहितेति** । 'क्रियां कुर्वद्धि कारकमि'ति लक्षणाभावादिति भावः । कारकाणामेव विभक्तिवाच्यत्वात्तेषां च क्रियाभावे अभावाद्विभक्त्यर्थाभावः प्राप्यत इत्युक्तं भवति । कर्मानुष्ठानविलोपश्चेत्युक्तमुपपादयति **अनुष्ठापकेति** ।

**विठ्ठल०— मूले** ज्योतिरादिपदनिरुक्तेः सङ्गत्यर्थव्यावृत्त्या शङ्कां विवदितुं तावद्विषयसंशयपूर्वपक्षान् दर्शयति **ज्योतिष्टोमेनेत्यादिना** । अत्र ज्योतिरादिशब्दनिरुक्तावप्यस्य ग्रहणमत्र ब्रह्मणि योगज्ञापकपूर्वोत्तरपदविभागस्य स्फुटत्वाद्वक्ष्यमाणाक्षेपस्य सुबोधत्वाय वा ज्योतिष्टोमशब्दयोः पर्यायताज्ञापनाय वेति ज्ञेयम् । नन्वक्षादिशब्देषु अनेकार्थता दृश्यते । अतः कथमन्यायतेत्यत आह **न हीति** । **ईश्वर इति** । अक्षादिशब्देष्वस्ति प्रमाणमिति भावः । **रूढेर्जघन्यवृत्तित्वेने**त्यत्र रूढेरिति पञ्चमी । **प्रकृत्यादी**त्यत्र आदिपदेन प्रत्ययग्रहणम् । पूर्वोत्तरपदविभाग इति ज्योतिष्टोमेत्यादावित्यर्थः । **सामर्थ्येति** । प्रकृतिप्रत्यययोरुभयोरपि भगवन्नाममात्रतया तत्समुदायात्मकपदस्य गुणप्रतिपादने सामर्थ्याभावात् । विभक्त्यवैयर्थ्यमुपपादयति **क्रियेति** । विभक्त्यप्रतिपाद्यानां कर्तृकरणादिरूपकारकाणां 'क्रियां कुर्वद्धि कारकमिति' क्रियोपाधिकरूपत्वात्प्रकृतिप्रत्ययादेर्भगवत्परत्वे क्रियाभिधायकाभावाद्विभक्तिवैयर्थ्यमित्यर्थः । कर्मानुष्ठानविलोपमुपपादयति **अनुष्ठापकेति** । ज्योतिरादिपदानां सर्वेषां भगवत्परत्वे वसन्त इत्यादिवाक्यस्य कर्मानुष्ठापकप्रमाणत्वासंभवात् तत्र मानान्तरादर्शनाच्च कर्मानुष्ठानलोपः स्यादिति भावः । **तस्मादिति** । ज्योतिरादिशब्दानां भगवत्परत्वासम्भवादित्यर्थः ।

**चषकः— वाक्यार्थो ब्रह्मेति** । वाक्यतात्पर्यमात्रगोचर इत्यर्थः । **पदार्थः** पदशक्तितात्पर्यगोचर इत्यर्थः । **अनेकार्थतेति** । अक्षादिशब्दानां नानार्थता प्रामाणिकीति न क्षतिरिति भावः । आद्ये प्रकृतिप्रत्यययोरीश्वरवाचकत्वे **सामर्थ्याभावादिति** । प्रकृतिप्रत्यययोः प्रातिस्विकधर्मावच्छिन्नयोरीश्वरवाचकत्वे भगवन्नाममात्रत्वेन पङ्कजेतिसमुदायस्य पङ्कप्रतिपादनसामर्थ्याभाववत्प्रकृतसमुदायस्य भगवत्प्रतिपादने सामर्थ्याभावादित्यर्थः । तथा च न समुदायवृत्त्यधीनान्वयधीविषयगुणलाभ इति भावः । निखिलशब्दानां ब्रह्मवाचकत्वे धातोरपि तद्वाचकताऽऽपत्त्या क्रियाभिधायकाभावप्रसङ्गेन तदसिद्ध्या तद्घटितमूर्तिककारकाणामप्यभावप्रसङ्गेन तादृशाकारकप्रत्यायनफलकविभक्तीनामानर्थक्यप्रसङ्ग इत्याशयेनाह **क्रियेति** । प्रमाणाभावनियन्त्रितः कर्मानुष्ठानविलोपप्रसङ्ग इत्याह **अनुष्ठापकेति** ।

**॥ इति कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयो नेति पूर्वः पक्षः ॥**

* * *





**॥ अथ कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयो नेति पूर्वपक्षस्य निरासः ॥**

**॥ तत्रादौ कर्मकाण्डगतवाक्यस्थानां प्रतिपदानां ब्रह्मणि समन्वयप्रदर्शनम् ॥**

**॥ तत्राप्यादौ तेषां योगवृत्त्या समन्वयप्रदर्शनम् ॥**

**॥ तत्र चाप्यादौ 'ज्योतिष'पदसमन्वयः ॥**

१६ **सु०—** अत्रोच्यते । 'यत्तावदुक्तं किं ब्रह्मणि वाक्यस्यान्वयः किंवा पदानामिति । तत्र तावत्पदानामिति ब्रूमः । न च वृत्त्यसम्भवः, योगसद्भावादि'त्यभिप्रेत्य निर्वक्ति **जातमिति ।**

## अनु०— जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः ।

**जिर्जातम् । जनेरौणादिको डिप्रत्ययः । ओतिरोतम् । (अवतेक्तिः?) अवतेः क्तिन् । जातं = जगत्, ओतं = प्रविष्टं, यस्मिन्नसौ ज्योतिः । प्राणरूपतः चेष्टकरूपत्वात् । 'षकारः प्राण आत्मे'ति श्रुतेः । ज्योतिः चासौ षः चेति ज्योतिषः, तस्य सम्बुद्धिर्ज्योतिष ॥**

**परि०— अवतेः क्तिन्निति** । तथा च ज्वरत्वरस्रिव्यविमवामुपधायाश्चेत्यकारवकारयोरूठि सवर्णदीर्घे च बहुलग्रहणादाङ्पूर्वकत्वेन वा गुणे सति ओतिरिति रूपमित्यर्थः । **प्राण आत्मेति** । अस्यार्थोऽग्रे व्यक्तः ।

**यादु०— औणादिक इति** । उणादयो बहुलमिति बहुलग्रहणादत्र डिप्रत्यय इति भावः । ततश्च टिलोपे जिरिति रूपमिति ज्ञातव्यम् । **अवतेः क्तिरिति** । प्रवेशार्थस्यावतेः क्तिप्रत्यये ज्वरत्वरेत्यादिना वकारस्योपधाऽकारस्य चोठि कृते सवर्णदीर्घे कित्यपि छान्दसे गुणे च सति ओतिरिति रूपसिद्धिरिति ज्ञेयम् । अन्ये तु 'छ्वोः शूडनुनासिके चे'ति चकारात्किति परतो वकारस्योठ् छान्दसत्त्वादेत्येधत्यूठ्स्विति वृद्धिर्न भवतीत्याहुः ।

**वं०प०— डिप्रत्यय इति** । जनी प्रादुर्भावेऽस्मात् डिप्रत्यये टिभूतान् इत्यस्य लोपे जि इति रूपम् । **क्तिरिति** । अव प्रवेशनेऽस्मात् क्तिप्रत्यये ककारलोपे अकारवकारयोरुकारे दीर्घे च ऊतिरिति स्थिते कित्यपि छान्दसे ऊकारस्य ओकाररूपे गुणे सति ओतिरिति रूपम् । यणादेशे ज्योतिरिति भवति ।

**शे०वा०—** 'अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वय' इत्युत्तरत्र वाक्यसमन्वयस्यापि वक्ष्यमाणत्वात्तावदित्युक्तम् । पदानि ह्यमूनि किं रूढ्या ब्रह्मवाचीनि किंवा योगेनेति प्रागुक्तदोषमाशङ्कते **न चेति** । योगादर्शनशङ्कापरिहारकतया मूलं योजयति **योगेति** । दोषान्तरं त्वाभासीकरिष्यत इति भावः । **औणादिक इति** । उणादयो बहुलमिति बहुलग्रहणाज्जनेः कर्तरि डिप्रत्यय इत्यर्थः । ततश्च टेरिति टिलोपे जीति रूपसिद्धिरिति द्रष्टव्यम् । **अवतेः क्तिन्निति** । प्रवेशार्थादवतेः कर्तरि क्तिन्प्रत्यये ज्वरत्वरेति वकारस्योपधाकारस्य चोठि





सवर्णदीर्घे क्तिप्रत्ययस्य कित्त्वेऽप्योमास इत्यादाववतेर्मनोविसिवीत्यादिना कित्त्वेऽपि बाहुलकाद्गुणवद्बाहुलकाद्गुणे तिशब्देन क्तिन्क्तिचोर्ग्रहणात्तितुत्रेति निषेधादिडभावे सति ओतिशब्दनिष्पत्तिरिति भावः । यद्वा छ्वोः शूडनुनासिके चेति चकारात्क्तिपरतो वकारस्योठि छान्दसत्वादेत्येधत्यूठ्स्विति वृद्ध्यभावेन गुणे सति ओतिशब्द-निष्पत्तिरिति ज्ञेयम् ।

वा०र०— **योगादर्शनेति** । योगपक्षमुपेत्येति शेषः । प्रागुक्तयोगादर्शनेति योज्यम् । नन्ववयवार्थत्वे समुदायार्थत्वायोग इति प्रागुक्तमत आह **दोषान्तरं त्विति** । उणादिसूत्रविहित इत्यर्थनिरासायाह **उणादयो बहुलमितीति** । प्रविष्टमिति मूलमनुसृत्याह **प्रवेशार्थादिति** । कर्तरि क्तन्प्रत्यय इति क्तिन्नाबादिभ्यश्चेत्यनेन तत्र प्रयोगतोऽनुसर्तव्य इति काशिकोक्तेर्बाहुल्याद्वा अकर्तरि च इत्यनुवृत्त्या स्त्रियां क्तिनित्यत्र वैय्याकरण-व्याख्यानेऽपि प्रकृते कर्तरि क्तिनित्यर्थः । शोध्यमेतदस्ति । **कित्त्वेति** । गुण इति सम्बन्धः । प्रापकाभावं परिहर्तुं उक्तं **बाहुलकादिति** । तत्र दृष्टान्तकथनम् । **ओमास इत्यादाविति** । अवतेरित्यस्यावतेरुत्तरमन इति अवतेर्गुण इति च सम्बन्धः । अत्रावतेर्मनोविसिवीत्यादिनेति पाठः । अविसिविशुषिभ्यः किदिति सूत्रेणोक्त-धातुभ्यो मनं विधाय तस्य कित्वविधानात् अयं च दृष्टान्तो वेदापभाष्यरीत्या तेन तथाप्युत्पादनात् । ओमास इत्यवो(?)स्मद्भाष्यटीकयोस्तदनाश्रयणादिति ज्ञेयम् । बलादेरार्धधातुकस्येडागमप्रसङ्गं वारयति **तिशब्देनेति** । तितुत्रतथसिसुसरकसेषु चेति सूत्रेण तीत्यादिकप्रत्ययानांमिण्निषेधादित्यर्थः । ततिः दीप्तिः शान्तिः दान्तिरित्याद्युदाहरणम् । **छ्वोः शूडनुनासिके चेतीति** इति सूत्रेणेत्यर्थः । छ इत्येतस्य सतुक्कस्य स्थाने श इत्ययमादेशो भवति । वकारस्य च स्थाने ऊठ् इत्ययमादेशो भवति । अनुनासिकादौ प्रत्यये परतः क्वौ झलादौ च क्ङितीति सूत्रार्थः । **चकारादिति** । तथा तद्व्याख्यातृभिः व्याख्यानादिति भावः । तथा हि अत्रानु-नासिकस्य क्विझलोः क्ङितीति पूर्वसूत्रात् क्ङितीत्यनुवृत्तिरावश्यकी । अन्यथा द्युभ्यां द्युभिरित्यत्रापि झलादेः परत्वादूढि द्युभ्यामित्यादिदीर्घापत्तिः । न च ऊढ एव दिव उदित्यनेनैकदेशविकृतमनन्यवद्भवतीति परिभाषान्यायेन उदि सति मात्राकालो भविष्यतीति वाच्यम् । तत्र कथञ्चिदुपपत्तावपि ब्रश्च भ्रश्चेति सूत्रे ग्रहणं न कर्तव्यं स्यात् । छ्वोरिति सूत्रे क्ङिद्ग्रहणाभावे प्रष्टेत्यादि तृजातिस्थलेऽपि पृष्ट इत्यादि क्तादिस्थल इव छस्य शकारसिद्ध्या शकारस्यैव षकारविधिमात्रेण पृष्टेत्यादि रूपसिद्ध्युपपत्त्या छकारस्य षकारविधानानर्थः स्यात् । क्ङितीत्यस्य चकारबलेनानुवृत्त्यभ्युपगमे तु किति ङिति च झलादौ परत एव छकारस्य शकारविधानप्राप्तौ प्रष्टेत्यादि तृजादिस्थले झलादिपरत्वेऽपि किङि इत्यलादि परत्वाभावेन पृच्छतेः छस्य शकाराप्रसङ्गेन शकाराश्रित्य षत्वानुपपत्त्या छकारस्यैव पृथक् षकारविधानस्यावश्यकत्वं तदेतदभिप्रेत्य किति परत इत्युक्तम् । चकारस्य किङितीत्यंशानयनसामर्थ्येन तद्बलायातकीत्यैवात्रोपपादनं किति झलादावित्यर्थः । किति ङितीत्युक्तेऽपि प्रकृते कितः परत्वात् कित एव कीर्तनमिति वा । एतेन किङिति झलादाविति वक्तव्ये किति परत इत्येतावन्मात्राभिधाने न्यूनतेत्यपास्तमिति ज्ञेयम् । किञ्च कित्वात् क्ङिति चेति वृद्धिनिषेधे गुणोऽपि न स्यात् इत्यत आह **छान्दसत्वादिति** । अस्य गुण इति वक्ष्यमाणेनान्वयः । तर्हि वृद्धेरेव किन्न स्यादित्यत उक्तं **छान्दसत्वा-**





**देत्येधत्यूठ्स्विति वृद्ध्यभावेनेति** । एवं छान्दसत्वादित्यस्यावृत्त्या व्याख्यानाद्विवक्षितार्थसिद्धिरिति ज्ञेयम् । **पूर्वयोग इति** । सुपिस्थ इत्यत्र हि योगविभागमाश्रित्य वृत्तिकृता व्याख्यातम् । सुपीत्येको योगः सुपि अहङ्कारान्तेभ्यो धातुभ्यः कप्रत्ययो भवति । **द्वाभ्यां पिबतीति** । द्विपः पादप इत्याद्युदाहरणं सुपि स्थ इत्येतावानपरो योगः सुपिस्थश्च कप्रत्ययो भवति । **अखूनामुत्थानं आखूत्थ इति** । आखुशब्दोत्तरोत्पूर्वस्थाधातोरुदःस्था-स्तम्भोरिति सूत्रेण सवर्णे आदेः परस्येति पञ्चमीनिर्देशेन क्रियमाणकार्यस्य परादित्वेन विधानात् सकारस्य पूर्वसवर्णे आखुत्थो वर्तत इति प्रयोगः । नपुंसकत्वविचारः शेष्यां स्पष्टः तत्राद्यो योग इत्यर्थः ।

**स०व्र०— अवतेः क्तिरिति** । प्रवेशार्थस्यावतेः क्तिप्रत्यये ज्वरत्वरेत्यादिना ऊठि सवर्णदीर्घे सति क्तिप्रत्ययस्य कित्त्वेऽपि ओमास इत्यादौ अवतेः मनोविसिवीत्यादिना कित्त्वेऽपि बाहुलकात् गुणवत् ओतप्रोत-मित्यादिबहुलमुपलम्भात् बाहुलकात् गुणसम्भवेनोतिशब्दनिष्पत्त्युपपत्तिरिति भावः । अन्ये छ्वोः शूडनुनासिके चेति चकारात् किति परतः वकारस्योठि छान्दसत्वादेत्येधत्यूठ्स्विति विधिर्न भवति इत्याहुः ।

**विट्ठल०— औणादिकेति** । गुणादयो बहुलमिति बहुलग्रहणादत्र डिप्रत्यय इति भावः । **अवतेः क्तिनिति** । प्रवेशार्थकस्यावतेः क्तिप्रत्यये ज्वरत्वरेत्यादिना वकारस्य उपधाकारस्य रूढिसवर्णदीर्घे कित्यपि छान्दसे गुणे च सति यणादेशे ज्योतिरिति रूपसिद्धिरिति ज्ञेयम् ।

**चषकः— औणादिकेति** । उणादयो बहुलमिति बहुलग्रहणात् जनेः कर्तरि डिप्रत्यय इत्यर्थः । डित्वाधीनटिलोपनियन्त्रिता रूपसिद्धिरिति द्रष्टव्यम् । **अवतेः क्तिरिति** । अवरक्षणेत्यादिना प्रवेशनेऽपि पठितादवतेः कर्तरि क्तिप्रत्यये ज्वरत्वरेत्यादिना वकारोपधाकारयोरूठि सवर्णदीर्घे प्रत्ययकित्वाद्बाहुलकाद्गुणे ओतिरिति रूपसिद्धिरिति व्याकर्तारः ।

**॥ इति 'ज्योतिष'पदसमन्वयः ॥**

* * *

**॥ अथ 'आयजेत'पदसमन्वयः ॥**

**१७ सु०—**

## अनु०— आयजेतश्चायजेतः

**यजतेर्भावे 'घञर्थे कविधानमि'ति कप्रत्ययः । संप्रसारणाभावः (तु) छान्दसः । यजो = यज्ञः ।**





**अथवा कर्तर्येव पचाद्यच् । तथा च आ = सम्यक्, समन्ताद्वा, यजेन = यज्ञेन कर्मणा, याजकेन पुरुषेण वा, इतः प्राप्तः, आयजेतः । सकलयज्ञभोक्ता यज्वभिर्ज्ञानद्वारा प्राप्यश्चेत्यर्थः । तस्य सम्बुद्धिरायजेत ।**

**परि०**— ननु वचिस्वपियजादीनां कितीति सम्प्रसारणे सति इज इति स्यादित्यत आह **सम्प्रसारणेति** ।

**यादु०**— ननु कथं भावे कप्रत्ययः । तस्य कर्तर्येव विधानादित्यत उक्तम् **घञर्थ इति** । घञ् च भावेऽपि विहित इति भावः । नन्वेवं 'वचिस्वपि यजादीनां किती'ति किति सम्प्रसारणविधानाद्यकारस्येकारे इजेति रूपं स्यादित्यत आह **सम्प्रसारणाभाव इति** ।

**वं०प०**— **घञर्थ इति** । भावोऽपि घञर्थो भवतीत्यर्थः । इदं वार्तिकम् । तथाच यज् अस्माद्भावे कप्रत्यये ककारलोपे यज आयजेतिरूपम् । इउऋऌ इतीकां स्थाने यवरला इत्येते यण आदेशा भवन्ति । तत्र यदि वैपरीत्येन यणां स्थाने इको भवन्ति तर्हि तत्सम्प्रसारणमित्युच्यते । ततश्च प्रकृते यजेत्यत्र वचिस्वपीति सूत्रेण यकारस्येकाररूपसम्प्रसारणे सति इजेति स्यादित्यत आह **छान्दस इति** । **कर्तर्येवेति** । तथा च यज अस्मात्कर्तर्यच्प्रत्यये यजो याजक इत्यर्थः । यजधातोर्भावे कप्रत्यययान्तत्वपक्षे कर्मणा इत इत्यस्य भावमाह **सकलेति** । कर्तर्यच्प्रत्ययान्तत्वपक्षे याजकेन पुरुषेणेत इत्यस्य तात्पर्यमाह **यज्वभिरिति** । कर्मणा साक्षात्प्राप्यत्वाभावाज्ज्ञानद्वारेत्युक्तम् ।

**शे०वा०**— ननु कर्तरि पर्वयोगोऽनेन भावे यथा स्यादिति वृत्तावुक्तत्वात् 'सुपिस्थ' इत्यनेन भावे कप्रत्ययविधानेऽपि स्थाधातोरेव तद्विधानात् । यजतेः कथं भावे कप्रत्यय इत्यतो 'ग्रहवृदृनिश्चिगमश्चेति' सूत्रीय 'घञर्थे कविधानमि'ति वार्तिकाद्युक्तो यजतेरपि भावे कप्रत्यय इत्याह **घञर्थे कविधानमितीति** । न चात्र घञर्थे घञविधानमेवास्तु किं कविधानेनेति वाच्यम् । तथा सति याज इति प्रसङ्गेन यजेत्येतन्निर्देशानुपपत्ति-प्रसङ्गेन तदुपपत्तये कविधानस्यार्थवत्त्वात् । न च घञर्थे कविधानं 'स्थास्नापाव्यधिहनियुध्यर्थमि'ति वार्तिककृता स्थास्नादिभ्य एव भावे कप्रत्ययविधानाद्यजतेश्च स्थास्नादिष्वभावात्कथमस्माद्वार्तिकादपि यजतेः क इति वाच्यम् । पाठमूलभूतशिष्टप्रयोगानुरोधेन पाठोऽपि स्थास्नादिष्वस्य कार्यः अन्यथा अतिप्रसङ्गादित्यत्र तात्पर्यात् । ननु 'वचिस्वपियजादीनां किती'ति किति परे सम्प्रसारणविधानात्प्रकृते च ककारस्य कित्वात्तस्मिन्परतो यजते-र्यकारस्य सम्प्रसारणादिकारेण भवितव्यम् । यजेति तु कथमित्यत आह **सम्प्रसारणाभाव इति** । 'बहुलं छन्दसी'ति सम्प्रसारणप्रकरणे छन्दसि बहुलं सम्प्रसारणोक्तेर्युक्तः सम्प्रसारणाभावोऽत्रेति भावः । एतदस्वरसादेव पक्षान्तरमाह **अथवेति** । **कर्तर्येवेति** । यजतीति यज इति कर्तर्येवेत्यर्थः । तस्य कर्तर्येव विधानादिति भावः ।





**वा०र०— भावे यथा स्यादिति** । आरम्भसामर्थ्यात्तावदयं कर्तुरपकृष्यते । न चान्योऽर्थो निर्दिश्यते अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति स्वार्थश्च धातूनां भव एवेति तत्रैव विधानं न (?) घञर्थेकविधानमिति वार्तिकादेव कस्यचिध(?)त्वाद्वचर्थमेतज्ज्ञापनं घञर्थ इति वार्तिके स्थास्नापाव्यधीति स्थाधातोरपि गृहीतत्वादिति चेत्सत्यम् । आखूत्थ इति ह्युपपदमतिङिन्त्युपपदसमासः स नित्य एवेति ज्ञापनार्थमेतज्ज्ञापनम् । अन्यथा षष्ठीसमासः पाक्षिकः स्यात् । आखूनामुत्थापनमिति वाक्यमपि स्यात् । आखूनामुत्थानमिति विग्रहस्त्वस्वपद-विग्रहः । घञर्थ इति वार्तिके स्थाधातुग्रहणं तु कर्तरि कप्रत्ययाभावेऽपि कर्तृवर्जिते कारकान्तरे यथा स्यादित्ये-तदर्थमिति न कश्चिद्दोष इति भावः । भावे कप्रत्ययविधायकान्तरं नास्ति । यत्तु विधायकं तद्विशेषनिष्ठमित्याह **सुपिस्थ इत्यनेनेति** । याज इतीति ङिति परतोत उपधाया इत्यनेनोपधाकारवृद्धेर्भाव्यत्वादिति भावः । **यजेत्येतदिति** सुपो विवक्षानुसारेण प्राक् सविभक्तिकनिर्देशः । अत्र तु तदविवक्षया प्रातिपदिकमात्रनिर्देश इति ज्ञेयम् । **अन्यथातिप्रसङ्गादिति** । स्थास्नादीनामपि पाठो न कार्यः स्यात् । अभियुक्तप्रयोगसंरक्षणातिरिक्त-निमित्ताभावादित्यर्थः । **वचिस्वपीति** । वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् किति परत इति सूत्रार्थः । **इकारेणेति** । यकारस्येकारस्थाने जायमानत्वात् इज्येत्यादाविवेति भावः । अदोजग्धिर्ल्यप्तिकितीति प्रकरणे अदिप्रभृतिभ्य इत्यादि प्रकरणेषु च बहुलं छन्दसीत्यस्य सत्त्वात्तद्व्यावृत्तये सम्प्रसारणप्रकरण इत्युक्तम् । **एतदिति** । बाहुलिकेन सम्प्रसारणाश्रयणरूपेत्यर्थः । नात्रास्वरस इत्युक्त्या पूर्वप्रकारपरित्यागोऽभिमतः । अपि तु शङ्किता-नुपपत्तिप्रसक्तिशून्यं प्रकारान्तरमप्यस्तीत्येवाभिप्रेतम् । तेनोत्तरमूले यज्ञेन कर्मणा याजकेन पुरुषेणेत्यादिनार्थ-द्वयकथनं युक्तमिति ज्ञेयम् ।

**स०व्र०—** ननु यजेत्यत्र 'वचस्वपियजादीनां किति ' इति सम्प्रसारणे यकारस्येकारे इजेति रूपं स्यादित्यत आह **सम्प्रसारणाभाव इति** ।

**विठ्ठल०—** ननु यजेतेत्यत्र वचस्वपि यजादीनां कितीति स्मरणात् सम्प्रसारणे यकास्येकारे इज इतीति स्यादित्यत आह **सम्प्रसारणेति** । एवं यजशब्दस्य भावे निष्पन्नत्वे कोऽर्थस्तस्येत्यत आह **यजो यज्ञ इति** । वसतीति वसधातोरच्प्रत्यये वसतीति व्युत्पत्त्या वसशब्दो निष्पन्न इत्यर्थः । एवं तनोतीत्यत्रापि ज्ञेयम् । **गमे छदेश्चेति** गम्लृ गतौ छन्दि संवरण इत्येतयोरित्यर्थः ।

**चषकः—** ननु नियतकर्तृसाधनताककप्रत्ययस्य भावसाधनता न सङ्गच्छत इत्यतस्तां सङ्घटयति **घञर्थ इति** । तथा च घञो भावेऽपि विहिततया वाचनिकी सा = एतस्य सङ्गच्छत इति भावः । ननु वचि-स्वपीति यजेः किति सम्प्रसारणे इजेतिरूपेण भवितव्यमित्यत आह **सम्प्रसारणाभाव इति** । एतदरुच्यैव कल्पान्तरमनुसरति **अथवेति** ।

**॥ इति 'आयजेत'पदसमन्वयः ॥**





**॥ अथ 'वसन्ति'पदसमन्वयः ॥**

१८ **सु०—**

**अनु०—** **वसन्तिश्च वसंस्ततः ।**

**वसतेः पचाद्यच्, वसतीति वसः । तनोतेरौणादिको डिप्रत्ययः, तनोतीति तिः । 'वर्णागमो वर्णविपर्ययश्चे'ति पूर्वपदस्य नकारागमः । वसंश्चासौ तिश्चेति वसन्तिः, व्याप्तो वर्तत इत्यर्थः । तत्सम्बुद्धिर्वसन्ते । द्विरुक्तिरादरार्था ।**

**परि०—** **वर्णागम इति** । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इति पृषोदरादिसूत्रोक्तकार्यसङ्ग्रहश्लोकेन वृत्त्युक्तेन पूर्वपदस्य नकारागम इत्यर्थः । उदाहरणानि तु कौ जीर्यत इति कुञ्जर इत्यत्रोकारस्य मकारागमः । हिनस्तीति सिंह इत्यत्राद्यन्तयोर्विपर्ययो व्यत्यासः । षोडन्निति षकारस्यो(?)वर्णरूपापत्तिर्विकारः । पृषोदरमित्यादौ तकारादेर्लोपो वर्णविनाशः । यस्य धातोर्योऽर्थः प्रसिद्धस्तस्मादर्थान्तरेण योगतस्तदर्थातिशयेन योग इति । यदेतत्पञ्चविधं निरुक्तं निर्वचनप्रकारः शब्दानां तदनेन सूत्रेणोच्यत इति मञ्जर्यामुक्तानि । **द्विरुक्तिरिति** । वसन्ते वसन्त इति द्विरुक्तिरित्यर्थः ।

**गु०दी०—** **पूर्वपदस्य नकारागम इति** । पृषोदरादिगणे अनुशासनाभावेऽपि कस्यचिद्वर्णस्य यथोचितवर्णादेशेन यथास्थितप्रयोगस्यैव पृषोदरादिगणे समाहितत्वात् ।

**यादु०—** **नकारागम इति** । न चैवं 'नश्छव्यप्रशानि'ति रुत्वप्राप्त्या विसर्गसकारयोः प्राप्तौ वसंस्तिरिति स्यादिति वाच्यम् । 'उभयथर्क्षु' इति तदुत्तरसूत्रेण छन्दसि नकारस्य रुत्वं विकल्पेन भवतीत्युक्तत्वेनात्र रुत्वाप्राप्तेरपि सम्भवात् । न च भुङ्क्ष्वेत्यत्रेवात्रापि मकाराऽगम एव कुतो नोक्त इति वाच्यम् । वसंस्तत इति मूले नकारान्तस्य ग्रहणात् । तस्य च श्रुतौ नकाराऽगमसूचनार्थत्वात् । अन्यथा वसस्तत इत्येवावक्ष्यदिति ।

**वं०प०—** **वसतेरिति** । वस निवासेऽस्मात्कर्तर्यचप्रत्यये वस इति रूपम् । **तनोतेरिति** । तनु विस्तारेऽस्माड्डिप्रत्यये टिभूत-अन् इत्यस्य लोपे त्+इ=तिः इति रूपम् । **पूर्वपदस्य** वस इत्यस्य ।

**शे०वा०—** **औणादिक इति** । उणादयो बहुलमिति बहुलग्रहणादिति भावः । ततश्च टिलोपे तिशब्दनिष्पत्तिरिति ज्ञेयम् । नन्वेवं वसतिरित्येव स्यात् । कथं वसन्तिरितीत्यत **आह नकारागम इति** । किं

तद्विधायकमित्यतो निरुक्तशास्त्रे निरुच्यमानानां शब्दानां पृषोदरादित्वादेव साधुत्वमित्यत्र यः श्लोको वृत्तिकृता पठितस्तमाह **वर्णेति** । अपूर्वस्य वर्णस्यागमनं वर्णागमः । हिनस्तीति सिंह इत्यत्र आद्यन्तवर्णयोर्हकार-सकारयोर्व्यत्यासो वर्णव्यत्यय इत्यर्थः । तथा च कौ जीर्यत इति कुञ्जर इत्यत्र नकारस्य वर्णस्य यथाऽऽगमः तथा वसतिरित्यत्र पूर्वपदान्त्यस्य नकाराऽगमे युज्यत एव वसन्तिशब्द निष्पत्तिरिति भावः । न चैवं 'नच्छव्य-प्रशानि'ति रुत्वप्रास्या विसर्गसकारयोः सतोर्वसंस्तिरिति स्यादिति वाच्यम् । 'उभयथर्क्ष्वि'ति पूर्वेण नित्यप्राप्तस्य रूत्वस्य छन्दसि विकल्पविधानेनात्र रुत्वाभावोपपत्तेः ।

**वा०र०— टिलोप इति** । षष्ठीयचतुर्थपादस्थ टेरिति प्रथमसूत्रेण डिति परे टेर्लोप इत्यर्थः । डित्यभ-स्याप्यनुबन्धकरणसामर्थ्याट्टिलोपो भवतीति तत्सूत्रीयकाशिकोक्तेरिति भावः । एवमेवंजातीयके अन्तराधि-करणीयटीकाकृदुक्ते च भावबुद्यः (?) साधुत्वमित्यत्रेति इत्येतदर्थप्रतिपादनायेत्यर्थः । इत्यत्रार्थे साधकतयेति वा एषोदरादीनीति सूत्रीयमञ्जर्याद्यनुसारेण व्याचष्टे **अपूर्वस्येति** । हन्ति गच्छतीति हंस इत्यत्र गत्यर्थाद्धतेः पचाद्यचि कृते तस्य सगागमात्सकाररूपवर्णागमनमित्यर्थः । **इत्यत्रेति** । हिसिर्हिंसाया यामित्यस्यात्यचाद्यचि इदित्कतनुमि चेति ज्ञेयम् । हकारसकारयोरिति पाठः । हस्थाने नकारपाठेपीदित्वात्प्राप्तसुमो नकारस्य सकारात् पूर्वभावित्वा सिंह इत्यत्र विपर्यय एवेति ज्ञेयम् । हंस इत्यत्र तृत्ववदिह निकमिषिभ्य इत्यनेनौणादिकसप्रत्यये-ऽप्युपपत्तेर्मञ्जर्युक्तमुदाहरणमाह **कौ जीर्यत इति** । नश्छव्यप्रशानितीति अस्य रेछवि नकारान्तस्य पदस्य रुः न तु प्रशान्शब्दस्येति सूत्रार्थः । **विकारसकारयोरिति** । खरवसानयोरित्यनेन रेफस्य विसर्गे विसर्जनीयस्य स इत्यनेन विसर्गस्य सकारे च सतीत्यर्थः । उपलक्षणमेतत् । अत्रानुनासिक इत्यनेन नरोः पूर्वस्याकरस्यानु-नासिके तदभावपक्षे अनुनासिकात्पर इति सूत्रेण पूर्वस्यानुस्वारानुगमे वा भवांस्तरतीतिवत् वसंस्तत इति भाष्यपदवच्चारोः पूर्वस्याकारस्यानुनासिके वा तदभावपक्षेऽनुस्वारागमे वेत्यपि ज्ञेयम् । वसंस्तिरिति स्यादिति सानुस्वारः पाठः । उक्तरीत्या तथैव प्राप्तेः वसस्तिरिति निरनुस्वारपाठे तु विसर्गसकारयोरित्युक्ततयोत्तरभाविन-मनुनासिकादिकमविवक्षित्वा तदभावावस्थापन्नरूपप्रदर्शनमित्याहुः । **उभयथाक्ष्विर्तीति** । इति सूत्रेणेत्यर्थः । अस्य विकल्पविधानेनेत्यनेनान्वयः । पूर्वेण नित्यप्राप्ते विकल्पः क्रियत इति काशिकानुसारेण सूत्रप्रवृत्तिं वर्णयति **पूर्वेणेति** । छन्दसीत्यनेन ऋक्ष्वित्यस्यार्थो वर्णितः पृथक्सूत्रार्थकथनात् । सूत्रार्थस्तु नकारान्तस्य पदस्याम्परे छवि परतः उभयथा भवति रुर्वा नकारो वा रुग्विषय इति । तस्मिन्त्वा दधाति तस्मिंस्त्वा दधातीत्याद्युदाहरणम् ।

**स०व्र०— पूर्वपदस्येति** । पूर्वपदान्तस्येत्यर्थः । नकारागम इति । विग्रहवाक्य इति शेषः । पृषोदरादित्वात्साधुत्वमिति हृदयम् ।

**॥ इति 'वसन्ति'पदसमन्वयः ॥**

* * *





**॥ अथ 'गच्छ'पदसमन्वयः ॥**

**१९ सु०—**

## अनु०— विगतच्छादनत्वात्तु गच्छ

**गमेश्छदेश्च 'डो(?)ऽन्यत्रापि दृश्यत' इति डप्रत्ययः । गं विगतं, छं छादनम् अविद्यादिकं यस्माद् असौ गच्छस्तस्य सम्बुद्धिः गच्छ । 'इन्द्रागच्छे'त्यादिव्याख्यानमेतत् ।**

**परि०— गमेश्छदेश्चेति** । गम्लृगतौ छदिरावरण आभ्यां सप्तम्यां 'जनेर्ड' इति डप्रकरणे 'अन्यत्रापि दृश्यत' इति सूत्रेण ड इत्यर्थः ।

**यादु०— गमेश्छदेश्चेति** । गम्लृ गतौ छदि संवरणे इत्येतयोरित्यर्थः । **गं विगतमित्यादि** । तथा च गमेः कर्मणि छदेश्च भावे डप्रत्ययः । तयोश्च टिलोपे गच्छेति प्रातिपदिकद्वयसिद्धिरित्युक्तं भवति ।

**वं०प०— गमेश्छदेश्चेति** । गम्लृ गतौ । अस्मात् डप्रत्यये छद संवरणे अस्माच्च डप्रत्यये उभयत्रापि टिभूत-अम् अद् इत्येतयोर्लोपे ग्+अ=ग, छ्+अ=छ । ततश्च गच्छेति रूपम् ।

**शे०वा०—** ननु गच्छेति कथं रूपनिष्पत्तिः । न च गमेश्छदेश्च डप्रत्यये डित्वाट्टिलोपे गच्छशब्द-निष्पत्तिरिति वाच्यम् । गमेश्चेत्यतो गम इत्यस्यानुवृत्तौ 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड' इति सूत्रे अन्तादिषु कर्मसूपपदेषु सत्स्वेव गमेर्धातोर्डप्रत्ययविधानेन निरुपपदात्तदविधानेन निरुपपदाद्गमेस्तदाश्रयणानुपपत्तेः । छदेस्तु न सोपपदादपि विधिरस्तीति कथं ड इत्यतो 'डोऽन्यत्रापि दृश्यत' इत्येतत्सूत्रीयवार्तिकादुभयत्रापि डप्रत्यय इत्याह **गमेश्छदेश्चेति** । यद्यप्युक्तवार्तिकादपि सोपपदाद्गमेरेव डो भविष्यति ग्रामग इत्युदाहरणान्न त्वन्यस्मान्न वा निरुपपदाद्गमेरपीति न विवक्षितार्थसिद्धिः । तथाऽप्युक्तवाक्ये सर्वोपाधिर्व्यभिचारार्थापिपदोपा-दानात् निरुपपदाद्गमेरन्यस्मादपि च तत्सिद्ध्या विवक्षितार्थसिद्धिरिति द्रष्टव्यम् । यद्यप्यन्येष्वपि दृश्यत इत्यत्रत्यस्यापिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वेन धात्वन्तरादपीति कारकान्तरेऽपीति च तेनैव सिद्धेस्तदेवे-होदाहर्तुं शक्यम् । विभावितं चेदम् 'इको गुणवृद्धी' इति सूत्रे जनेर्डं प्रक्रम्य गमेरप्ययं डो वक्तव्य इति वदता भाष्यकारेण तथाऽपि भूतकाले तेन डप्रत्ययेऽपि भूतकालं विना सर्वकालेऽपि डप्रत्ययसिद्ध्यर्थं वार्तिकोपादानमित्यवधेयम् । वस्तुतस्तु तत्सूत्रलब्धस्यार्थस्यैवायमनुवाद इति न किञ्चिदेतत् । अत्र च गमेः कर्तरि छदेश्च भावे डप्रत्यय इति विवेकः । विगतच्छादनत्वादिति योगनिरूपणस्य निर्विषयताशङ्कां परिहरति **इन्द्रागच्छेति** ।





**वा०र०— गमेश्चेत्यत इति** । अव्यवहितपूर्वसूत्रादित्यर्थः । **डोऽन्यत्रापीति** । यद्यपि काशिकायामपर आह डप्रकरणे अन्यत्रापि दृश्यत इतीत्येवोदाहृतं तथापीद्दण्डं (?) प्रकरण इत्येतल्लब्धस्य ड इत्यस्यानुवादेन डोन्यत्रापीत्युक्तम् । तथैव वार्तिकपाठोऽपीत्यप्याहुः । इत्येतत्सूत्रीयेति इति यत् एतत्सूत्रीयं अन्तात्यन्तेतिसूत्रीयं वार्तिकं कस्मादित्यर्थः । **उभयत्रापीति** । गमेच्छदेश्च निष्पन्नतयाङ्गीकृते ग इत्यत्र छ इत्यत्र चेत्यर्थः । गमछद इत्येतत्स्थलद्वयं सामान्यत उभयत्रेत्यनेन निर्दिश्यत इति (?) त्रलुपपत्तिः । एतेनोभाभ्यामिति भाष्ये उभयत्रेति कथमिति शङ्का निरस्ता । **इत्यादीति** । आदिपदेन गुरवः गुरुतल्पग इत्यादेर्ग्रहणम् । **नन्विति** । अत्र निरुपपदा-द्गमेर्न वान्यस्मादपीति योज्यम् । उत्तरवाक्ये तथैवोक्तेरित्यवधेयम् । उक्तवाक्ये वार्तिकं वाक्य इत्यर्थः । **व्यभिचारार्थापिपदेति** । व्यभिचारार्थकं यदपिपदं तदुपपादनादित्यर्थः । अन्येष्वपि दृश्यत इत्यत्रत्यस्येति अन्येष्वप्युपपदेषु कारकेषु च जनेर्डप्रत्ययो भवतीति सूत्रार्थः । पूर्वं हि सप्तम्यां जनेर्ड इत्यादि सूत्रेषु सप्तम्यामिति अजातावित्यादिकं चोक्तम्, तस्यायमपवादः । सर्वोपाधिव्यभिचारार्थकारिपदेन तु धात्वन्तरादपि कारकान्तरे च भवतीति प्रतिपाद्यते परितः खाता परिखेति काशिकोक्तेरिति भावः । भाष्यसम्मत्यापीममर्थं दृढयति **विभावितं चेति** । जनेर्डं प्रक्रम्येति भाष्ये हि इग्रहणं किमर्थमिति प्रश्नं कृत्वेग्रहणमात्स्यन्ध्यक्षर-व्यञ्जननिवृत्त्यर्थमिति वार्तिकमुदाहृत्येग्रहणं क्रियते । आकारनिवृत्त्यर्थं साध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं चेति आकारादीनां गुणवृद्धिस्थानित्वाभावार्थतयेग्रहणमिति व्याख्यायाकारानिवृत्त्यर्थं तावदित्यादिना तदुपपाद्य च प्रयोजनत्रयमपि प्रत्येकमाक्षिप्तमाकारनिवृत्त्यर्थेन तावन्नार्थ इत्यादिना तत्र व्यञ्जनस्य गुणनिवृत्त्यर्थत्वपक्षोपपादन-प्रकार एवं उभित्वेत्यादौ भकारव्यञ्जनस्य औष्ठ्यतयान्तरतम्यादोकारो गुणः प्राप्नोतीति तन्निवृत्त्यर्थं इग्ग्रहणमिति तदाक्षेपप्रकारस्तु जनेर्ड इति सूत्रकृता डित्करणं कृतम् । तेनैव व्यञ्जनानां गुणो न भवतीति ज्ञापितम् । यदि हि व्यञ्जनस्यापि गुणः स्वीक्रियते तर्हि स्त्रीगवीषु पुङ्गवानां गर्भाधानाय प्रथममुपसरणमुपसर उच्यत इति गूढार्थदीपिका इत्यादावपि ज इत्यस्य गुणेनैव सिद्धेर्ज इत्येतत्सिद्ध्यर्थं यत् डित्करणं तद्व्यर्थं स्यात् । ननु व्यञ्जनस्यापि गुणेन ज इति रूपं कथमिति चेत् । इत्थं सार्वधातुकार्धधातुकयोः इत्यनेन व्यञ्जनरूपस्थानिनोऽपि जनिति नकारस्य गुणे सति तस्य चान्तरतम्यादकाररूपतया गुणे परतः अतो गुण इति पररूपमेव भवति । पुनः पुनरूपमेवेति त्रयाणामकाराणामेकं रूपम् । यद्यपि परत्वाद्वर्णादाङ्गं बलीय इति (?) परिभाषाया वा पररूपा-पवादेन प्राप्तोऽतो लोप इत्यनेनार्धधातुके परतः चिकीर्षितेत्यादावकारलोपविधायकेन डिडूपार्धधातुकपरतया जेत्यत्रत्याकारलोपो वक्तुं शक्यः तथाप्यतो लोप इत्यत्रानुदात्तोपदेशेत्यत उपदेशग्रहणस्यानुवृत्तेरार्धधातुकोपदेशे यदकारान्तमङ्गं तदकारलोपस्यैव विधानेन गुणे निष्पन्नस्याकारस्य चार्धधातुकविधानोत्तरतया आर्धधातुक-विधानकालीनत्वाभावेन तदप्रसङ्गात् मञ्जर्यामाद्यपक्षनिरासावसरे अतो लोपे चेत्युक्तिस्तु उक्तानुपपत्त्या अतो अकारस्य लोपे दर्शने अतो गुण इत्यनेन पररूपे सतीति व्याख्येया कुसुमविकासे सिद्धवत्सूत्रप्रत्याख्यानाभावे गतो गतवानित्यादौ नलोपस्यासिद्धत्वादतो लोपाप्रसङ्गेन तदप्रसङ्गार्थमुपदेश इत्यस्यानुवृत्तेरङ्गीकार्यत्वाद्यथाश्रुत एव सूत्रार्थो भवतीत्यतो अतो लोप इति मञ्जरीवाक्यमपि यथाश्रुतार्थमेव साध्विति पक्षान्तरमप्युक्तं भाष्यकृता तु





त्रयाणामकाराणां पररूपेणेति स्पष्टमभिधानात् तदेवानुसर्तव्यम् । ततश्च ज इति रूपस्य गुणेनैव सिद्धिरिति । एवं प्रयोजनत्रयेऽप्याक्षिप्ते गापोष्टगिति टकः कित्करणमाकारस्य गुणाभावे ज्ञापकसन्ध्यक्षराणामुपदेशसामर्थ्याद्गुणभाव इति इग्रहणस्य तदुभयत्र गुणाभावार्थत्वायोगेऽपि व्यञ्जनस्य गुणनिवृत्त्यर्थत्वं तु तस्य युक्तमित्याशयेन तत्पक्षसमर्थनं कृतं भाष्यकारेण यदप्युच्यते जनेर्डवचनमित्यादिना तत्र ह्येवमुक्तं भवति । गुणेनैव ज इति रूपसिद्ध्या डित्करणवैय्यर्थ्यात् तदन्यथानुपपत्त्या व्यञ्जनानां गुणाभावसिद्धिरिति यदुक्तं तदसत् । जनैर्गुण उच्यमान आकार एव कुतो भवेत् एकारो वा ओकारो वा कुतो न स्यात् । तथा चाकारस्यैव गुणस्य नियमतः प्राप्त्यभावाद्गुणेन ज इति रूपसिद्धस्योगात् (?) तेन तस्मिन् सिद्ध एवारभ्यमाद्याविधेर्ज्ञापकत्वौचित्वान्न जनेर्डप्रत्ययस्य डित्करणान्यथानुपपत्त्या व्यञ्जनस्य गुणो न भवतीत्येतत्सूत्रकृदाचार्यज्ञापितमिति कल्पयितुं शक्यत इति व्यञ्जनस्य गुणाभावार्थनिग्रहणमिति सोऽयमुक्तरीत्या जनेर्डस्य प्रक्रमो भाष्यकारीयो ज्ञेयः । प्रक्रम्य वामेरप्ययण्डो (?) वक्त इति वदतेत्यनेन तत्राप्यर्धमात्रस्य व्यञ्जनस्य मात्रिकोकार एवान्तर्याद्भवतीति गुणेन ज इति रूपसम्भवाद्युक्तं डित्करणविधेरुक्तार्थज्ञापकत्वमित्यादिरूपेण जन्युदाहरणे स्वरसोद्भावनानन्तरमेवं तर्हि गमेरप्ययण्डो (?) वक्तव्य इत्युदाहरणान्तरमाश्रित्य गुणानुपपत्तिमुपपाद्य गुणेन रूपसिद्धेरनुपपन्नत्वात् तत् रूपसिद्ध्यर्थं डित्करणस्यावश्यकतया तस्य ज्ञापकत्वायोगादिग्रहणमावश्यकतया तस्य ज्ञापकत्वायोगादिग्रहणमावश्यकमिति भाष्योक्तमुदाहरणं (?) क्रममभिप्रैति **गमेरपीति । सप्तम्यां जनेर्ड इत्यतोऽन्येष्वपि दृश्यत इति** । अत्रानुवर्तमानो डो गमेरपि विधीयत इति न ज्ञापकत्वं डित्करणस्येति कैय्यटोक्तरीत्यार्थः । तत्कैय्यटवाक्याद्भाष्याभिप्रेततया अन्येष्वपि सूत्रस्थापिपदस्य सर्वोपाधिव्यभिचारार्थतया तत एव डप्रत्यय इति प्रतीयमाने यत्प्रदीपविवरणादौ अन्येभ्योऽपि दृश्यत इति वार्तिकिनेति व्याख्यानं तदनवधानमूलमिति स्पष्टम् । तथा च भाष्यकारेण गमेर्डस्यान्येष्वपि दृश्यत इत्यनेनैव सिद्ध्यङ्गीकाराद्ग्रामगः नगरगः इत्यादिरूपसिद्ध्येऽर्थे मतात्यन्ताध्वदूरेति प्रकरणे डोऽन्यत्रापि दृश्यत इति वार्तिकमनारभ्यमेवेत्याशयः । **अत एवान्येष्वपीति** । सूत्रीयमन्येभ्योऽपि दृश्यत इति वार्तिकमपि गतार्थमित्यपि बोध्यम् । भूतकालं विनापि यथा स्यादित्येवमर्थमिति रमोक्तं समाधानमाह **तथापीति** । एवं रमोक्तसमाधानेन वार्तिकारम्भमुपपाद्यान्तात्यन्ताध्वदूरेति सूत्रीयमश्चर्यनुसारेण समाधानमाह **वस्तुतस्त्विति** । **तत्सूत्रेति** । अन्येष्वपि दृश्यत इति सूत्रेत्यर्थः । एतच्चोपलक्षणम् । अन्तात्यन्तेति सूत्रमपि प्रपञ्चरूपमेवेति अन्ततोऽन्येष्वपि दृश्यत इति एतत्सूत्रस्यैवादरणं कार्यमिति भावः । गमेः कर्मणि छदेश्च करण इति पाठः । विगतम् अविद्यादिकमिति विवरणानुसारात् एरजिदैतीति इवर्णान्ताद्धातोर्भावे अकर्तरि संज्ञायामच्प्रत्ययो भवति । घञोऽपवाद इति सूत्रार्थः ।

**स०व्र०— गमेश्छदेश्चेति** । गम्लृ गतौ छदि संवरणे इत्येतयोरित्यर्थः ।

**॥ इति 'गच्छ'पदसमन्वयः ॥**

* * *





**॥ अथ 'भुंक्ष्व'पदसमन्वयः ॥**

**२०　सु०—**

**अनु०—　　　　भूतक्षयंकरः ॥**

**भुंक्ष्वेत्युक्तो हरिः**

**भुशब्दो भूतशब्दस्यादेशः, क्षयशब्दस्य च क्ष्वः, पूर्वपदस्य मकारागमः । पृषोदरादिरयम् ॥ यद्वा क्षि क्षय इत्यस्मात् ड्वप्रत्ययः । अयमपि सम्बुद्ध्यन्तः ।**

**परि०— पृषोदरादिरयमिति** । 'पृषोदरादीनि यथोपदिष्टमि'ति षष्ठतृतीयपादे सूत्रम् । तत्रादिशब्दः प्रकारवचनः । यथोपदिष्टमिति वीप्सायामव्ययीभावः । येषु वर्णागमलोपविकाराः शास्त्रेणाविहिता लोके च दृश्यन्ते तानि पृषोदरप्रकाराणि शब्दरूपाणि यथोपदिष्टं शिष्टैः प्रयुक्तानि सर्वाण्यपि साधून्येव मन्तव्यानीति षष्ठतृतीयपादे वृत्त्यादावुक्तत्वात्पृषोदरादिरयमित्युक्तम् । साधूनी-त्युक्तत्वाद् ये शब्दाः वर्णागमविकारलोपादियुततया व्यवहृतास्ते तथैव साधवः पृषोदरादिगणे द्रष्टव्या इत्युक्तत्वादयमपि तथैव निर्वाह्य इत्यर्थः ।

**गु०दी०—** तस्य चाकृतिगणत्वात् **पृषोदरादिरयम्** इत्युक्तम् । एवं च भूतशब्दस्य भूशब्दादेशादिकं समाहितं वेदितव्यम् ।

**यादु०— पृषोदरादिरिति** । 'पृषोदरादीनि यथोपदिष्टमि'ति पृषोदरादिगणस्य यथोपदिष्टस्यैव साधुत्वा-भिधानात् भुशब्दो भूतशब्दस्यादेश इत्यादिकमुपपद्यते । तत्र हि येषु लोपागमवर्णविकाराः शास्त्रेणाविहिता लोके च दृश्यन्ते तानि तथैव शिष्टैरुच्चारितानि साधूनीत्युच्यन्ते । यथा ऊर्ध्वं खमस्य इत्युलूखलमित्यत्रोर्ध्व-खशब्दयोः उलू खल इत्येतावादेशौ स्त इत्यादि । तथाऽयमपि तस्याकृतिगणत्वादिति भावः । **ड्वप्रत्यय इति** । तथा च टिलोपे क्ष्वेति रूपमिति भावः ।

**वं०प०— यद्वेति** । अत्र पूर्ववत् भुशब्दो भूतशब्दस्यादेशस्तस्य च मकारागमश्च तुल्यः, पश्चात् क्षि क्षयेऽस्मात् ड्वप्रत्यये टिभूतस्य इकारस्य लोपे क्ष्+व=क्ष्व । ततश्च भुंक्ष्वेति रूपम् ।

**शे०वा०—** नन्वेवं भूतानि क्षिणोतीति क्षिधातोः 'एरजि'ति अचि गुणायादेशयोर्भूतक्षय इति भवितव्यं भुङ्क्ष्वेति तु कथमित्यत आह **भुशब्द इत्यादिना** । **क्ष्व इति** । आदेश इति वर्तते । ततश्च





भुङ्क्ष्वेति रूपसिद्धिरिति भावः । ननु च विधायकाभावात्कथमादेशादिकमित्यत आह **पृषोदरादिरयमिति** । 'पृषोदरादीनि यथोपदिष्टमि'ति पृषोदरादिगणस्य यथोपदिष्टस्यैव साधुत्वाभिधानात् । उर्ध्वं खं मुखमस्ये-त्युलूखलम् इत्यादौ ऊर्ध्वखशब्दादेरुलूखल इत्याद्यादेशवत् भूतक्षयशब्दयोर्भुङ्क्ष्व इत्यादेशादिकमुपपन्नं पृषोदरादिगणस्याकृतिगणत्वादिति भावः । शब्दद्वयस्योक्तरीत्याऽऽदेशाश्रयणे गौरवं मनसि निधाय भुशब्दो भूतशब्दस्यादेश इति पूर्वपदस्य मकारागम इति चाश्रित्य, क्षयशब्दस्य क्ष्वाऽदेशमनाश्रित्य समाधत्ते **यद्वेति** । **ड इति** । उणादयो बहुलमिति बहुलग्रहणात् क्षिणोतेर्डप्रत्ययेऽजादित्वाभावात् यचि भमिति भसंज्ञाया-मसत्यामपि डित्करणसामर्थ्याट्टिलोपे क्ष्वेति रूपसिद्धिरिति भावः ।

**वा०र०**— यद्वा क्षि क्षय इत्येतत्पक्षे भूते शब्दस्य भूत इत्यादेशादेः प्रतिपादनाभावान्न्यूनतेति न शङ्कनीयमित्याशयेनाह **भुशब्दो भूतशब्दस्येत्यादिना** ।

**स०व्र०**— **पृषोदरादिरयमिति** । 'पृषोदरादीनि यथोपदिष्टमि'ति पृषोदरादिगणस्य यथोपदिष्टस्यैव साधुत्वाभिधानात् भुशब्दो भूतशब्दस्यादेश इत्यादिकमुपपद्यते । तत्र हि येषु लोपागमवर्णविकाराः शास्त्रेणाविहिता दृश्यन्ते, तानि तथैव शिष्टैरुच्चारितानि साधूनीत्युच्यन्ते । ऊर्ध्वं खं मुखमस्येत्युलूखलमित्यत्रोर्ध्वखशब्द-स्योलूखल इत्येतावादेशौ स्त इत्यादि यथा, तद्वत्प्रकृतेऽपीति भावः ।

**विठ्ठल०**— **पृषोदरादीति** । पृषोदरादीनि यथोपदिष्टमिति पृषोदरादिगणस्य यथोपदिष्टस्य साधुताभि-धानाद्भूशब्दो भूतशब्दस्यादेश इत्यादिकमुपपद्यत इति भावः ।

**॥ इति 'भुंक्ष्व'पदसमन्वयः ॥**

* * *

**॥ अथ 'हुं'पदसमन्वयः ॥**

**२१ सु०—**

## अनु०— हुं च हुतमस्मिन् जगद्यतः ।

**जुहोतेरधिकरणे मकारप्रत्ययः । कृन्मेजन्त इत्यव्ययत्वम् । हुतं स्वेनैव अस्मिन् विष्णौ जगत् प्रलयादौ यतः अतो हुं च असावित्यर्थः । कर्मविशेषानुक्तेर्जगदित्युक्तम् ।**

**परि०**— **जुहोतेरिति** । हु दानादानयोरित्यस्मादित्यर्थः । **कृदिति** । कृदन्तं मकारान्तमेजन्तं च शब्दरूपमव्ययं भवतीति सूत्रार्थः ।





**गु०दी०— कृन्मेजन्त इत्यव्ययत्वम्** इत्यत्र कृदन्तः मान्तः एजन्तश्चाव्ययसंज्ञः स्यादिति सूत्रार्थः । तथा च हुम् इत्यस्य मान्तत्वेनाव्ययत्वमिति भावः ।

**यादु०— जुहोतेरिति** । हु दानादानयोरित्यर्थः । **कृन्मेजन्त इति** । कृद् यः नान्त एजन्तश्च सोऽप्यव्ययं स्यादिति सूत्रार्थः । स्मारंस्मारमित्याद्युदाहरणम् ।

**वं०प०— जुहोतेरिति** । हु दानादानयोरित्यर्थः । तथाच हु अस्मादधिकरणे मकारप्रत्यये हुमिति रूपम् । नन्विदं हुशब्दस्य उकारान्तस्य द्वितीयैकवचनमिव भाति । ततः प्रायपाठविरोध इत्यत आह **कृन्म इति** । कृदन्तः मान्त एजन्तश्च सोऽव्ययं स्यादिति सूत्रेण हुमित्यस्याव्ययत्वं मान्तत्वादिति ध्येयम् ।

**शे०वा०—** ननु हुतमस्मिञ्जगद्यत इति भाष्यानुसारेण हूयतेऽस्मिन्नित्यधिकरणनिष्पन्नस्य हुंशब्दस्य हवनमिति भवितव्यम् । जुहोतेरधिकरणे ल्युटि 'युवोरनाकावि'त्यनादेशे गुणावादेशप्राप्तेस्तत्कथं हुमिति रूप-निष्पत्तिरित्यतो 'अर्तिस्तुसुहुसृधृक्षिक्षुभायायदियक्षिनीभ्यो मन्' इत्यधिकरणे मन्प्रत्यये बाहुलकान्मन्प्रत्ययस्य टिलोपे बाहुलकादेव गुणाभावे च सति हुमिति रूपनिष्पत्त्युपपत्तिरित्याशयेनाह **जुहोतेरिति** । नन्वेवं कृदन्ततया कृत्तद्धितेति प्रातिपदिकसंज्ञायां सुप्श्रवणापत्तिरित्यतो मान्ततया 'कृन्मेजन्त' इत्यत्र्ययत्वेनाव्ययादाप्सुप इति तल्लोपान्न सुप्श्रवणप्रसङ्ग इत्याह **कृन्मेजन्त इत्यव्ययत्वमिति** । कृद् यो मान्त एजन्तश्च तदन्तशब्दरूप-मव्ययसंज्ञं भवतीत्युदाहृतसूत्रार्थः ॥

**वा०र०— भमितीति** । इत्युणादिसूत्रेणेत्यर्थः । सूत्रविचारस्तु जिज्ञासाधिकरणे ॐशब्दव्युत्पादना-वसरे कृतोऽवधेयः । अर्मः स्तोम इत्याद्युदाहरणं मकारप्रत्ययस्याभावान्म एव टिलोपे मकारमात्रावशेषाभि-प्रायेणेदमित्याशये स्पष्टीकरोति **अधिकरणे मन्प्रत्यय इत्यादिना** । अवसिविशुषिभ्य किदित्यादिना व्यादिभ्यः परस्य मनः कित्वाभावेन गुणः स्यादित्यत उक्तम् **बाहुलकादेवेति** । **सुप्श्रवणापत्तिरिति** । यद्यपि मोहलन्ततया हल्ङ्याविति तलोपे सुप्श्रवणं न प्रसज्यते अत एव परिहारमूलमप्यनर्थकमित्याभाति तथापि हुम्शब्दस्य भगवद्वाचकस्य वचनान्तरे सुप्श्रवणप्रसङ्गे तात्पर्यं मूलकृतेऽपि वचनान्तर एव तत्प्रसङ्गपरिहारायाव्ययत्वं वस्तुस्थितितयोक्तमिति ज्ञेयम् । हे ज्ञानेत्यत्रत्यशेष्यनुसारेण हलोपादिति स्वमोर्नपुंसकादित्यनेन प्राप्तादिति भावः ।

**स०व्र०— जुहोतेरिति** । हु दानादनयोरिति धातोरित्यर्थः ।

**विठ्ठल०— जुहोतेरिति** । हुदानादानयोरित्यर्थः । **कृन्मेजन्त इति** । कृदन्तः मकारान्तः एजन्तश्चाव्ययं स्यादिति सूत्रार्थः ।





चषकः— **कृन्मेजन्त इति** । कृद् यः । मान्त एजन्तश्च सोऽव्ययं स्यादिति सूत्रार्थः । णमुलन्तादीन्युदाहरणानि ।

**॥ इति 'हुं'पदसमन्वयः ॥**

* * *

**॥ अथ 'फट्'पदसमन्वयः ॥**

२२ सु०—

## अनु०— स्फुटत्वात्फडिति प्रोक्तः

स्फुटविकसन इत्यस्मात्कर्तरि क्विप् । सकारलोपः । उकारस्याकारः । **स्फुटत्वात्** स्वात्मानं प्रति व्यक्तत्वादसंकुचितवृत्तित्वात् (इति) वा ।

वं०प०— तर्हि फुटेति स्यादित्यत आह **उकारस्येति** ।

शे०वा०— **क्विबिति** । क्विप्चेति सूत्रेणेति शेषः । ततश्च कृदन्ततया प्रातिपदिकत्वमिति भावः । नन्वेवं स्फुडिति स्यात्कथं फुडित्यतो निरुक्तत्वात्सकारलोपाद्युपपत्तेरदोष इत्याह **सकारलोप इत्यादिना** ।

**॥ इति 'फट्'पदसमन्वयः ॥**

* * *

**॥ अथ 'कवच'पदसमन्वयः ॥**

२३ सु०—

## अनु०— कवरक्षण इत्यतः ।
## कवचं

कवरक्षणं **इत्यतः** = इत्यस्य(स्मात्) धातो रूपं कवचमित्येतदित्यर्थः । कवतेरच इत्येतावान् (एव) प्रत्ययः । कवति रक्षतीति कवचम् ।





**वं०प०— कवतेरिति** । ततश्च कवु अस्मात् अच्प्रत्यये कवचेति रूपम् ।

**शे०वा०—** ननु कवतिरूपत्वे कवतेः कर्तरि पचाद्यचि सति कवेति भवितव्यं तत्कथं कवचमिति रूपनिष्पत्तिरित्यत उणादयो बहुलमिति बहुलग्रहणादच इत्येतावति प्रत्यये सति तत्सिद्धिरित्याशयेनाह **कवतेरिति** ॥ **अच इत्येतावानिति** । अचमित्येतावानित्यर्थः । प्रयोजनाभावाच्च न मकारस्येत्संज्ञा । ततश्च मान्तत्वात्कृन्मेजन्त इत्यव्ययत्वमिति ध्येयम् । यद्वा । अच इत्येतावानेव प्रत्ययः । ततश्च कवच इति स्थिते लोपात्परत्वाद् 'अतोमि'त्यमि कृते परत्वान्नित्यत्वाच्चामि पूर्वरूपत्वे च कृते तस्यान्तवद्भावात् ह्रस्वात्परस्य सम्बुद्धेः सम्बन्धिनो मकारस्य हे ज्ञानेत्यादिवत् 'एङ् ह्रस्वादि'ति प्राप्तस्य लोपस्य बाहुलकान्निवृत्तौ कवचमिति सम्बुद्ध्यन्तरूपसिद्धिः ।

**वा०र०— परत्वान्नित्यत्वाच्चेति** । एतच्च परनित्यान्तरङ्गेति परिभाषानुसारेण प्रतिपादितमनुसृतम् ।

**॥ इति 'कवच'पदसमन्वयः ॥**

* * *

**॥ अथ 'वषट्'पदसमन्वयः ॥**

**२४ सु०—**

**अनु०— वर्तते यस्मात् षड्गुणत्वेन सर्वदा ।**

**वषट्**

**वृतु वर्तने डप्रत्ययः, वर्तत इति वः । षड्गुणात्मकत्वात् षट् । वश्चासौ षट् चेति वषट् । तस्य तात्पर्यं वर्तत इत्यादि । ऐश्वर्यवीर्ययशःश्रीज्ञानवैराग्याणि षड्गुणाः ।**

**वं०प०— डप्रत्यय इति** । ततश्च वृतु वर्तनेऽस्मात् डप्रत्यये टिभूतस्य ऋत् इत्यस्य लोपे व्+अ=व इति रूपम् ।

**शे०वा०— डप्रत्यय इति** । डोऽन्यत्रापि दृश्यत इति वार्तिकाद्वा ' अन्येष्वपि दृश्यत ' इति सूत्राद्वेति शेषः । के ते षड्गुणा इत्यत 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव' इति वचनं मनसि निधाय तानाह **ऐश्वर्येति** ।





**वा०र०— डोऽन्यत्रापीति** । अन्यत्रापि दृश्यत इत्येव वार्तिकं डप्रकरण इत्येतल्लुब्धकनण्ड इतीति प्रागेवोक्तम् । तथा वार्तिकारम्भमङ्गीकृत्य तदुपन्यासः तदनारम्भपक्षानुसारेण सूत्रमुपन्यस्तमिति पूर्वटीकोक्तरीत्या स्पष्टम् ।

**॥ इति 'वषट्'पदसमन्वयः ॥**

* * *

**॥ अथ 'वौषट्'पदसमन्वयः ॥**

**२५ सु०—**

## अनु०— तद्गत्वतस्तेषां वौषट्

**विः = विष्णुः । 'अकयप्रविसम्भूमसखहा विष्णुवाचका' इति वचनात् । तस्मिन् वौ = वर्तमानाः, षट् = गुणा वौषट् । सप्तम्या अलुक् । अस्य तात्पर्यार्थः, तेषां षण्णां गुणानां तद्ग(त)त्वतो वौषट् इति ।**

**परि०— इति वचनादिति** । अन्तर्यामिब्राह्मणे बृहद्भाष्योक्तवचनादित्यर्थः ।

**वं०प०— विष्णुवाचका इति** । एकैकमक्षरं विष्णुवाचकमित्यर्थः । तर्हि सप्तम्या लोपे विषडिति स्यादित्यत आह **सप्तम्या इति** ।

**शे०वा०— वौ वर्तमानाः षडिति** । वाविति सप्तम्या वर्तमानशब्देन सप्तमीति योगविभागात्समासे सति 'सुपो धातुप्रातिपदिकयोरि'ति प्रातिपदिकावयवतया सुपो लुकि सति विवर्तमानशब्दस्य षट्शब्देन विशेषण-समासे सति विवर्तमानशब्दस्य यदुत्तरपदं वर्तमाना इति तस्य 'शाकपार्थिवादीनामुत्तरपदलोपश्चे'त्यनेन लोप इति भावः । ननूत्तरपदलोपेऽपि विषडिति भवितव्यं तत्कथं वौ षडिति सप्तमीश्रवणमित्यतः 'तत्पुरुषे कृतिबहुलमि'ति बहुलग्रहणात्सप्तम्या अलुक्सम्भवाद्युक्तं वौषडिति सप्तमीश्रवणमित्याह **सप्तम्या अलुगिति** ।

**वा०र०— सुपो धात्विति** । एतत्प्रतिपादनं च सप्तम्या इत्युत्तरवाक्यावतारोपयोगितया वस्तुस्थिति-कथनायात्र कृतं शाकपार्थिवादीनामिति सिद्धय इति शेषः । शाकपार्थिव इत्यादेः प्रयोगस्य सिद्धये विशेषणसमासे





सति पूर्वपदे यदुत्तरं पदं तस्य लोपो भवतीत्यर्थः । शाकपार्थिवादेश्चाकृतिगणत्वादिति भावः । सुपो धात्वित्यादि यदर्थं प्रतिपादितं तदिदानीमाह **ननूत्तरपदेति** । **तत्पुरुष इति** । कृतिपरपदे सति सप्तम्या बहुलमलुक् स्यात् तत्पुरुष इति सूत्रार्थः । स्तम्बे रमः कर्णे जप इत्याद्युदाहरणम् ॥

यद्यपि वौषडिति यत्कथ्यते वौषडित्यनेन कथ्यमानं इति यावत्, तद्वौ, वर्तमानाः षड्गुणा एवेत्युद्देश्यविधेयभावेन योजनायां, वौ वर्तमानाः षड्गुणाः वौषट्, तदात्मकतया हरिः वौषडिति कथ्यत इति वा योजितुं शक्यम्, तथापि अनेकनामत्वस्य मुखतो लाभार्थं तथा न योजितमिति ज्ञेयम् । उक्तरीत्या कथधातो-रकर्मकत्वोपपत्त्या तस्माद्भावे लकारः सम्भवतीति तदसम्भवमूलकं यत्प्राचीनटीकास्थं व्याख्यातं भावे कर्मणि प्रयोगो न किन्तु भवितृकर्माणि भवितुश्चैकत्वात् एकवचनोपपत्तिरिति तदभ्युच्चयेनैवेति ज्ञेयम् । अत्र द्वे कर्मणी गुणा हरिश्च तत्रायं प्रयोगो न गुणविवक्षाया येन बहुवचनप्रसङ्गः अपि तु हरिविवक्षया तस्य तु एकत्वादेकवचनम् उपपन्नमिति भावकथनं चाभ्युच्चयैव भावपदस्य धात्वर्थपरतायाः वैय्याकरणमर्यादया सिद्धायास्तद्रीत्या साधुत्व-व्युत्पादनावसरे इह ग्राह्यते न धर्मपरत्वस्याश्रयणायोगाच्च । अन्यत्रापि भावे क्ताद्यभिधानस्थले सकर्मकाद्धातो-स्तदनुपपत्त्या भावपदस्य धर्मपरत्वाश्रयणेन व्याख्यानापाताच्च । किञ्च विर्विष्णुः अकयप्रविसम्भूमेत्याभ्य तदिदमुक्तमित्येवेतीत्यन्त प्राक्तनसुधाग्रन्थे अनुव्याख्यानस्य तात्पर्यकथनत्वोक्त्या वौ वर्तमानाः षड्गुणा इति कथ्यत इति योजना लब्धा । न चैतावता गुणवद्धरेरपि कर्मताप्रसङ्गोऽस्ति । अत एव न चैवमित्यादि शङ्कासमाधानादिकमपि गुणमात्रविषयम् । अत्र शङ्कावाक्यस्यायमर्थः । यदि वौषट्शब्देनोक्तरीत्या गुणानामेवा-भिधानं तर्हि तच्छब्दस्य गुणवाचकतया भगवन्नामत्वानुपपत्तिरिति समाधानवाक्यस्य तु न गुणवाचकत्वेऽपि भगवन्नामत्वानुपपत्तिः गुणानां भगवदात्मकत्वेन गुणवाचकस्यैव भगवद्वाचकतया तन्नामत्वोपपत्त्येत्यर्थः । स्वकृतशङ्कासमाधानरूपचर्यस्य मूलारूढताया अभिहितं तदिदमिति अयमर्थः । वौ विद्यमानाः षड्गुणाः वौषडिति वौषडिति शब्दस्य षड्गुणवाचकत्वपक्षपरित्यागेन एकधर्मिभूतहरिपरत्वार्थं व्युत्पत्तिप्रयासो न कार्यः । गुणानां भगवदात्मकत्वेन तद्वाचकशब्दस्य भगवद्वाचकत्वोपपत्त्या भगवतोऽशेषनामत्वाहानेः अशेषनामत्वार्थमेव च ज्योतिरादिशब्दानां भगवति व्युत्पत्त्यभिधानात् ततश्चोक्तरीत्या वौ वर्तमानाः षड्गुणाः वौषडित्येवं षड्गुणानामेव कथने भगवतोऽशेषनामत्वानुपपत्तिदोषाभावात् वौ विद्यमानाः षड्गुणा इति कथनं युक्तमित्याशयेनानुभाष्ये इत्येवेत्येवंकारोपादानमिति । एवं च पूर्वग्रन्थे हरेः कर्मताया अप्रसक्तेस्तदङ्गीकारेण योजना कथं नाम कर्तव्ये-त्यलम् । श्रीसत्यनाथतीर्थश्रीचरणैस्तु कार्यान्तरार्थमेतच्छङ्कान्तरस्थप्रकाराश्रयणं न दोषः ।

**॥ इति 'वौषट्'पदसमन्वयः ॥**

* * *





**॥ अथ ब्रह्मगतगुणानां ब्रह्मनामत्वानुपपत्तेर्निरासः ॥**

२६ **सु०—**

**अनु०— इत्येव कथ्यते ॥**

**न चैवं भगवन्नामत्वानुपपत्तिः । तद्गतगुणानामपि तदात्मकत्वात् । तदिदमुक्तम् इत्येवेति ।**

**तर्हि कथ्यत इति कथम् । भावे प्रयोगो न कर्मणीत्यतो न दोषः ।**

**परि०—** ननु कथ्यत इत्यस्य कर्मणि निष्पन्नत्वेन विष्णौ वर्तमानवौषट्शब्दोक्तषड्गुणानामेव कथनक्रियां प्रति कर्मत्वेन तेषां च बहुत्वात्कथं कथ्यत इति भाष्यमिति शङ्कते **तर्हि कथ्यत इति कथमिति** । भावे कथ्यत इत्यस्य निष्पन्नत्वाद्भावस्य चैकत्वादेकवचनं युक्तमित्याशयेन परिहरति भाव इति । इत्येव कथनमित्यर्थ इति भावः ।

**गु०दी०— भावे प्रयोग** इति वदता कथ्यत इत्यस्य कथनमित्यर्थ उक्तो भवति ।

**यादु०— तर्हि तत्कथ्यत इतीति** । कथ्यत इत्यस्य कर्मणि निष्पन्नत्वात्कर्मतया विवक्षितानां च षड्गुणानां बहुत्वात्कथं कथ्यत इत्येकवचनमिति भावः । **भावे प्रयोग इति** । भावस्य चैकत्वादेक वचनमिति भावः । तथा च कथ्यत इत्यस्य वौषडिति कथनं भवतीत्यर्थो ज्ञेयः ।

**वं०प०—** वौ वर्तमानाः षट् वौषडिति निर्वचनेन गुणानामेव वौषट्शब्दवाच्यत्वं प्राप्तं न तु भगवत इत्याशङ्क्य निषेधति **न चैवमिति** । **इत्येवेतीति** । इति पूर्वोक्तरीत्या गुणानामेव वौषडितिशब्दवाच्यत्वं भवति । यतस्ते भगवदात्मकाः । अतो गुणानां तच्छब्दवाच्यत्वोक्तौ भगवत एवोक्तं भवतीति भावोऽभिप्रेतोऽस्तीति भावः ।

**आनन्दः— तर्हि कथ्यत इति कथमिति** । इत्येव हरेः कथनभावप्रत्ययः प्रयोक्तव्यो न तु कर्मप्रत्यय इत्यर्थः । परिहरति **भाव इति** ।

**शे०वा०— अनुपपत्तिरिति** । गुणप्रतिपादकत्वादिति भावः । कथ्यत इत्यस्य कर्मणि निष्पन्नतया विष्णौ वर्तमानषट्शब्दोक्तगुणानामेव कथनक्रियां प्रति कर्मत्वेन तेषां च बाहुल्याद्भाष्ये कथ्यन्त इति बहुवचनेन





भवितव्यं कथ्यत इत्येकवचनं तु कथमित्याक्षिपति **तर्हीति** । भावे कथ्यत इत्यस्य निष्पन्नत्वाद्भावस्यैकत्वा-देकवचनं युक्तमिति परिहरति **भाव इति** । तथा च विष्णौ वर्तमाना गुणा इति कथ्यत इति कथनमिति योजनोक्ता भवति ।

**वा०र०— भावे कथ्यत इत्यस्येति** । ननु कथधातोः सकर्मकत्वेन सकर्मकेभ्यश्च धातुभ्यः कर्मणि कर्तरि च लकारोत्पत्तव्यत्वेन भावाल्लकारायोगः । यथाह पाणिनिः लः कर्मणि च भावे चाकर्मकेभ्य इति । उक्तं च काशिकायां सकर्मकेभ्यो भावे न भवतीति तत्कथं समर्पकादपि भावे लकाराश्रयणेन व्याख्यानमिति चेदत्र ब्रूमः । कथधातोः सकर्मकत्वेऽपि अनुभूयते सुखमित्यादौ भ्वादीनामकर्मकाणामपि सौपसर्गत्वान्तर्भूत-ण्यर्थत्वादिना सकर्मकत्ववत् प्रयोक्तुः कर्माविवक्षया कर्मकत्वेन तस्माद्भावे लकारोपपत्तेः । यथोक्तं न वेति विभाषा भुवो भाव इत्यादि सूत्रीयभाष्ये अकर्मका अपि सोपसर्गाः सकर्मका भवन्तीत्यादि तत्तत्सूत्रीयोक्तार्थ-विषयकग्रन्थकृतामुक्तयस्तु विस्तरभयान्न प्रदर्श्यन्ते तथा अधीगर्थदयेशां कर्मणि इत्येतत्सूत्रीयवार्तिकं प्रत्या-चक्षाणेन भाष्यकृता अकर्मकवद्भाववचनप्रयोजनतया भावे लादिकं व्युत्पाद्याकर्मकवद्भावावचनेऽपि कर्मादीना-मविवक्षितक्षणविशेषेण सर्वत्र भादेः षष्ठ्याश्च समर्थनं कृतम् । कैय्यटादौ कारकपरीक्षायां च स्पष्टमेतत् । तथा सकर्मकाकर्मकयोः परस्परं विनिमयाभिधायकं वचनं वैय्याकरणानां धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति अर्थान्तरवृत्त्याकर्मकस्यापि सकर्मकत्वं यथासुखमनुबभूव उत्साहा-द्भवते लक्ष्मीं प्राप्नोतीत्यर्थ इति एकस्यांशस्याकर्मकाणामपि सकर्मकत्वमित्येतत्साधकतया सम्पूर्णस्य व्याख्यानं उदाहरणपूर्वकं सयोगम्पृच्छिभ्यामित्येतत्सूत्रीयहरदत्तग्रन्थादावेव गवेषणीयं तत्राविवक्षातः कर्मणोऽकर्मकत्वं प्रयोक्तुरविवक्षितत्वात् कर्मणः सकर्मकादपि भावे लकारः यथा नेह पच्यते नेह भुज्यते इत्यादिना व्युत्पादितं प्रकृतोपयोगि तथा णेरणाविति सूत्रे हरदत्तेनोक्तं यथा नेह पच्यते नेह भुज्यत इति पाकमात्रनिषेधे तात्पर्यमिति कर्माविवक्षायां लो भवतीति । उक्तं च तेनैव समानकर्तृकेषु तुमुन्विति सूत्रे । ननु भावे तुमन् विधीयते तत्कथ-मिच्छन् करोतीत्यत्र कर्तरि प्रसङ्गः । एवमपि इच्छता क्रियत इत्यत्र प्रसङ्गादनभिधानमेवाश्रयणीयमिति । उक्तं च तत्रैव सूत्रे शेषिकृतापि इच्छन् करोतीत्यादावप्रयोगान्नेत्येतत्प्रक्रियावाक्यव्याख्यावसरे ननु भावे तुमन् विधीयते सत् कथं कर्तरि स्यात् । एवं तर्ह्युपलक्षणमेतत् इच्छता क्रियत इत्यत्र कर्माविवक्षया भावे प्रसङ्ग इति । अनेन हि भावे लडिच्छता क्रियत इत्यत्रेत्युक्तं भवति तथा कृतपूर्वी कट इति उदाहरणे तस्मात्कर्मसामान्ये भावे वा क्त उत्पद्यत इति यदा तु कृतः पूर्वमनेनेति कर्मसामान्ये भावे वा क्त उत्पद्यत इति च कैय्यटहरदत्ताभ्यां कर्तृकर्मणोः कृतीति सूत्रेऽभिहितं शेषीकृता च तत्र तत्र तथैवोक्तं अविवक्षितकर्मकतया भावे क्त इति नवीनेनापि आदि कर्मणि क्तः गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुजीर्यतिभ्यश्चेति सूत्रयोः प्रकृतं देवदत्तेनेति । अकर्मणो विवक्षितत्वेन धातोरकर्मकत्वाद्भाव एव क्त इति सकर्मकेभ्यः कर्माविवक्षायां भावे क्त इति च हरदत्तेनोक्तम् । तथोक्तोऽधिकरणे ध्रौव्यगतिप्रत्यवसानार्थेभ्यश्चेति सूत्रे गतं चैत्रेण कर्मकादपि कर्माविवक्षायां अकर्मकत्वात् भावे क्तो भवतीति भुक्ता ब्राह्मण इति । अत्र भोजनं भुक्तं भावे क्तान्तादर्श आदिभ्योऽजिति च शेषीकृतोक्तं गतं





तिरश्चीनमितिमाद्यश्लोकटीकायां सकर्मकादप्यविवक्षिते कर्मणि भावे क्तः । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियातिवचनादियुक्तिश्च । अन्यत्रापि तत्र तत्र बहुस्थलेषु अनोरकर्मकात् अकर्मकात् च अणावकर्मकादित्यादि सूत्रेषु हरदत्तादीनां तथोक्तयो विस्तरभयान्नोपदर्श्यन्ते ततश्चाकर्मकत्वं अविवक्षितकर्मतयेति तत्तद्ग्रन्थसम्मतमिति सिद्ध्यति । ननु नपुंसके भावे क्त इत्यादिना विहितस्य क्तस्याकर्मको यो विधानमेव कुत आश्रयणीयमिति चेदत्र ब्रूमः । लः कर्मणि चेत्येतत्सूत्राद्भावे चाकर्मकेभ्य इत्यस्य तयोरेव कृत्यक्तखलर्था इति सूत्रे अनुवृत्तिरस्तीति तावदविवादं परार्थमेतद्भविष्यति । तयोरेव कृत्यक्तखलर्थाः भावे चाकर्मकेभ्य इलः कर्मणीत्येतत्सूत्रीयभाष्योक्तेः भावे चाकर्मकेभ्य इत्यनुवृत्तेः सकर्मकेभ्यो भावे न भवतीति काशिकोक्तेश्च । ततश्च तयोरेवेति सूत्रेण क्तमात्रस्य भावेऽकर्मकेभ्य एव नियमनान्नपुंसक इत्यादि विहितस्यापि क्तस्य भावेऽकर्मकेभ्य एव विधानमाश्रयणीयम् । अत एवोक्तं कैय्यटे हरदत्ताभ्यां णेरध्ययने वृत्तमिति सूत्रे नपुंसके भावे क्त इत्ययमपि क्तः सकर्मकेभ्यो न भवति । तयोरेव कृत्यक्तखलर्था इत्यत्र क्तमात्रग्रहणात् तत्र च भावे चाकर्मकेभ्य इत्यनुवर्तनात् । अन्यथा सकर्मकाद्भावे क्ते विधीयमाने कर्मणो द्वितीयाप्रसङ्गात् ग्रामं गतं ओदनं भुक्तमितीति तस्मान्नपुंसक इत्यादि विहितक्तस्याकर्मकेभ्य एव विधाने सिद्धे करोत्यादि धातूनां च सकर्मकत्वेनाकर्मकत्वाभावेन तत्र क्तानुपपत्तिप्रसङ्गादवश्यमविवक्षितकर्मकत्वेन अकर्मत्वं स्वीकार्यम् । उक्तं च कौमुदीकृद्भ्यां कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रे यदा कर्मैव कर्तृत्वेन विवक्ष्यते तदा सकर्मकाणामप्यकर्मकत्वात् कर्तरि भावे च लकार इति कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः तेभ्यो भावे कर्तरि च लकारः पच्यते ओदनेन भिद्यते काष्ठेनेत्यादि व्याख्यानं च व्याख्यातृभ्यामपेक्षितार्थपरतया अयमर्थ इत्यादिना सम्यगकर्मकत्वमुपपाद्य अकर्मकत्वसम्पादनप्रयोजनमाह **कर्तरि भावे च लकार इति** । लकार इति प्रकृताभिप्रायेणोक्तम् । उपलक्षणं चैतत् । कृत्यक्तखलर्थानामपि तेन भेतव्यं काष्ठेन भिन्नं काष्ठेन ईषद्भेदं काष्ठेनेति भावे तव्यादयोऽपि सिध्यन्तीत्यादिना लः कर्मणीति सूत्रीयतत्त्वबोधिनी भूधातुविचार धातुवृत्तिश्च द्रष्टव्यास्ति । तस्मादुदाहृतानेकसाधनबलेनाकर्मकशब्दस्याविवक्षितकर्मार्थत्वस्याप्युपपत्तेर्युक्तं कथ्यत इति भावेन लकाराश्रयणम् । अन्यथा सूत्रे परस्परप्रतिद्वन्द्वितयोपात्तसकर्मकाकर्मकशब्दयोर्मध्येऽकर्मकशब्दस्यात्यन्ताविद्यमानेत्याद्यर्थत्वे सकर्मकशब्दस्यापि अत्यन्तविद्यमानकर्मकत्वार्थस्यैवार्धजरतीयायोगेन प्राप्त्या अनुभूयते सुखमित्यादौ सोपसर्गत्वादिना सकर्मकेभ्यो भ्वादिभ्यः कर्मणि लकारानुपपत्तिप्रसङ्गात् । एवमेव स्वग्रन्थे यत्र यत्र सकर्मकेभ्योऽपि भावे क्ताद्यभिधानं तत्र सर्वत्र समाधानमभिधेयम् । अनेन लः कर्मणीति पाणिनिसूत्रं सकर्मकेभ्यो भावेन भवतीति काशिकावाक्यं च व्याख्यातम् । सूत्रे अकर्मशब्देनाविवक्षितकर्मणोऽप्यभिधानात् सकर्मकेभ्यः कर्मविवक्षायां भावेन भवतीत्यर्थोपपत्तेश्च सकर्मकाणां भावे लोमाभूत् इति भाष्यवाक्यस्याप्ययमेवार्थः । ननु चैवं गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्तासणाविति सूत्रे अत्यन्ताविद्यमानकर्मणो अकर्मकग्रहणेन गृह्यन्ते न त्वविवक्षितं कर्मणः अन्यथा पचादीनामपि कर्माविवक्षायामकर्मकत्वनिबन्धनानि कार्याणि भवेयुः । अकर्मकशब्देन च धातवोऽन्यपदार्थत्वेनाश्रीयन्ते न त्वर्थाः । अर्थश्रयणे हि कर्माविवक्षायां अर्थस्याकर्मकव्यपदेशः स्यात् । धातुषु त्वाश्रीयमाणेषु क्वचिदपि कर्मसम्बन्धदर्शनेन सारूप्यत एवैत इति तत्त्वप्रत्ययविषयाः नाकर्मकत्वेन





व्यपदिश्यन्ते यदा त्वर्थस्यापि स्वतो नास्ति भेद इति दर्शनं तदा अर्थेष्वपि अन्यपदार्थेषु न दोष इति कैय्यटोक्तिः । नाप्यविवक्षितकर्माणो अकर्मकाः किं तर्हि अत्यन्ताविद्यमानकर्माणः । धातवश्चाकर्मका नार्था इति हरदत्तोक्तिविरुद्धेति चेन्न । अविवक्षितकर्मकत्वसकर्मकत्वमत्यन्ताविद्यमानकर्मकत्वमकर्मकत्वमिति पक्षद्वयमपि भाष्यकैय्यटादिसम्मतमिति निपुणतरं शब्दकौस्तुभे व्युत्पादितं उक्तानेकज्ञापकबलेनाविवक्षितकर्माण एवाकर्मका इति पक्षस्यैव प्राबल्येनाङ्गीकर्तव्यत्वं चेति नवीनोक्तिः । वस्तुतस्तु तत्सूत्रोक्ताकर्मकत्वस्यैव तद्विवरणमित्यङ्गी-कारेणाविरोधः कथमन्यथोक्तकैय्यटादिकृतानेकप्रयोगसमर्थनासामञ्जस्यं न स्यात् । एवं यत्र क्वचिदकर्मकत्व-निरूपणमुक्तविधया स्यात् तत्र सर्वत्रोऽक्त निर्णयः यत्र कर्मकशब्देनाविवक्षितकर्मणां ग्रहणे बाधकं तत्र तदर्थत्यागेऽप्यन्यत्र तद्ग्रहणोपपत्तिरिति प्रतिभाति । अत एव प्रायेणाकर्मका इति प्रायःपदं प्रयोगानुसारित्वा-द्व्याकरणस्य सत्यपि पचादिषु निमित्ते कार्यानाश्रयणोपपत्तेश्च । अङ्गीकृतं च समानकर्तृकेषु नुमुनिति सूत्रे प्रयोगाभावेनातिप्रसङ्गेति निरसनं गतिबुद्धीति सूत्रे व्याख्यातप्रकारस्यान्यत्र द्रष्टव्यत्वोक्तिरपि उक्तविरोधाद्वैय्या-करणानामयुक्तेति न तद्विरोधः । यत्तु शेषीकृता प्रसादकृतोक्ताविवक्षितकर्मकत्वदूषणं कृतं तदुक्तव्यवस्थाऽज्ञान-मूलकं स्वेनैव समर्थितानेकप्रयोगविरुद्धं णेरणावित्यादौ स्वेनैवोपपादितप्रकारविरुद्धं उदाहृतकैय्यटादिग्रन्थविरुद्धं चेति स्पष्टमेवेति न बाधकतामर्हतीत्यलं विस्तरेण ।

**स०व्र०**— ननु कथ्यत इत्यस्य कर्मणि निष्पन्नत्वात्, तत्र च विष्णौ वर्तमानवौषट्शब्दोक्तषड्गुणानामेव कथनक्रियां प्रति कर्मत्वेन तेषां च बहुत्वात् कथ्यन्त इति वक्तव्यं, कथ्यत इत्यनुपपन्नम्; इत्याशयेन परिहरति **भावे प्रयोग इति** । तथा च वौषडिति कथनं भवतीत्यर्थः ।

**स०ना०— तर्हि कथ्यत इति कथमिति** । कर्मणां बहुत्वात्कथ्यन्त इति बहुवचनेन भाव्यमित्यर्थः । **भावेप्रयोग इति** । कथ्यत इति प्रयोगः भावे कर्मणि न किन्तु भवितृकर्मणि तस्यैकत्वाददोष इत्यर्थः । इदमुक्तं भवति । अत्र द्वे कर्मणी गुणात्मको हरिश्च । तत्रायं प्रयोगो न गुणविवक्षया येन बहुवचनेन प्रसङ्गः अपि तु गुणात्मकः हरिविवक्षया गुणविवक्षया तु कथ्यत इति वक्तव्यम् । एतेन कथयतेः सकर्मकत्वात् कथ्यत इत्यस्य च भावेप्रयोगत्वाभिधानमयुक्तम् । लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रेण अकर्मकेभ्यो भावे लकारश्चेति भावेन भवस्य विधानात् सकर्मको नेति काशिकोक्तेश्चेति परास्तम् ।

**विठ्ठल०**— ननु तर्हि वौषडिति कथ्यन्त इति बहुवचनेन भाव्यमिति शङ्कते **तर्हि कथ्यत इति कथमिति**। **भावेप्रयोग इति** । इत्येव कथनमित्यर्थकत्वादेकवचनमुपपद्यत इति भावः ।

**चषकः**— अथ प्रकृतिविकारभावस्थले 'वृक्षः पञ्चनौका भवती'त्यत्र प्रकृतिभूतवृक्षादेर्विशेष्यतया भवनान्वयित्वात्तद्गतसङ्ख्याबोधकतया प्रकृतिवाचकसमानवचनत्वमाख्यातस्य, 'एको द्वौ ज्ञायते', इत्याद्युभया-रोपस्थलीयवाक्ये चैकादिपदार्थस्यारोपविशेष्यस्याख्यातार्थविशेष्यकान्वयधीविशेष्यतया तत्पदसमानवचनत्व-





माख्यातस्येति च सिद्धान्तिततया, 'अमानि तत्तेन निजायशोयुगं द्विभागबद्धाश्विकुराः शिरःस्थितम्' इत्यत्रायशोद्वयस्य वास्तवत्वेन चिकुरभागद्वयस्य नलेन राजा आरोप्यत्वेन कवेरुत्प्रेक्षितत्वेनाख्यातार्थविशेष्यकान्वयधीविशेष्यत्वेनायशोयुगस्यैव विवक्षिततयाऽऽरोपप्रकारवाचके चिकुरपदविरुद्धवचनत्वे व्याख्यातस्य तद्विशेष्यवाचकायशोयुगपदसमानवचनता तस्याक्षुण्णैवेति समर्थिततया च, प्रकृतेऽपि कर्माख्यातोपस्थाप्यार्थनिष्ठप्रकारतानिरूपितविशेष्यताऽऽपन्नानां वैष्णवगुणानां बहुत्वात्तत्पदसमानवचनत्वेनैवाऽऽख्यातस्य भवितव्यतया कथमेकवचनान्ततेत्याशङ्कते **तर्हि कथ्यत इत्यादि । भावेप्रयोग इति ।** न चाकर्मकेभ्य एव भावे लकाराणां विहिततया कथयतेश्च सकर्मकतया कथं तत्प्रकृतिको लकार इति वाच्यम् । अकर्मकेभ्य इत्यत्राविवक्षितकर्मकाणामपि ग्रहणस्य सिद्धान्तितत्वात् । कथमन्यथा नेह पच्यते नेह भुज्यत इत्यादौ भावे लकार इति हरदत्ततदीयग्रन्थाः सङ्गच्छेरन् । तिङ्वाच्यभावनाया असत्व(एकत्व)रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि, किन्त्वेकवचनमेव तस्यौत्सर्गिकत्वेन सङ्ख्याऽनपेक्षत्वादिति भावः । भावस्यैकत्वादेकवचनमिति भाव इत्यपि निबन्धान्तरीयो विन्यासः ।

**॥ इति ब्रह्मगतगुणानां ब्रह्मनामत्वानुपपत्तेर्निरासः ॥**

* * *

**॥ अथ 'स्वाहा'पदस्य समन्वयः ॥**

**२७ सु०—**

## अनु०— स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः ।

**हरतेर्जहातेर्वा डः । द्वावप्याङ्पूर्वौ(र्वकौ) स्वीकारे वर्तेते । स्वं = स्वभावतः स्वीयम् एव हविरादि(इतरेषां) भ्रान्त्याऽस्ववत् प्रतीतं स्वीकुरुत इति स्वाहः । स चासौ अश्चेति स्वाहेति सम्बुद्धिः ।**

**परि०— हरतेरिति ।** हृञ् हरण इत्यस्य ओहाक् त्याग इत्यतो वेत्यर्थः । जुहोतेरिति पाठे हुदानादनयोरित्यत इत्यर्थः । **स चासावश्चेतीति ।** स्वाह अ इत्यनयोः सवर्णदीर्घे स्वाद्युत्पत्तौ सु इति स्थितौ 'अन्तादिवच्च' इति सवर्णदीर्घस्य पूर्वान्तवद्भावेन ह्रस्वत्वे 'एङ् ह्रस्वत्वात्सम्बुद्धेरि'ति सुलोपः।

**यादु०— हरतेर्जहातेर्वेति ।** हृञ् हरण इत्यस्य ओहाक् त्याग इत्यस्य वा धातोरित्यर्थः । स्वीकुरुत इत्यत्र च्विप्रत्ययार्थं दर्शयति **भ्रान्त्या अस्ववदिति । स्वाहेति सम्बुद्धिरिति ।** इदं च स्वाहेत्याकारान्तमव्ययमित्यभिप्रेत्योक्तम्। अन्यथा आकारान्ते सम्बुद्धौ सुलोपाभावात्स्वाहाः इति सम्बुद्धिरिति स्यादिति ज्ञातव्यम्।





**वं०प०— हरतेरिति** । तथा च आङ्पूर्वकात् हृञ् हरणेऽस्मात् डप्रत्यये ऋकारलोपे आह् अ आह इति भवति । जहातेर्वा रूपम् । तथा च आङ्पूर्वकात् ओहाक् त्यागेऽस्मात् डप्रत्यये टिभूताकारलोपे आ+ह्+अ= आह इति भवति । **द्वावपीति** । उभावप्युक्तौ धातू इत्यर्थः । **स्वीकार इति** । धातुद्वयार्थभूतौ हरणत्यागौ स्वीकारार्थकावित्यर्थः । **स्वमिति** । तथा च स्व आहेत्यत्र सवर्णदीर्घे स्वाह इति भवति । ननु तर्हि स्वाहशब्दस्य सम्बुद्धिः स्वाह इत्येव स्यात् स्वाहा इत्याकारः किमर्थ इत्यतः सोऽपि भगवद्वाचक एवेत्याह **स चासाविति** । स्वाहश्चासौ अश्चेति विग्रहः सवर्णदीर्घे सति स्वाहा इति भवति पश्चात्स्वाद्युत्पत्तौ प्रथमैकवचनं स्वाहाः इति भवति । सोमपाशब्दवदाकारान्तः पुलिङ्गस्तस्य सम्बुद्धिः स्वाहेत्येव भवतीति द्रष्टव्यम् । नन्वाकारान्ते सम्बुद्धौ सुलोपाभावात् हे सोमपाः इतिवत् हे स्वाहाः इत्येव स्यादिति वाच्यम् । छान्दसस्य सुलोपस्याङ्गीकारादित्याहुः ।

**श्रीनिधि०— स चासावश्चेति** । ननु हे विश्वपा इतिवत् हे स्वाहा इति भवति । स्वाहा इति तु कथं इति चेत् । इदमव्ययमिति केचित् । केचित्तु सुपांसुलुगिति सुलोप इत्याहुः । **नपुसंकलिङ्गता त्विति** । यद्यपि पुल्लिङ्गत्वेऽपि सम्बुद्धौ हे नम इति भवति । तथापि प्रथमान्तस्यापि तत्त्वाभिप्रायेणेदम् । **शब्दानुसारिणी** इदं शब्दानुसारिणी । तस्य नपुंसकलिङ्गत्वादिति भावः ।

**शे०वा०— हरतेरिति** । हृञ् हरण इत्यस्माद्धरतीति कर्तरि डः 'अन्यत्रापि दृश्यते' इत्यनेन वा 'अन्येष्वपि दृश्यते' इत्यनेन वा डप्रत्यये डित्वाट्टिलोपे हशब्दनिष्पत्तिः । यद्वा । ओहाक् त्याग इत्यस्मादुक्तरीत्या जहातीति कर्तरि डप्रत्यये डित्वाट्टिलोपे उक्तशब्दनिष्पत्तिरित्यर्थः । तर्हि स्वीकुरुत इति कथं भाष्यकारीय-व्याख्यानमित्यतः 'क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः । प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातवः' इति सत्यपि समाधाने प्रहार आहारः संहारो विहारः परिहार इत्यादाविव सोपसर्गत्वादुक्तधातुद्वयस्योपसर्गस्य च प्रसिद्धधात्वर्थबाधेनार्थान्तरपरत्वव्यवस्थापकत्वाद्युक्तं स्वीकारार्थतया भाष्यकारीयं व्याख्यानमित्याशयेनाह **द्वावपीति** । स्वीकुरुत इत्यभूततद्भावार्थच्विप्रत्ययार्थप्रदर्शनम् **भ्रान्त्याऽस्ववदिति** । कथं तर्हि स्वाहेति दीर्घश्रवणमित्यतः स्वाहशब्दस्य अशब्देन विशेषणसमासेनाऽऽकारान्तप्रातिपदिकनिष्पत्तेर्युक्तं दीर्घश्रवणमित्याह **स चासाविति** । **अश्चेति** । अशब्दवाच्यश्चेत्यर्थः । तर्हि विश्वपाः इत्यादिवत् स्वाहाः इत्येव प्रथमैकवचनं स्यात् सम्बुद्धावपि 'एङ् ह्रस्वात्सम्बुद्धेः इत्यादेरप्रवृत्तेरित्यतः शब्दस्वाभाव्यात्स्वाहेत्यस्याव्ययतया 'अव्यदाप्सुप' इति सुपो लुकि सति स्वाहेत्याकारान्तस्यैव सम्बुद्ध्यन्तत्वसिद्धेरित्याशयेनाह **स्वाहेति** । **सम्बुद्धिरिति** । यद्यपि असम्बुद्धिपक्षे अप्युक्तरीत्या विसर्गाश्रयणस्योपपादयितुं शक्यत्वात्सम्बुद्धित्वाश्रयणमनर्थकम् । तथाऽपि वसन्त इत्यादिसम्बुद्धिप्रायपाठात्तदाश्रयणं कृतमिति ध्येयम् ।

**स०व्र०— हरतेर्जहातेर्वेति** । हृञ्हरणे इत्यस्य ओहाक्त्याग इत्यस्य वा धातोरित्यर्थः । भ्रान्त्या अस्ववत्प्रतीतमिति स्वीकुरुत इत्यत्रत्यच्विप्रत्ययव्याख्यानमित्याहुः ।





**विठ्ठल०— हरतेर्जहातेर्वेति** हृञ्हरण इत्यस्य त्याग इत्यस्य वा धातोरित्यर्थः । **स्वीकुरुत** इत्यत्र भूततद्भावलक्षणच्विप्रत्ययार्थं दर्शयति **भ्रान्त्या स्ववदिति** ।

**॥ इति 'स्वाहा' पदस्य समन्वयः ॥**

* * *

**॥ अथ 'नमः' पदस्य समन्वयः ॥**

**२८ सु०—**

## अनु०— नमन्त्यस्मिन्गुणा यस्मान्नम इत्येव कथ्यते ॥

**नमतेरधिकरणेऽसुन्प्रत्ययः । नपुंसकलिङ्गता तु शब्दानुसारिणी । गुणा इति योग्यतया सम्बन्धः । नमनेनात्यन्तिकसम्बन्धमुपलक्षयति ।**

**अथवा अस्मिन् = परमेश्वरे विषये गुणाः = उपसर्जनभूता ब्रह्मादयो, नमन्ति प्रह्वीभवन्तीति व्याख्येयम् ।**

**परि०—** ननु नमन्त्यस्मिन्गुणा यस्मादिति निरुक्त्यन्तरं प्रथमया निर्देष्टव्यत्वान्नमा इति भाव्यमित्यत आह **नपुंसकेति । आत्यन्तिकेति** । यावद्द्रव्यभावित्वं वा तादात्म्यसम्बन्धेन वेत्यर्थः । तेन कथं गुणानां प्रह्वीभाव इति निरस्तम् ।

**यादु०—** ननु मनःशब्दस्य भगवद्वाचकत्वे पुल्लिङ्गता स्यादित्यत आह **नपुंसकलिङ्गतेति** । ब्रह्म-शब्दादाविव शब्दस्वभावानुसारिणीत्यर्थः ।

**वं०प०— नमतेरिति** । (णमु) नम् प्रह्वत्वे शब्दे चेत्यस्मादसुन्प्रत्यये नकारलोपे सकारस्य रुत्वे विसर्गे च नम इति रूपम् । ननु गुणानां भगवति कथं प्रह्वीभावरूपं नमनमित्यत आह **नमनेनेति** ।

**शे०वा०—** नमन्तीत्यादि कथं नमःशब्दव्याख्यानमित्यतः प्रकृतिप्रत्ययविभागकल्पनया तल्लाभं दर्शयति **नमतेरिति । असुनिति** । औणादिकसूत्रेण सर्वधातुभ्योऽसुन्प्रत्ययविधानादिति भावः । ननु भगवतः परमपुरुषत्वेन नपुंसकत्वाभावात्कथं नम इति नपुंसकलिङ्गशब्दप्रयोगस्तत्रेत्यतो नपुंसकलिङ्गस्यार्थसाधुत्वा-भावेऽपि कलत्रादिशब्देष्विव प्रयोगसाधुत्वान्नपुंसकलिङ्गनमोब्रह्मादिशब्दप्रयोग इत्याह **नपुंसकलिङ्गतेति** ।







यद्यप्यधिकरणेऽसुनि निष्पन्नपुल्लिङ्गनमःशब्दसम्बुद्ध्यन्ततया नम इत्यस्योपपत्तेर्न तच्चोद्यावकाशः तथाऽपि कवचमित्यादिनपुंसकलिङ्गसद्भावात्तत्रायं न्यायः फलिष्यतीत्यभिप्रायेणेदमुक्तम् । यद्यपि चैतत्तत्रैव वक्तुमुचितं तथाऽप्यापाततो नम इत्यस्यापि नपुंसकत्वप्रतिभासात्, यस्मादस्मिन्गुणा नमन्त्यतो नमा इत्येवं भाष्ये पुल्लिङ्गस्य नमःशब्दस्य प्रयोक्तव्यतया तथाऽप्रयोगाद्भाष्येन पुंसकनमःशब्दाश्रयणप्रतीतेर्वाऽत्रोक्तम् । अत एव ज्योतिरादिशब्देषु स्वयं विग्रहं प्रदर्श्य नमःशब्दे भाष्य एव तत्प्रदर्शनात्स्वयं तदप्रदर्शनमिति ध्येयम् । प्रकृत्यादिविभागकल्पनयाऽपि न गुणानां लाभ इति भाष्ये तदुक्तिरनर्थिकेत्यत आह **गुणा इतीति** । गुणानां प्रह्वीभावरूपनमनकर्तृत्वाभावादर्थानुपपत्तिरित्यत आह **नमनेनेति** । अत्र पक्षे लक्षणाऽऽश्रयणं भवतीत्यतो गुणा नमन्तीत्येतद्भाष्यस्वारस्याय पक्षान्तरमाह **अथवेति** ।

**स०व्र०**— ननु भगवद्वाचित्वे नमःशब्दस्य पुल्लिङ्गता स्यादित्यत आह **नपुंसकलिङ्गता त्विति** । ब्रह्मशब्दवत्स्वभाव इत्यर्थः । यद्यप्यत्र नमःशब्दस्य पुल्लिङ्गत्वेऽपि सम्बुद्ध्यन्तत्वेनोपपत्तिः सम्भवति तथापि गत्यन्तरे विद्यमाने प्रथमान्तत्वेनैवोपपत्तौ सम्बुद्ध्यन्तत्वं किमित्याश्रयणीयं, पूर्वशब्देषु गत्यन्तरं नास्तीति तदाश्रयणमिति हृदयम् ।

**विठ्ठल०**— ननु ज्ञानादिगुणानां प्रह्वीभावलक्षणनमनाभावात् कथं नमन्त्यस्मिन् गुणा इत्युक्तिरित्यत आह **नमनेनेति** ।

**॥ इति 'नमः' पदस्य समन्वयः ॥**

**॥ इति कर्मकाण्डगतवाक्यस्थानां प्रतिपदानां योगवृत्त्या समन्वयप्रदर्शनम् ॥**

* * *

**॥ अथ कर्मकाण्डगतवाक्यस्थानां प्रतिपदानां योगवृत्त्या ब्रह्मणि समन्वयप्रदर्शनस्य प्रयोजनम् ॥**

२९ **सु०**— एवं योगवृत्त्या पदसमन्वयेऽङ्गीकृते लब्धं प्रयोजनमाह **इत्यशेषेति** ।

**अनु०**— इत्यशेषक्रियानामशब्दैरेको जनार्दनः ।
उच्यते मुख्यतो यस्मात्पदवर्णस्वरात्मभिः ॥
तस्मादनन्तगुणता श्रुतितात्पर्यतोऽस्य हि ।

इति = उक्तदिशा । तेन न विभक्त्यर्थानुपपत्तिः । **क्रियाशब्दा** आख्यातपदानि । **नामशब्दाः** सुबन्त(पद)ानि । 'एक' इति शब्दान्तरन्यायेन प्राप्तं भेदमपाकरोति । अभि-





धेयभेदे हि नानन्तगुणता सिद्ध्यति । **मुख्यतो** योगवृत्त्या । **क्रियानामशब्दैः** इत्यस्य अनुवादः पदवर्णस्वरात्मभिरिति । न केवलं पदवर्णात्मभिः किं तूदात्तादिस्वरात्मभिश्च ।

ननु वर्णानामपि वाचकत्वे विभक्त्यन्तत्वे च पदत्वमेव, तत्किमर्थं पृथग्ग्रहणम् । एकानेकवर्णात्मकत्वविवक्षयेति ब्रूमः ।

**अनन्तगुणता** सिद्ध्यतीति शेषः । **हि**शब्दोऽपर्यायत्वादिति सूचयति । अनेन 'रूढिमात्रेण पदसमन्वयाङ्गीकारो निष्प्रयोजनः अनन्तगुणत्वासिद्धेरि'ति पूर्वपक्षिणोक्तं परिहृतमित्युक्तं भवति ।

'ननु च न निर्वचनस्य शक्यकरणत्वमात्रेणानन्तगुणत्वं परमेश्वरस्य वेदतः सिद्ध्यति, निर्वचनस्य व्याख्यातृमतिपरिकल्पितस्यार्थान्तरेऽन्यथा च सम्भवात् । अन्यथा श्वित्री शोधनं करोति इत्यभिप्रायेण प्रयुक्तस्य श्वेतो धावतीति वाक्यस्य इतः सारमेयो द्रुतं गच्छतीत्यपि प्रमेयं प्रसज्येते'त्यत उक्तम् **श्रुतीति** ।

'भवेदेवं यदि वसन्त इत्यादिश्रुतीनामुक्तविधनिर्वचनेन परमेश्वरगुणेषु तात्पर्यं न स्यात्, तच्चास्तीत्युपपादयिष्याम' इति च **हि**शब्दः ।

योगवृत्त्यङ्गीकारस्य प्रयोजनान्तरमाह **विज्ञानेति** ।

**विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ॥**

वैदिकानां **सर्वशब्दानाम्** एवं योगवृत्त्या **विज्ञानार्थत्वतः** अनन्तगुणोपेततया परमेश्वरज्ञानार्थत्वेनाङ्गीकृतत्वात् वसन्ताद्यात्मकतया रूढ्यङ्गीकारप्रयुक्तं यदनित्यत्वादि **दूषणम्** उक्तं तत् **नास्ति** इत्यर्थः ।

तदनेन 'ज्योतिरि'ति सूत्रस्य लेशतस्तात्पर्यमुक्तं भवति ।

परि०— न **विभक्त्यर्थानुपपत्तिरिति** । सर्वस्य सम्बुद्ध्यन्तत्वेन सम्बोधनार्थत्वात्कर्म-करणादिकारकविभक्तेश्चास्यां दशायामभावादिति भावः । **शब्दान्तरन्यायेनेति** । अयं न्यायः आनन्द-





मयनये विवृतः। मुख्य इत्यनुवादः। योगवृत्त्येति व्याख्या। **श्वित्रीति**। कुष्ठदेहवानित्यर्थः। **धावतीति**। धावु शौच इति धातुः। श्वा इत इति विच्छिद्यार्थमाह **इत इत्यादिना**। **उपपादयिष्याम इति**। 'कश्छन्दसामि'त्यनेन 'एतमेव तथा सन्तमि'त्यादिना चेति भावः। **लेशत इति**। योगमात्रोक्त्या महायोगरूढयुक्तिपरस्य 'उपक्रमात्' इत्यस्य लेशतः '**अस्य हि**' इति हिशब्दोक्त्या 'तथा ह्यधीयत एके' इत्यंशस्य च लेशतस्तात्पर्यमुक्तमित्यर्थः।

**यादु०— उक्तदिशेति**। ज्योतिषा आयजेतेत्यादिसम्बुद्धिरूपपदच्छेदमङ्गीकृत्य प्रदर्शितस्तुतिरूपत्वेनेत्यर्थः। तथा च ज्योतिषा यजेतेत्यादिपदच्छेदस्य वाक्यसमन्वयोपयुक्तस्य पदसमन्वयदशायामनङ्गीकारेण तदा क्रियाकारकवाचिविभक्तीनामेवाभावान्न तदर्थानुपपत्तिर्दोषायेति भावः। तथा हि श्रुतिः 'सृजतो हि श्रुतयोऽनुवर्तन्ते नैवासृजतः। किं वा विदधते किं वा निषेधन्ति स्तुतिमात्रा एव ते स्युः' इति। **शब्दान्तरन्यायेनेति**। अयं न्याय आनन्दमयाधिकरणे प्रदर्शितोऽस्माभिस्तत्रैवानुसन्धेयः। **अनुवाद इति**। अतो न पौनरुक्त्यमिति भावः। अनुवादोऽधिकविधानार्थोऽतो न व्यर्थ इत्याशयेनाह **न केवलमिति**। शक्तं पदमिति मताभिप्रायेण वाचकत्व इत्युक्तम्। विभक्त्यन्ता वर्णाः पदमिति मतमाश्रित्य तु विभक्त्यन्तत्वमित्युक्तमिति द्रष्टव्यम्। श्वेत इत्यस्यार्थः **श्वित्रीति**। कुष्ठ इत्यर्थः। धावतीत्यस्यार्थः **शोधनं करोतीति**। धावु गतिशुद्ध्योरिति धातोः। **इतः सारमेय इति**। अत्र श्वा इत इति पदच्छेदो द्रष्टव्यः। **उपपादयिष्याम इति**। 'तस्यापि पूर्वसिद्धये'त्यनुपदमेवेति शेषः। **लेशत इति**। अशेषक्रियानामेत्यादिना ज्योतिरिति प्रतिज्ञायाः, जातमोतमित्यादिना उपक्रमादिति हेतुभागस्य च तात्पर्यकथनादिति भावः।

**वं०प०—** यदुक्तं पूर्वपक्षिणा सर्वेषां पदानां ब्रह्मपरत्वे वसन्ते ज्योतिषेति सप्तमीतृतीयादिविभक्तिवैयर्थ्यमिति तत्परिहृतमित्याह **तेनेति**। सर्वेषां वसन्त इत्यादिपदानां भगवत्सम्बोधनरूपाणां तद्वाचकत्वमेव, न सप्तम्यादिविभक्तिपरत्वमित्यङ्गीकारेणेत्यर्थः। **शब्दान्तरेति**। अथैष ज्योतिरित्यादौ संज्ञाभेदेन कर्मभेदः, एवं ज्योतिषेत्यादिशब्दभेदादभिधेये भेदशङ्का प्राप्तेत्यर्थः। नन्वेक इत्यनेनाभिधेयैक्यं किमिति वाच्यम्, अभिधेयभेद एव किं न स्यादित्यत आह **अभिधेयभेदे हीति**। एकस्यैव भगवतः सर्वशब्दवाच्यताऽप्राप्त्या इतरवाचकशब्दप्रतिपाद्यगुणालाभेन भगवतो यच्छब्दवाच्यत्वमङ्गीकृतं तच्छब्दप्रतिपाद्यगुणस्यैव लाभेनानन्तगुणपूर्णता न सिद्ध्यतीत्यर्थः। नन्वधिकानुक्तेर्व्यर्थोऽनुवाद इत्यत आह **न केवलमिति**। **पृथक्** पदात्। एकेत्युत्तरं एकवर्णात्मकपदानेकवर्णात्मकपदविवक्षयेत्यर्थः। तथा च परशब्देनानेकवर्णात्मकपदं विवक्षितं वर्णशब्देनैकवर्णात्मकमिति भावः। **अनेनेति**। **रूढिमनङ्गीकृत्य** योगेनैव सर्वशब्दानां भगवत्परत्वकथनेनेत्यर्थः। **अन्यथेति**। अन्यपरस्यापि शब्दस्य शक्यनिर्वचनत्वमात्रेणान्यपरत्व इत्यर्थः। परमेश्वरज्ञानार्थत्वेन परमेश्वरज्ञानप्रयोजनकत्वेनेत्यर्थः। **प्रयोजनान्तरमिति**। पूर्वं योगवृत्त्यङ्गीकारस्य तस्मादिति वाक्येनानन्तगुणत्वसिद्धिरूपस्यैकस्य प्रयोजनस्योक्तत्वादित्यर्थः। **लेशत इति**। जातमोतमिति ज्योतिःशब्दव्याख्याने सूत्रे ज्योतिरिति प्रतिज्ञापदस्यैव





ज्योतिर्ब्रह्मेति तात्पर्यमुक्तं भवतीत्यर्थः। पृथक् पृथगर्थेषु वाचकत्वेन स्थितवाक्यस्यान्ततो भगवत्परत्वं वाक्यान्वय इत्यर्थः।

**आनन्दः— शब्दान्तरन्यायेनेति**। शब्दान्तरकर्मभेद इति सूत्रे शब्दान्तरात्कर्मणो भेदः प्रतिपादितः। एवं प्रकृतेऽपि आख्यातााद्यपेक्षा सुबन्तादिशब्दानां शब्दान्तरत्वात् न्यायेन भेदः प्राप्त इत्यर्थः। **अन्यथेति**। निर्वचनस्य शक्यकारणतामात्रेण तत्करण इत्यर्थः।

**श्रीनिधि०— अनुवाद इति**। पदवर्णातिरिक्तक्रियानामशब्दाभावादिति भावः। **अन्यथा चेति**। उक्तविरुद्धत्वेनेत्यर्थः। **अन्यथेति**। निर्वचनस्य शक्यकरणत्वमात्रेणार्थान्तराङ्गीकारे तच्चास्तीत्युपपादयिष्याम इति। 'एतमेव तथा सन्तं शतर्चित्यादिनामभिरि'त्यादिनेति शेषः। श्वेतो धावतीत्यत्रार्थान्तरे तात्पर्याभावान्न दोष इति भावः।

**शे०वा०—** इतीत्यस्य व्याख्यानम् **उक्तदिशेति**। ज्योतिष आयजेतेत्यादिसम्बुद्धिरूपपदच्छेद-मङ्गीकृत्य प्रदर्शितस्तुतिरूपत्वेनेत्यर्थः। तत्प्रयोजनमाह **तेनेति**। ज्योतिषा यजेतेत्यादिपदच्छेदस्य वाक्य-समन्वयोपयुक्तस्य पदसमन्वयदशायामनङ्गीकारेण तदा क्रियाकारकविभक्तीनामेवाभावान्न तदर्थानुपपत्तिरिति भावः। **शब्दान्तरेति**। शब्दान्तरे कर्मभेद इत्यधिकरणोक्तन्यायेनेत्यर्थः। अयं च न्याय आनन्दमयाधिकरणे विवृतस्तत्रैवानुसन्धेयः। पदवर्णस्वरात्माभिरित्यस्य क्रियानामशब्दैरित्यनेन पौनरुक्त्यं परिहरति **क्रियेति**। ननु निष्प्रयोजनत्वादनुवादवैयर्थ्यमित्यतोऽधिकविधानार्थत्वान्न तदित्याह **न केवलमिति**। शक्तं पदमित्यभिप्रायेण वाचकत्व इत्युक्तम्। सुप्तिङन्तं पदमित्यभिप्रायेणोक्तं **विभक्त्यन्तत्व इति**। **अनेनेति**। अनन्तगुणताऽस्य हीत्यनेन भाष्यखण्डेनेत्यर्थः। **परिहृतमिति**। अनङ्गीकारेण परिहृतमित्यर्थः। **व्याख्यातृमतिपरिकल्पितस्येति**। तन्मतेरनेकरूपत्वादिति भावः। श्वेत इत्यस्यार्थः **श्वित्रीति**। कुष्ठ इत्यर्थः। धावतीत्यस्यार्थः **शोधनं करोतीति**। धावुगतिशुद्ध्योरिति धातुव्याख्यानादिति भावः। इतः सारमेय इत्यनेन श्वा इत इति पदच्छेदो दर्शितो भवति। **उपपादयिष्याम इति**। 'एतमेव तथा सन्तमि'त्यादिनेति शेषः। **प्रयोजनान्तरमिति**। 'इत्यशेषक्रियानामे'त्यादिना योगाङ्गीकारप्रयोजनस्योक्तत्वात्प्रयोजनान्तरमित्यन्तरशब्दप्रयोगः। **अनेनेति**। 'जातमोतमि'त्यादिभाष्येणेत्यर्थः। **लेशत इति**। सङ्क्षेपेणेत्यर्थः। तत्र इत्यशेषेत्यनेन ज्योतिरिति सौत्रप्रतिज्ञाभागस्य जातमोतमित्यादिना हेतुभागस्य तात्पर्यनिरूपणमिति ज्ञेयम्।

**वा०र०— ज्योतिषा यजेतेत्यादिपदेति**। ज्योतिषेति तृतीयान्तं आयजेतेति लिङ्पदं वसन्त इति सप्तमी तादृशरूपेण पदच्छेदस्येत्यर्थः। शब्दान्तरे कर्मभेदः कृतानुबन्धत्वादिति द्वितीयस्य द्वितीयपादे प्रथमा-धिकरणेत्यर्थः। **आनन्दमयाधिकरण इति**। अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेनेत्यादिना सिद्धान्तितं भेदलक्षणं इत्यन्तेनेत्यर्थः। एतत्स्थलं निष्कास्य मेस्यमस्ति (?)। **अपाकरोतीति** मूलम्। एकस्यैव





ब्रह्मण अपर्यायानन्तशब्दवाच्यतायाः नामानि सर्वाणीत्यादिप्रमाणसिद्धतया ज्योतिरादिशब्दानां भिन्नाभिन्नार्थ-प्रतिपादकत्वेऽपि प्रकृतशब्दानां ब्रह्ममात्रवाचकत्वं युक्तमित्यपाकरोतीत्यर्थः । **हेतुभागस्येति** । कारकोपपदेति सम्प्रदानत्वाभावेन कारकविभक्तित्वस्य शब्दान्तरयोगाभावेनोपपदविभक्तित्वस्य चासम्भवादित्यर्थः ।

**स०व्र०— तेन न विभक्त्यर्थेति** । उक्तरीत्या प्रकृत्यादीनां अन्यपरत्वाङ्गीकारादिति भावः । न चैवं तत्पक्षोक्तदोषप्राप्तिः । तेषामेव स्थलान्तरे पृथक्पदत्वेन भगवत्परत्वसम्भवात् । विशदं चैतत् ऋग्भाष्यटीकायाम् । **शब्दान्तरन्यायेनेति** । अयं न्यायः आनन्दमयाधिकरणे प्रदर्शितोऽस्माभिस्तत्रैवानुसन्धेयः । केचित्तु यथा यजति ददाति जुहोतीत्यादौ शब्दान्तरात् कर्मभेदो दृष्ट इति शब्दान्तरन्यायमाहुः । पदवर्णस्वरात्मभिरित्यस्य क्रियानाम-शब्दैरित्यनेन पौनरुक्त्यं परिहरति **क्रियानामशब्दैरित्यस्यानुवाद इत्यादि** । ननु निष्प्रयोजनत्वादनुवादवैयर्थ्य-मित्यतोऽधिकविधानार्थमित्याह **न केवलमिति** । **वाचकत्व इति** । शक्तं पदमित्यभिप्रायेणेदम् । **विभक्त्यन्तत्वे चेति** । सुप्तिङन्तं पदं इत्यभिप्रेत्येदमुक्तम् । **श्वेत** इत्यस्यार्थः **श्वित्रीति** । कुष्ठ इत्यर्थः । धावतीत्यस्यार्थः **शोधनं करोतीति** । **सारमेय इति** । अत्र श्वा इत इति पदच्छेदो द्रष्टव्यः ।

**विठ्ठल०— तेन न विभक्तीति** । सर्वेषां पदानां सम्बुध्यन्ततया भगवद्वाचित्वकथनेनेत्यर्थः । **शब्दा-न्तरेति** । शब्दे भेदेन प्राप्तभेदमित्यर्थः । शब्दान्तरन्यायश्चानन्दमयाधिकरण एवोपपादितः । **अनेनेति** । योगवृत्त्या समन्वयाश्रयणेन । श्वेत इत्यस्यार्थः **श्वित्रीति** । कुष्टदेहवानिति यावत् । धावतीत्यस्यार्थः **शोधनं करोतीति** । **सारमेय इति** । अत्र श्वा इत इति पदच्छेदः । **उपपादयिष्याम** इति कश्छन्दसामित्यादिनेति शेषः ।

**चषकः— श्वित्रीति** । श्वेतपदार्थः । **शोधनं करोतीति** । धावुगतिशुद्ध्योरिति धावतेः शोधनार्थेऽपि पठितत्वादिति भावः ।

**॥ इति कर्मकाण्डगतवाक्यस्थानां प्रतिपदानां योगवृत्त्या ब्रह्मणि समन्वयप्रदर्शनस्य प्रयोजनम् ॥**

* * *

**॥ अथ च तत्पूर्वपक्षनिरासे कर्मकाण्डगतवाक्यानामपि ब्रह्मणि समन्वयप्रदर्शनम् ॥**

**॥ तत्रादौ वाक्यान्वयाङ्गीकारे दोषाभावकथनम् ॥**

३० **सु०— एवं कर्मकाण्डस्य ब्रह्मणि प्रतिपदसमन्वयप्रतिपादनेन समन्वयसूत्रस्या-नुपपत्तिः परिह(हृ)ता । इदानीं वाक्यान्वयपक्षाङ्गीकारेणापि तां परिहरति अङ्गीकृतेऽपीति ।**

## अनु०— अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये ।





**वाक्यसमन्वयेऽङ्गीकृतेऽपि** ब्रह्मणि वसन्त इत्यादिवाक्यानां समन्वयाङ्गीकारादपि दोषः समन्वयसूत्रानुपपत्तिः **नैवास्ति** इत्यर्थः ।

अनेन वाक्यान्वयादिति सूत्रस्य तात्पर्यमुक्तं भवति ।

परि०— **इतिसूत्रस्येति** । समाकर्षादितिनयगुणसूत्रस्य ।

आनन्दः— वाक्यान्वयादिति सूत्रतात्पर्यमाह **एवं कर्मेति** । व्यवहितत्वादन्वयं दर्शयति **वाक्येति** ।

शे०वा०— तां समन्वयसूत्रानुपपत्तिम् । **परिहरतीति** । ततो न तद्वैयर्थ्यमिति भावः ।

**॥ इति वाक्यान्वयाङ्गीकारे दोषाभावकथनम् ॥**

* * *

**॥ अथ अल्पबुद्धीनां ज्ञानार्थत्वेन कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयाभावस्य निरसनम् ॥**

३१ **सु०—** ननूक्तमत्र न वाक्यानां ब्रह्मणि समन्वयो घटते, साङ्गकर्मपरत्वावगमात् (आगमानाम्) इति तत्राह **तदर्थत्वेनेति** ।

## अनु०— तदर्थत्वेन कर्मादिः सम्भवादल्पबुद्धये ॥

**तत्** इति विज्ञानं परामृशति । **अल्पबुद्धय** इति षष्ठ्यर्थे चतुर्थी । 'अहल्यायै जार' इति यथा । न वाक्यान्वयानुपपत्तिरिति शेषः । यथा खलु यूपाहवनीयादिवाक्यानि न निष्फले तावन्मात्रे पर्यवस्यन्ति, किन्तु ज्योतिष्टोमादीतिकर्तव्यतापराणि; तथा सर्वमपि कर्मकाण्डं नाल्पास्थिरफले कर्ममात्रे पर्यवस्यति, किन्तु ब्रह्मज्ञानार्थमेव, तत्प्रतिपादितस्य कर्मादिर्ब्रह्मज्ञानार्थत्वात्, 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादि श्रुतेरिति भावः ।

'ननु च यः कर्मकाण्डस्य ब्रह्मणि प्रतिपदसमन्वयोऽभिहितः स युक्तो न वा । नेति पक्षे न व्युत्पादनीयः । आद्ये किमनेन वाक्यान्वयाङ्गीकारेणे'त्यत उक्तम् **अल्पबुद्धय इति** । प्रपञ्चयिष्यते चैतत् ।

अनेन 'अन्यार्थमि'त्यादिसूत्राणां तात्पर्यमुक्तं भवति ।





**परि०— यूपेति** । खादिरो यूपो भवति । यूपं छिनत्ति । 'यूपं तक्षति यूपमष्टाश्रीकरोती'त्यादि-यूपवाक्यानि । 'वसन्ते ब्राह्मणोऽग्नीनादधीत दिवा आहवनीयं नक्तं गार्हपत्यमि'त्याहवनीयादिवाक्यानि । **निष्फल इति** । फलाश्रवणात् । अध्याहारकल्पकाभावात् । फलवत्कर्मसन्निधिप्रतिबन्धाच्चेति भावः । **ज्योतिष्टोमा(दीति)दिकर्तव्यतेति** । ज्योतिष्टोमादेः 'ज्योतिष्टोमेन स्वर्गकामो यजेते'तिवाक्यावगत-ज्योतिष्टोमेष्टसाधनतापराणीत्यर्थः । फलवत्सन्निधावफलं तदङ्गम्' इति न्यायादिति भावः । **ब्रह्मज्ञानार्थ-मेवेति** । पर्यवस्यतीत्यनुषङ्गः । 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति वक्ष्यमाणसूत्रं हृदि कृत्वाऽऽह **विविदिषन्तीति** । **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेति भावः । **सूत्राणामिति** । समाकर्षनयस्थानां 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम्', 'अपि चैवमेके', 'प्रतिज्ञासिद्धे-र्लिङ्गमाश्मरथ्यः', 'उत्क्रमिष्यत एवं भावात् इत्यौडुलोमिः', 'अवस्थितेरिति काशकृत्स्नः' इति चतुर्णां सूत्राणामित्यर्थः । तदर्थो भाष्यादौ व्यक्तः सङ्गृहीतश्चास्माभिस्तन्त्रदीपिकायामिति नात्रोच्यते ।

**यादु०— षष्ठ्यर्थ इति** । 'षष्ठ्यर्थे चतुर्थी वक्तव्ये'ति वार्तिकादिति भावः । निष्फल इति हेतुगर्भविशेषणम् । **अनाशकेन** अनशनव्रतेन । **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेति शेषः ।

**वं०प०—** चतुर्थी षष्ठ्यर्थे इत्यस्योदाहरणमाह **अहल्यायै इति** । अहल्याया जार इन्द्र इत्यर्थः । **प्रप-ञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यादिनेत्यर्थः ।

**आनन्दः— विज्ञानं परामृशतीति** । विज्ञानार्थत्वत इत्यत्र प्रकृतमित्यर्थः । **अहल्यायै जार इति** । इयं चतुर्थी यथा षष्ठ्यर्थे अहल्या इति तथा प्रकृतेऽपीत्यर्थः । ननु कमदिः स्वर्गादिफलार्थत्वात्कथं ब्रह्मज्ञानार्थत्व-मित्यत आह **यथेति** । ननु विषमोऽयं दृष्टान्तः । तत्र हि फलस्याश्रवणेन पर्यवसानं न सम्भवतीति । **ज्योति-ष्टोमादीति** । कर्तव्यतापरत्वं युक्तं कर्मकाण्डस्य तु स्वर्गादिरूपफलवत्त्वेन श्रुतत्वात्पर्यवसानसम्भवान्न ब्रह्म-ज्ञानार्थत्वं तस्य युज्यत इत्यत आह **तथा सर्वमिति** । नन्वप्रामाणिकमेतदित्यत आह **विविदिषन्तीति** । **प्रपञ्चयिष्यत इति** । अन्वयः सर्वशब्दानाम् इत्यत्रेति शेषः ।

**श्रीनिधि०— प्रपञ्चयिष्यते चैतदिति** । अन्वयस्सर्वशब्दानामित्यादिनेति शेषः ।

**शे०वा०—** तत्रोक्तदोषपरिहारार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्याशयेन तत्परिहारकतया तद्योजयितुं दोष-शङ्कामुत्थापयति **ननूक्तमिति** । **विज्ञानं परामृशतीति** । विज्ञानस्य विज्ञानार्थत्वत इत्यत्रोपसर्जनतया प्रकृतत्वेऽपि योग्यत्वादल्पबुद्धय इति विशेषणसामर्थ्याच्च तस्यैव परामर्श इति भावः । कारकोपपदविभक्तित्वासंभवादाह **अल्पबुद्धय इतीति** । 'चतुर्थ्यर्थे बहुलं छन्दसि' इति सूत्रेणेति शेषः । अत्र हि सूत्रे 'षष्ठी शेष' इत्यतः षष्ठीत्यनुवर्तते ।





चतुर्थी अर्थ इति च योगविभागः। चतुर्थी षष्ठी च अर्थे = परस्परार्थे बहुलं भवत इति। यद्यपि सूत्रेऽर्थ इत्येव श्रूयते तथाऽपि स्वार्थ एव षष्ठीचतुर्थ्योर्विधानानर्थक्यादन्योन्यसन्निधानादन्योन्यार्थ एव विभक्तिद्वयविधानं युक्तम्। यद्यपि च तत्सूत्रीयं 'षष्ठ्यर्थे चतुर्थी वक्तव्ये'ति वार्तिकमप्यस्तीति तेनापि विवक्षितनिर्वाहः कर्तुं शक्यते तथाऽप्युक्तरीत्या सूत्रेणैव वार्तिकार्थसिद्धेर्न तत्प्रयोजनमिति वार्तिकस्य प्रत्याख्यातत्वान्नोपपादकतयोपादानं युक्तमिति ध्येयम्। चतुर्थ्याः षष्ठ्यर्थत्वे परसम्प्रतिपन्नं दृष्टान्तमाह **अहल्याया इति**। यद्वा ननु न षष्ठ्यर्थेऽल्पबुद्धय इति चतुर्थी आश्रयितुं शक्यते तदर्थे तद्विधायकाभावादित्यतोऽहल्यायै जार इत्यत्र यदेव षष्ठ्यर्थे चतुर्थीविधायकं परस्येष्टं तदेवात्रापि तद्विधायकं भविष्यतीत्याशयेन प्रापकशास्त्रौदासीन्येन दृष्टान्तमेवाह **अहल्याया इति**। अत्र च पक्षे न पूर्ववाक्ये शेषपूरणमिति विशेष इति द्रष्टव्यम्। फलानुक्त्या प्रसक्तां भाष्ये न्यूनतां शेषपूरणेन परिहरति **नेति**। ननु वसन्तादिवाक्यानां कर्ममात्र एव पर्यवसानोपपत्तेः कथं कर्मणो ब्रह्मज्ञानार्थत्वमित्यतो दृष्टान्तेन तदुपपादयति **यथेति**। यूपाहवनीयादिवाक्यानां यूपाहवनीयादिमात्रे पर्यवसानाभावे हेतुमाह **निष्फल इति**। अध्ययनविधि-परिगृहीतत्वान्न निष्फलत्वं सम्भवतीति भावः। नन्वस्तु यूपाहवनीयादिवाक्यानां फलाऽऽकाङ्क्षत्वं तथाऽपि क्रतो-रनाकाङ्क्षतया ज्योतिष्टोमादिवाक्यस्यानपेक्षतया न तेषामङ्गाङ्गिभावो युक्तः इत्यतः क्रतोरपि कथमितीति-कर्तव्यताऽऽकाङ्क्षासत्त्वेन परस्परान्वयः सम्भवतीत्याह **किन्त्विति**। दृष्टान्तोपदर्शनं च, अन्यथा निष्फले यूपादिस्वरूपमात्र एव यूपादिवाक्यानां पर्यवसानापत्त्या ज्योतिष्टोमादीतिकर्तव्यतापरत्वं न स्यात्, इति विपक्षे बाधकं सूचयितुमिति ध्येयम्। नन्वध्ययनविधिपरिगृहीततया निष्फले यूपादिमात्रे तद्वाक्यानामपर्यवसानेऽपि ज्योतिष्टोमादेः स्वर्गादिफलकत्वात्सफले तस्मिन्कर्मकाण्डस्य पर्यवसानं किं न स्यादित्यत उक्तम् **अल्पेति**। 'अनित्यत्वात्सदुःखत्वादि'त्यादिश्रुतेरिति भावः। ननु यूपादेः कर्मार्थतया तद्वाक्यस्य कर्मार्थत्वेऽपि कर्मणो ब्रह्मज्ञानार्थत्वाभावात्कथं कर्मकाण्डस्य ब्रह्मज्ञानार्थत्वमित्यतः कर्मब्रह्मज्ञानयोरप्यस्ति साध्यसाधनभाव इत्याह **तदिति**। प्रमाणाभावान्न कर्मब्रह्मज्ञानयोः साध्यसाधनभावः इत्यत आह **विविदिषन्तीति**। **किमनेनेति**। अल्पबुद्धीनामपि मुख्येन प्रतिपदान्वयेनैव ब्रह्मज्ञानोत्पादसम्भवादिति भावः। ननु युक्तत्वायुक्तत्वपक्षोक्तदोषा-परिहारात् कथमल्पबुद्धीनामित्यनेनोक्ताक्षेपपरिहार इत्यत आह **प्रपञ्चयिष्यत इति**। 'अन्वयः सर्वशब्दानामि'त्या-दिनेति शेषः। **अनेनेति**। 'तदर्थत्वेन कर्मादिः' इत्यादिभाष्येणेत्यर्थः। आदिपदेन प्रतिज्ञासिद्धेरित्यादिसूत्राणां सङ्ग्रहः।

**वा०र०**— चतुर्थ्यर्थ इति नायं समासः। किं तर्हि चतुर्थी अर्थ इति योगो विभक्तव्यः। षष्ठीति चानुवर्तत इति मञ्जरी मनसि कृत्वा सूत्रार्थमाह **अत्र हि सूत्र इति**। **परस्परार्थ इति**। षष्ठ्यर्थे चतुर्थी चतुर्थ्यर्थे षष्ठीत्यर्थः। अन्योन्यार्थ इत्यस्याप्ययमेवार्थः। भवत इतीत्यतःपरमर्थ इति शेषः। **षष्ठ्यर्थे चतुर्थीति** मूलस्य स्वोक्त-सूत्रतात्पर्यकत्वनिर्धारणाय वार्तिके तात्पर्यमाशङ्क्य निराकरोति **यद्यपि चेति**। **नोपपादकतयेति**। अतो-ऽस्माभिरपि तद्वार्तिकस्योपादानं न कृतमिति भावः। **यद्वेति**। एतत्पक्षोत्थाननिमित्तं चात्र पक्ष इत्यादिना टीकाकृदेव वक्ष्यति। इन्द्रप्रसादकामोऽहल्यायै जारेति तन्निन्दामेव करोतीति अहल्यायै जारेति यथेति च क्रमेण





द्वितीयतृतीयगीताभाष्यटीकायां तूदाहरणान्तरत्वात्सम्बुद्धिपाठ इति न दोषः । अध्ययनविधिपरिगृहीतत्वादिति पाठः । अध्ययनेत्येव पाठे त्वध्ययनशब्दस्तद्विधिप इति न दोषः । अध्ययनपरिगृहीततयेत्युत्तरत्राप्येवं ज्ञेयम् । अनपेक्षतयेत्यनन्तरं परस्परानाकाङ्क्षत्वेनेति शेषः । अल्पबुद्धय इत्यनेनेति पाठः ।

**स०व्र०— अल्पबुद्धय इति षष्ठ्यर्थे चतुर्थीति** । चतुर्थ्यर्थे बहुलं छन्दसीति सूत्रे षष्ठी शेष इत्यतः षष्ठीत्यस्यानुवृत्तिमभिप्रेत्य चतुर्थी अर्थ च योगविभागाश्रयणेन षष्ठी चतुर्थी च परस्परार्थे बहुलं भवत इति व्याख्याततत्वात् तेन सूत्रेण षष्ठ्यर्थे चतुर्थीत्यर्थः । ननु एतत्सूत्र एव षष्ठ्यर्थे चतुर्थी वक्तव्येति वार्तिकेणैव तदुपपत्तौ किं क्लिष्टकल्पनाश्रयणेनेति चेन्न सूत्रेणैवोपपत्तौ किं तद्वार्तिकेनेति तद्वैयर्थ्ये तात्पर्यात् । **प्रपञ्चयिष्यत इति** । 'अन्वयस्सर्वशब्दानामि'त्येतदनुव्याख्यानव्याख्यावसरे 'एतेन अङ्गीकृतेऽपि' इत्यादिनोक्तं 'विवृतमि'त्यादिना प्रपञ्चयिष्यत इत्यर्थः ।

**विट्ठल०—** ननु कमदिर्शनार्थत्वमेव कुतः कथं च तथापि कर्मपरस्य भगवति समन्वय इत्यतो दृष्टान्तेनोपपादयति **यथेति** । **अनाशकेनेति** । अनशनव्रतेन । **प्रपञ्चयिष्यत इति** । 'अन्वयः सर्वशब्दानामि'त्यत्र ।

**॥ अथ तत्रादौ प्रतिपदान्वयेन ज्ञानसिद्धौ**
**वाक्यान्वयस्वीकारस्य आवश्यकता ॥**

**३२ सु०— नन्वल्पबुद्धीनामपि प्रतिपदान्वय एव ब्रह्मज्ञानहेतुर्भ(विष्यतीति)वतीति किं वाक्यान्वयेनेत्यत आह क इति ।**

## अनु०— कश्छन्दसां योगमिति श्रुतेः

**'कश्छन्दसां योगमावेद धीरः' इति श्रुतेर्वैदिकपदयोगवृत्तेरल्पबुद्धे(द्धिभि)रशक्यज्ञानत्वाद्यु(त्वेन यु)क्तं वाक्यान्वयव्युत्पादनमिति शेषः ।**

**शे०वा०—** कश्छन्दसामिति प्रतिपदसमन्वयस्याल्पाधिकारिकत्वाभाववर्णनमनर्थकमित्यतो वाक्यान्वयव्युत्पादनसमर्थनार्थं तदिति भावेन तद्वैयर्थ्यशङ्कामुत्थापयति **नन्विति** । अपेक्षितपूरणेन साकाङ्क्षत्वप्रयुक्तवाक्याभासत्वशङ्कां परिहरति **क इत्यदिना** ।

**॥ इति प्रतिपदान्वयेन ज्ञानसिद्धौ**
**वाक्यान्वयस्वीकारस्य आवश्यकता ॥**

* * *





**॥ अथ योगार्थतत्त्ववेत्तृत्वं ब्रह्मण एव, नान्येषाम् ॥**

३३ **सु०—** नन्वेवं तर्हि योगवृत्त्या प्रतिपदसमन्वयव्युत्पादनं न कर्तव्यम्, '**को धीरश्छन्दसां, योगं** = ब्रह्मणि योगवृत्तिम्, **आवेद** न कोऽपी'ति निरधिकारिकत्वश्रवणात्, न हि गायमानो बधिरेषु गायतीत्यत आह **योगार्थेति** ।

**अनु०— योगार्थतत्त्ववित् ।**
**ब्रह्मैको नैव चान्योऽस्ति**

योगस्यार्थो **योगार्थः** । तस्य **तत्त्वं** याथार्थ्यम् । चशब्दोऽर्थद्वयसमुच्चयार्थः । अयमस्याः श्रुतेरर्थ इति शेषः । एतदुपपादयति **क इति** ।

**क इत्यस्योभयार्थतः ॥**

'प्रजापतिर्वै क' इति श्रुतेः कशब्दो ब्रह्मार्थः । किंवृत्तस्य चाक्षेपे वृत्तिः सुप्रसिद्धा । तथा च क इत्यस्योभयार्थत्वाद्ब्रह्मार्थत्वे तस्य योगवृत्तिज्ञाने सामर्थ्यकथनान्नानधिकारिकत्वम् । आक्षेपार्थत्वे तदन्येषामनधिकारकथनाद्युक्तो वाक्यान्वयाभ्युपगमः ।

ननु कथमेतत् । आवृत्तेस्तन्त्रधर्माद्वेत्यदोषः । प्रमाणं चात्रान्यथाऽनुपपत्तिरिति ।

**परि०— (वाक्यार्थद्वयेति ।) अर्थद्वयेति** । कोऽपि न जानाति, ब्रह्मैव तु जानातीति वाक्यार्थद्वयेत्यर्थः । पूर्वम् 'इति श्रुतेरि'त्येतत्पूर्वशेषतया योजितम् उत्तरान्विततया व्याप्तत्वस्फोरणाय 'इति श्रुतेरि'त्यनन्तरं अयमर्थ इति इति शेष इत्याह **अयमस्याः श्रुतेरर्थ इति शेष इति** । **किंवृत्तस्य चेति** । किंप्रातिपदिकोपेतशब्दस्येत्यर्थः । कि(मो)मावृत्तं किंवृत्तम् । वृतु वर्तने अधिकरणे क्तः । किं प्रातिपदिकं यत्र वर्तते तत्किंवृत्तम् । तच्च कः किं केनेत्यादिविभक्त्यन्तं, किन्तरां किन्तमां कुतः कुतस्तरां कुतस्तमां किमीयं(?) कीदृशमित्यादिकं सर्वं भवतीति तस्य सर्वस्य परिग्रहाय किंवृत्तस्येत्युक्तम् । अष्टमस्याद्यपादे 'किंवृत्तं च चिदुत्तरमि'ति सूत्रे वृत्तिमञ्जर्यां यद्वत्तान्नित्यमिति भाष्यकैयटयोरेवमेवोक्तेः । शङ्कते **ननु कथमेतदिति** । सकृदुक्तस्यार्थद्वयं कथमित्यर्थः । **तन्त्रेति** । सकृदुच्चरितमनेकोपकारकं तन्त्रम् । तस्यानेकोपकारकत्वरूपो यो धर्मस्तस्माद्वेत्यर्थः । नन्वावृत्त्यादिना अनेकार्थत्वं प्रमाणाधीन-





मित्यत आह **प्रमाणं चात्रेति** । 'एतमेव तथा सन्तमि'त्यादिवक्ष्यमाणदिशा ब्रह्मणि सर्वशब्दानां योगादिवृत्तेः । 'अन्वयः सर्वशब्दानाम्' इति वक्ष्यमाणन्यायेन सर्वाधिकारिकत्वस्य चावगमेन तदुभया-न्यथाऽनुपपत्तिरेव एतच्छ्रुतेरर्थद्वये प्रमाणमित्यर्थः ।

**यादु०— किंवृत्तस्येति** । किमो रूपं किंवृत्तम् । किंशब्द इति यावत् । तस्येत्यर्थः । **तन्त्रधर्माद्वेति** । सकृदुक्तमनेकोपकारकं तन्त्रं, तस्य यो धर्मोऽनेकोपकारकत्वरूपस्तस्मादित्यर्थः । **प्रमाणं चात्रेति** । क इत्यस्य उभयार्थत्व इत्यर्थः । 'नामानि सर्वाणी'त्यादिप्रमाणसिद्धप्रतिपदसमन्वयेऽधिकारिसिद्धचन्यथाऽनुपपत्त्या ब्रह्मार्थत्वं तावत्स्वीकार्यम् । 'ता वा एताः सर्वा ऋचः' इत्यादिप्रमाणसिद्धवाक्यसमन्वयव्युत्पादनान्यथाऽनुपपत्त्याऽऽक्षेपा-र्थत्वमप्यङ्गीकार्यम् । अन्यथाऽल्पबुद्धीनामपि प्रतिपदान्वय एव ब्रह्मज्ञानहेतुर्भविष्यतीति किं वाक्यान्वयेनेति शङ्काऽवरुद्धत्वेन प्रमाणोक्तं तदनर्थकं स्यादित्यर्थापत्तिद्वयमत्र प्रमाणमित्यर्थः ।

**आनन्दः— अर्थद्वयसमुच्चयार्थ इति** । कशब्दस्याक्षेप प्रजापतिरूपार्थद्वयसमुच्चयार्थ इत्यर्थः । **ननु कथमेतदिति** । सकृच्छ्रुतस्य शब्दस्यार्थद्वयकल्पनं विरुद्धमित्यर्थः । परिहरति **आवृत्तेरिति** । सकृदुच्चरितं अनेकोपकारकं तन्त्रमिति तन्त्रधर्मः । नन्वस्त्येवमर्थद्वयं प्रकृते आक्षेप एवास्तु प्रजापतिरूपार्थस्यापि ग्रहणे किं प्रमाणमत आह **प्रमाणं चेति** । तत्र हि पदसमन्वयोऽभिहितः । स चाधिकारिणं विना न संभवति । कश्छन्दसा-मित्यनेन चाधिकारी निषिध्यते । अत उभयोर्विरोधे प्राप्ते समन्वयाभिधानेनाक्षेपश्चेत्येतदुभयान्यथानुपपत्त्या कशब्दस्य प्रजापतिरूपार्थो गृह्यत इति तद्ग्रहणेऽन्यथानुपपत्तिः प्रमाणमित्यर्थः ।

**श्रीनिधि०— अर्थद्वयसमुच्चयार्थ इति** । चतुर्मुखाक्षेपरूपार्थद्वयसमुच्चयार्थ इत्यर्थः । **एतदुप-पादयतीति** । अर्थद्वयमित्यर्थः । **ननु कथमेतदिति** । सकृदेव श्रवणादिति भावः । **तन्त्रधर्मादिति** । तन्त्ररूप-धर्मान्नियामकादित्यर्थः । अत्र अर्थद्वयविवक्षायाम् । **अन्यथानुपपत्तिरिति** । आक्षेपमात्रत्वे योग्यवृत्तिर्निरधि-कारिका स्यात् । चतुर्मुखात्रार्थत्वे वाक्यसमन्वयव्युत्पादनं व्यर्थमिति शङ्का स्यात् ।

**शे०वा०—** वाक्यान्वयस्य पूर्ववाक्येनैव समर्थनात् ब्रह्मणः पदसमन्वयाधिकारवर्णनस्य तादर्थ्यायोगाच्च तदनर्थकमित्यतः पदसमन्वयस्यावक्तव्यताशङ्कापरिहारार्थं तदिति भावेन प्रापकोपदर्शनपूर्वकं तद्वैयर्थ्यशङ्का-मुत्थापयति **नन्विति** । **अर्थद्वयेति** । पदसमन्वयस्य ब्रह्माधिकारिकत्वतदन्यानधिकारिकत्वरूपार्थद्वयेत्यर्थः । **अयमिति** । इत्ययम् इति इतिशब्दाध्याहारेण योज्यम् । **एतदुपपादयतीति** । श्रुतावुभयप्रापकादर्शनात्कथ-मर्थद्वयस्य श्रुत्या लाभ इत्याशङ्कापरिहारार्थमिति भावः । **किंवृत्तस्येति** । किमो वृत्तं **किंवृत्तं** = किंशब्द इति यावत् तस्येत्यर्थः । **कथमिति** । सकृच्छ्रुतस्य शब्दस्यानेकार्थताया अन्याय्यत्वादिति भावः । तन्त्रधर्मो-ऽनेकोपकारकत्वरूपस्तस्मादित्यर्थः ॥ ननु कश्छन्दसामिति श्रुतौ क इत्यस्योभयपरत्वे प्रमाणेन सिद्धे सत्येव तदन्यथाऽनुपपत्त्याऽऽवृत्त्याद्याश्रयणमुपपद्यते । न चात्र श्रौतस्य क इत्यस्योभयपरत्वे किञ्चित्प्रमाणमस्ति ।





न । क इत्यस्योक्तरीत्योभयार्थत्वादेव तत्सिद्धिः । अक्षादिशब्दानामनेकार्थतया सर्वत्रानेकार्थपरत्वाऽपातात् च । तथा च श्रौतस्य क इत्यस्योभयपरत्वासिद्धेः कथमावृत्त्याद्याश्रयणमित्यतः श्रौत 'क' इत्यस्य ब्रह्मार्थत्वाभावे निरधिकारिकत्वेन पदसमन्वयोक्तेरयोगादाक्षेपार्थत्वानङ्गीकारे च सर्वेषामपि पदसमन्वयेनैव ब्रह्मज्ञानोपपत्तौ वाक्यसमन्वयोक्तेरयोगात्तदुभयोक्त्यन्यथाऽनुपपत्त्या श्रुतौ क इत्यस्योभयपरत्वसिद्धेर्युक्तमावृत्त्याद्याश्रयणमित्याह **प्रमाणं चेति** । **अत्र** श्रुतौ क इत्यस्योभयपरत्व इत्यर्थः ।

**वा०र०**— अर्थानुवादे वा किमोकृतमिति तृतीयस्य तृतीये किं वृत्ते लिप्सायामिति सूत्रीयमञ्जर्यां किं वृत्तमित्येतदेवं व्याख्यातं किमो वृत्तं किं वृत्तं वर्तते तस्मिन्निति वृत्तं क्तोधिकरणे चेति क्तप्रत्ययः । अस्मादेव निपातनादधिकरणवाचिना चेति षष्ठीसमासनिषेधाभावः । शेषषष्ठ्या वा समासः किं प्रातिपदिकं यत्रावयवत्वेन वर्तते तत्किं वृत्तमिति । तत्रैकदेशग्रहणेनोक्तमुपपादनं सङ्गृहीतं काशिकाया त्वेतदर्थकत्वे किमीयः कीदृश इत्यादावपि किं वृत्त इति सूत्रेण प्रसङ्गवारणाय विभक्त्यन्तं डतरडतमप्रत्ययान्तं चेति सङ्कोचेन ख्यातम् । उक्तं च शेष्यां यत्किमोरूपं साक्षाद्विभक्तिपरं डतरडतमप्रत्ययपरं वा तत्किं वृत्तमित्युच्यते पूर्वाचार्यप्रसिद्धेरिति किं वृत्तं चिदुत्तरमिष्टमाद्ये यद्वृत्तान्नित्यमिति सूत्रभाष्यकैय्यटयोश्चैवम् । किंशब्दप्रकृतिकमिति यावदिति पाठः । किंशब्द इत्येव पाठस्तु लेखकागतः । किंशब्दस्याक्षेपार्थतया तत्प्रकृतिकस्यापि तदर्थकत्वं सुप्रसिद्धमिति मूलाभिप्रायः । किमो रूपं किं वृत्तमित्यन्यथाख्यातिरपि शब्दपरत्वेन योजनायां किंशब्दस्य किंशब्दरूपत्वमित्याश्रयणोपपत्तेर्दुष्टेति ॥ तन्त्रेतीति प्रतीकोपादानमिति पाठः । अत्रेत्यनूद्य व्याख्यानमुभयपरत्व इत्यन्तम् ।

**स०व्र०**— **किंवृत्तस्य चेति** । किमो रूपं किंवृत्तं किंशब्द इति यावत् । तस्येत्यर्थः । **तन्त्रधर्माद्वेति** । सकृदुक्तमनेकोपकारकं तन्त्रं तस्य यो धर्मोऽनेकोपकारकत्वरूपस्तस्मादित्यर्थः । अन्ये तु 'ननु कथमेतदि'त्यस्य एकस्यैव वेदस्य पदसमन्वयो वाक्यसमन्वयश्चेत्येतदर्थद्वयं कथमित्याक्षेपभावमाहुः । **प्रमाणं चात्रेति** । क इत्यस्य उभयार्थत्व इत्यर्थः । तथा हि 'नामानि सर्वाणी'त्यादौ प्रमाणसिद्धप्रतिपदसमन्वयेऽधिकार्यन्यथानुपपत्त्या ब्रह्मार्थत्वं तावत्स्वीकार्यम् । 'ता वा एताः सर्वा ऋचः' इत्यादिप्रमाणासिद्धवाक्यान्वयव्युत्पादनान्यथानुपपत्त्याऽऽक्षेपार्थत्वमप्यङ्गीकार्यम् । अन्यथाऽल्पबुद्धीनामपि प्रतिपदान्वय एव ब्रह्मज्ञानहेतुर्भविष्यतीति किं वाक्यान्वयेनेति-शङ्काऽवरुद्धत्वेन सूत्रकारीयं तद्व्याख्यानमनर्थकं स्यादिति ।

**विठ्ठल०**— **अर्थद्वयेति** । एकोऽपि न जानाति ब्रह्मैव जानातीत्यर्थद्वयसमुच्चयार्थः । **पूर्वमिति** । श्रुतेरित्येतत्पूर्वविशेषतया योजितं उत्तरान्वितत्वस्फुरणाय इति श्रुतेरित्यनन्तरमयमर्थ इति शेष इत्याह **अयमस्याः श्रुतेरर्थ इति शेष इति** । **किंवृत्तस्येति** । किमो रूपं किं वृत्तं किं शब्द इति यावत् । **तस्येत्यर्थः** । सकृदुक्तमनेकोपकारकं तन्त्रं तस्य धर्मादित्यर्थः । **प्रमाणं चात्रेति** । 'नामानि सर्वाणि यमाविशन्तीत्यादि' प्रमाणसिद्धप्रतिपदसमन्वये अधिकारिसिद्ध्यन्यथानुपपत्त्या चतुर्मुखार्थत्वं तावत्स्वीकार्यं 'ता वा एताः सर्वा ऋचः', 'वाक्यान्वयात्' इत्यादिप्रमाणसिद्धवाक्यसमन्वयव्युत्पादनान्यथानुपपत्त्या आक्षेपार्थत्वमङ्गीकार्यम् ।





अन्यथाल्पबुद्धीनामपि प्रतिपदान्वय इति एव ब्रह्मज्ञानहेतुर्भविष्यतीति किं वाक्यान्वयेति शङ्कावरुद्धत्वेन ता वा एता इत्युक्तिवाक्यान्वयादिति सूत्रकारोक्तिश्चायुक्ता स्यादित्यर्थद्वयमप्यत्र क इत्यस्योभयार्थत्वे मानमित्यर्थः ।

**॥ अथ तत्र ब्रह्मण एव योगार्थतत्त्ववेत्तृत्वे प्राप्तायाः अनुपपत्तेः परिहारः ॥**

**३४ सु०—** **यदि ब्रह्मा एक एव पदानां योगवृत्त्याऽर्थसम्बन्धं वेद तदा 'एकस्य प्रतिभातं तु कृतकान्न विशिष्यते' इति न्यायात्कृतकत्वं शब्दार्थसम्बन्धस्येत्याद्यापद्येत(द्यते) । तथा 'चौत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इति जैमिन्युक्तः शब्दानामर्थैर्नित्ययोगः परित्यक्तः स्यादित्यत आह तस्यापीति ।**

**अनु०—** **तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात् ।**
**नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिद्ध्यते ॥**

**यद्यप्येक एव प्रतिपत्ता तथाऽपि तस्य पूर्वसिद्धस्यैव = पूर्वस्थितस्यैव ज्ञातस्यैव च शब्दार्थसम्बन्धस्य ज्ञानमेव प्रमितिरेव भवति न तूत्प्रेक्षामात्रम् इति = अस्यार्थस्य श्रुत्यादिभ्यो निश्चयात् जैमिन्युक्तः अर्थैः शब्दानां नित्ययोगो नैव अस्माभिः (नैव) त्यज्यत इति योजना ।**

**एतदुक्तं भवति । स्यादयं दोषो यदि ब्रह्मणः शब्दार्थसम्बन्धज्ञानमुत्प्रेक्षा(रूपं) स्यात् । न चैवम् । किन्तु पूर्वजन्म(नि )प्रतीतं स्वतःसिद्धमेव सम्बन्धमिह जन्मनि सुप्तप्र(ति)बुद्धन्यायेनेश्वरप्रसादादवबुद्ध्यत इति । तथा च श्रुतिः, 'यो ब्रह्माणमि'त्येवंजातीयका ।**

**एकदेशो पुरुषान्तरप्रतिपत्तिसंवादाच्चैतदेवम् । तथा च स्मृतिः, 'जन्मान्तरे श्रुतास्तास्तु' इत्यादिका । अत एव श्रुतिः 'आवेदे'त्याह । एतेन नैकाधिकारिकं शास्त्रमित्यपि परास्तम् ॥**

**परि०—** **औत्पत्तिकस्त्विति** । जिज्ञासासूत्रेऽस्य सूत्रस्यार्थ उक्तः । **यो ब्रह्माणमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्येवंजातीयका ऋग्भाष्याद्युक्तेत्यर्थः । अत्र विवक्षितार्थस्यास्फुटत्वादेवञ्जातीयकेत्युक्तम् । **पुरुषान्तरेति** । वामदेवादिपुरुषान्तरस्य । 'तद्धैतत्पश्य-





न्नृषिर्वामदेवः प्रतिपेदे । अहं मनुरभवं सूर्यश्च' इत्यादिना आदौ मनुसूर्यादिकतिपयशब्दानाम् 'अवबोध-सूर्यनियमनादिभिः सर्वनामा भवति' इति ऐतरेयभाष्योक्तयोगेनान्तर्यामिणि वृत्तिपरिज्ञानसंवादाच्चेत्यर्थः । **इत्यादिकेति** । 'जन्मान्तरे श्रुतास्तास्तु वासुदेवप्रसादतः । मुनीनां प्रतिभास्यन्ति भागेनैव न सर्वशः' इति तत्त्वनिर्णयोक्ता । **अत एवेति** । यतः ब्रह्मण एव वासुदेवप्रसादेन सुप्तप्रबुद्ध इव सर्वप्रमातृत्व-मन्येषां एतदेशज्ञातृत्वं तस्मादेव कश्छन्दसामिति श्रुतिः आ = सम्यक् ब्रह्मैव वेद नान्यः किन्त्वल्पमेव वेदेत्याहेत्यर्थः । **एतेनेति** । एकैकदेशेन योगवृत्तिपरिज्ञानस्य वामदेवादिमुनिषु सत्त्वेन पदसमन्वयरूपेण विष्णुप्रतिपादकं वेदरूपशास्त्रमेकाधिकारिकं नोपपद्यत इति निरस्तम् । ब्रह्मणः सर्वशब्दयोगार्थपरिज्ञाने वामदेवादिमुनीनां एकदेशे योगार्थज्ञानेऽधिकारित्वेनानेकाधिकारित्वलाभादिति भावः ।

**गु०दी०— कृतकान्न विशिष्यत** इत्यस्य **कृतकात्** कादाचित्कादित्यर्थः । **यो ब्रह्माणम्** इत्यनेन 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदान् प्रहिणोत्यस्मा' इति श्रुतिमुपादत्ते ।

**यादु०— यो ब्रह्माणमित्येवमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति ब्रह्मण उत्पत्त्यनन्तरमेव वेदार्थोपदेश ईश्वरेण क्रियत इत्युच्यते तेन नौत्प्रेक्षिकं तस्य वेदार्थस्य ज्ञानं किन्तु सुप्तप्रबुद्धन्यायेन प्राक्सिद्धस्यैवेति सिद्ध्यति । कथमन्यथा जातमात्र एवोपदेशेनापि वेदार्थं जानीयादिति । अत्र स्पष्टमुक्तार्थाप्रतीतेरुक्तम् **एवंजातीयकेति** । **एकदेशेषु** काठकादिषु । सर्वस्यापि वेदस्यादौ ब्रह्मदृष्टत्वादिति भावः । नन्वेवं कश्छन्दसामिति श्रौत आक्षेपो न युक्त इत्यत आह **अत एवेति** । तथा च आ = समन्तात् समस्तमिति यावत् । को वेद न कोऽपीत्याक्षेप इति भावः । **एतेनेति** । सर्वत्रैकदेशे ऋष्यन्तरसंवादेनेत्यर्थः ।

**वं०प०— पुरुषान्तरेति** । ऋष्यन्तरेत्यर्थः । प्रतिपत्तिः पूर्वतनमेव वेदमधीमहेऽध्यापयामश्चेत्यादिरूपा । **एतदेवमिति** । तस्यापि पूर्वसिद्धस्य ज्ञानमेवेत्युक्तं प्रमेयमेवेत्यर्थः । ननु ऋष्यादिदृष्टवेदभागस्य ब्रह्मदृष्टत्वाभावेन ब्रह्मदृष्टे वेदभागे संवादो नास्तीति चेन्न । सर्वस्यापि वेदस्यादौ ब्रह्मणा दृष्टत्वेन ऋष्यादिदृष्टैकदेशस्यापि ब्रह्मदृष्टत्वेन युक्तः संवाद इत्यर्थः । तथा च ब्रह्मणो यदि शब्दार्थसम्बन्धज्ञानमौत्प्रेक्षिकं स्यात्तर्हि ब्रह्मदृष्टो यः समस्तो वेद-स्तदेकदेशे ऋष्यन्तरसंवादो न स्यात् । न ह्यौत्प्रेक्षिके मेघसन्देशादौ संवादो दृष्ट इति भावः । नन्वृष्यादीनामपि यदेकदेशशब्दार्थसम्बन्धज्ञानं तदप्यौत्प्रेक्षिकं किं न स्यात् । संवादस्य काकतालीयतासम्भवादिति चेन्न । तेऽपि पूर्वजन्मप्रतीतिं स्वतःसिद्धमेव सम्बन्धमिह जन्मनि प्रतिबुद्धन्यायेनेश्वरप्रसादादवगच्छन्तीति स्मृतिसिद्धत्वेन संवादो युक्त इत्याह **तथा चेति** । एकदेशेऽस्ति पुरुषान्तरप्रतिपत्तिरित्यत्रावष्टम्भकान्तरमाह **अत एवेति** । तत्र छन्दसां योगं योगवृत्त्या वाच्यवाचकभावसम्बन्धमासम्यम् आ=सम्यक् को वेदेत्युक्त्या इतरे किञ्चिज्जानन्तीति लभ्यत इति भावः । श्रुतेर्योगार्थतत्त्वविद्ब्रह्मैक इत्ययुक्तम् । तथात्वे शास्त्रस्य तन्मात्राधिकारिकत्वप्रसङ्गात् एकाधि-





कारिकस्य च शास्त्रस्य लोकेऽदृष्टत्वादिति चेत्तत्राह **एतेनेति** । ब्रह्मदृष्टेषु सर्वेषु वेदेष्वेकैकस्मिन्देशे सर्वत्र ऋष्यन्तरसंवादाङ्गीकारेण तेषामप्यधिकारस्यैकदेशेऽङ्गीकारेणेत्यर्थः ।

**आनन्दः— कृतकत्वम्** । औत्प्रेक्षिकत्वं इत्यर्थः । **एकदेश इति** । दशपञ्चदशरूपा ये शब्दार्थाः तद्रूपदेशे पुरुषान्तरस्यापि प्रतिपत्तेर्ज्ञानस्य सत्त्वेन तत्संवादादेतत् ब्रह्मणः शब्दार्थज्ञानसम्बन्धज्ञानं एवं प्रमारूपमित्यर्थः । **अत एवेति** । यत एकदेशे पुरुषान्तरप्रतिपत्तिरूपः संवादोऽत एवेत्यर्थः । **एतेनेति** । पुरुषान्तरस्यापि प्रतिपत्तिसद्भावेनेत्यर्थः ।

**श्रीनिधि०— कृतकात्** कृत्रिमात् । पूर्वं ज्ञानमपि न भवन्तीत्याशयेन सिद्धपदस्यावृत्त्यार्थद्वयमाह **स्थितस्यैव ज्ञातस्यैव चेति** । लीलानिमित्तं यथा भवति तथा दंसमवष्टभ्येति क्रियाविशेषणं ज्ञेयम् । अन्यथा सामञ्जस्यात् । **एकदेशे पुरुषान्तरेति** । श्रवणं च नाक्षरावाप्तिमात्रम् । किन्तु वाक्यार्थग्रहणमपीति भावः । तत्रापि स्वप्रतिभातेषु तेषां चित्पादानां समन्वयोऽपि तैर्ज्ञायत इति भावः ।

**शे०वा०—** ननु पदसमन्वयस्य ब्रह्माधिकारिकत्ववर्णनमात्रेण निरधिकारिकत्वशङ्कापरिहारात् ब्रह्मणः पूर्वसिद्धस्यैव ज्ञानाभिधायकोत्तरवाक्यवैयर्थ्यम् । न च प्रतिपदान्वयस्य ब्रह्ममात्रज्ञातत्वे कृतकत्वाऽऽपत्त्या तत्परिहारार्थं तदिति वाच्यम् । प्रापकाभावेन ब्रह्ममात्रज्ञातत्वेन तच्छङ्काऽनुदयात् । कथञ्चिदुदयेऽपि कृतकत्वेऽपि सम्बन्धस्य बाधाभावेन तदपरिहारेऽप्यनिष्टाभावादित्यतः प्रापकोपन्यासेन कृतकत्वापत्तिमुपपाद्य तदङ्गीकारे चानिष्टोपदर्शनेन तस्याः परिहरणीयत्वं च सूचयन्नेव तत्परतयोत्तरवाक्यमवतारयति **यदीत्यादिना** । पूर्ववाक्ये पदसमन्वयस्य ब्रह्ममात्राधिकारिकत्वोक्तेस्तदनुरोधेन तस्यापीत्यपिशब्दस्य समुच्चायकत्वासम्भवात्तद्वैयर्थ्यमित्यतः पूर्ववाक्यात् 'एक एव प्रतिपत्ते'त्यस्यार्थतोऽनुवृत्तिम्, अपिशब्दस्य, यद्यपि तथाऽपीत्यर्थकत्वं, तस्य चानुवृत्तान्वयम्, एवशब्दस्य भिन्नक्रमत्वं यथास्थितान्वयं च, ज्ञानशब्दस्य विशेषपरत्वं, निश्चयादित्यत्र श्रुत्यादिभ्य इति शेषं च मनसि निधाय वाक्यं योजयति **यद्यपीत्यादिना** । यदि ब्रह्मणः पूर्वसिद्धस्यैव ज्ञानं तर्हीश्वरत्वं तस्य स्यादित्यत ईश्वरप्रसादायत्तत्वात्तज्ज्ञानस्य, न तस्येश्वरत्वापत्तिरित्याह **एतदुक्तं भवतीति** । **ईश्वरप्रसादात्** = अन्तर्गतस्य व्यासस्य प्रसादात् । 'अव(गच्छ)बुद्ध्यते' इत्यत्र अध्ययनेन विनेति शेषः । न चैवमध्ययनं व्यर्थम्; अदृष्टार्थत्वात् । अत एवोक्तमन्यत्र 'विरिञ्चस्य केवलं धर्मकारणमि'ति 'महतो हि धर्मस्य कारणं परमेश्वरादध्ययनमि'ति च । 'श्रुतिभ्यो निश्चयादि'त्युक्तं; तत्र कास्ताः श्रुतय इत्यत आह **तथा चेति** । अत्र विवक्षितार्थस्य स्पष्टमप्रतीतेराह **एवंजातीयकेति** । नन्वेकदेशे पुरुषान्तरप्रतिपत्तिसद्भावे कथं 'कश्छन्दसामि'ति तदाक्षेप इत्यतो नात्र वेदनमात्राक्षेपोऽभिमतः तथा सत्याङो वैयर्थ्यप्रसङ्गात् किन्तु आ = सम्यक् समन्ताद्वेदनस्यैव । न चान्यस्य समन्तात्सम्यग्वा वेदनमस्ति येन श्रौताक्षेपानुपपत्तिः स्यादित्याह **अत एवेति** । वेदनमात्राक्षेपस्यानभिमतत्वादेवेत्यर्थः । **एतेनेति** । एकदेशे पुरुषान्तरस्याप्यधिकारप्रतिपादनेनेत्यर्थः ।





**वा०र०— पूर्वसिद्धस्यैव ज्ञानेति** । पूर्वसिद्धस्यैव यज्ज्ञानं तदभिधायकेति योज्यम् । ऋग्भाष्य इत्यर्थः । **इति चेति** । तट्टीकायामिति शेषः ॥ अत्राधिकरणे पूर्वपक्ष्युक्तस्य योगाङ्गीकारे मुख्यार्थत्वासिद्धिरूप-दूषणस्य परिहारो नास्ति । स तु पूर्वापरग्रह इत्येतदनुव्याख्यानव्याख्यावसरे करिष्यत इति अभिप्रेतं मूले । तेन न प्रागुक्तमुख्यार्थत्वानुपपत्तिपरिहाराभाव इति ज्ञेयम् ।

**स०व्र०— यो ब्रह्माणमित्येवमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै' इति श्रुतौ प्रहिणोतीत्यस्य प्रज्ञापयतीति व्याख्याने प्रशब्दादुक्तार्थसिद्धिरिति भावः । अत्र स्पष्टमुक्तार्थाप्रतीतेरुक्तम् **एवंजातीयकेति** । सा च ऋग्भाष्यादौ द्रष्टव्या । **एकदेशे** काठकादिषु । सर्वस्यापि वेदस्यादौ ब्रह्मदृष्टत्वादिति भावः । **एतेन नैकाधिकारिकमिति** । सर्वत्रैकदेशेषु ऋष्यन्तरसंवादेनेत्यर्थः ।

**विठ्ठल०—** चतुर्मुखस्य ज्ञातार्थज्ञानमित्येतदनुपपन्नं प्राथमिकाध्ययनात्पूर्वं तदर्थज्ञानस्याप्रामाणिक-त्वादित्यत आह **एतदुक्तं भवतीति** । **यो ब्रह्माणमिति** । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदान् च प्रहिणोति तस्मै' इत्येवंजातीयकेत्यर्थः । प्रहिणोतीत्यस्य प्रज्ञापयतीति व्याख्यानेन विवक्षितार्थलाभः । अत्र स्पष्टं विवक्षि-तार्थाप्रतीतेरेवंजातीयकेत्युक्तम् । **अत एवेति** । ब्रह्मातिरिक्तस्य समग्रवेदार्थज्ञानानधिकारित्वादेव को ब्रह्मैव आसमन्ताद्वेदेतीतरव्यवच्छेदपूर्वमाहेत्यर्थः । **एतेनेति** । सर्वत्र एकैकदेशेषु ऋष्यन्तरसंवादसद्भावेनेत्यर्थः ।

**॥ इति ब्रह्मण एव योगार्थतत्त्ववेत्तृत्वे प्राप्ताया अनुपपत्तेः परिहारः ॥**

**॥ इति योगार्थतत्त्ववेत्तृत्वं ब्रह्मण एव, नान्येषाम् ॥**

**॥ इति अल्पबुद्धीनां ज्ञानार्थत्वेन कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयाभावस्य निरसनम् ॥**

**॥ इति कर्मकाण्डगतवाक्यानामपि ब्रह्मणि समन्वयप्रदर्शनम् ॥**

**॥ इति कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयो नेति पूर्वपक्षस्य निरासः ॥**

**॥ इति कर्मकाण्डगतवाक्यानां ब्रह्मणि समन्वयः ॥**

## ॥ इति ज्योतिरुपक्रमाधिकरणम् ॥

## ॥ १-४-२ ॥

* * *





इति

**श्रीमद्बादरायणविरचितानां** वेदार्थनिर्णायकानां श्रीमद्ब्रह्मसूत्राणां

**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य** द्वितीयव्याख्यानस्य **श्रीमदनुव्याख्यानस्य**

**श्रीज्जयतीर्थविरचितायां** विषमपदवाक्यार्थविवृतौ टीकायां **श्रीमन्न्यायसुधायां**

**परिमळाद्युपेतायां**

**प्रथमाध्याये चतुर्थपादे**

# ज्योतिरुपक्रमाधिकरणं

संपूर्णम् ॥

अनेन कर्मणा एतद्ग्रन्थप्रतिपाद्यः

समस्तगुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गतसीतापतिश्रीमन्मूलरामचन्द्रः

प्रीयताम् ।

प्रीतो भवतु ॥

**श्रीकृष्णार्पणमस्तु ॥**

**कायेन वाचा मनसेन्द्रियैर्वा**
**बुध्याऽत्मना वाऽनुसृतःस्वभावम् ।**
**करोमि यद्यत्सकलं परस्मै**
**नारायणायेति समर्पयामि ॥**





# परिशिष्टानि

पुटसंख्या



।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

## श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ब्रह्मसूत्रानुव्याख्यानम्

## ।। अथ प्रथमाध्यायस्य द्वितीयः पादः ।।

।। श्रीगुरुभ्यो नमः ।। हरिः ॐ ।।

अन्यत्रप्रसिद्धलिङ्गात्मकशब्दसमन्वयारम्भः

लिङ्गात्मकानां शब्दानां वृत्तिर्नारायणे परे ।। २५७ ।।

चिन्त्यते

सत्तालिङ्गसमन्वयः

सर्वगत्वं तु प्रथमं प्रविचार्यते ।

तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः।। २५८ ।।

दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः ।
इति ज्ञापयितुम्

कर्तृकर्मभावस्य उत्सर्गतः भेदव्याप्तत्वम्

कर्मकर्त्रोरुत्सर्गतो भिदा ।। २५९ ।।

अपवादे सति अभेदः, प्रकृते न अपवादः

अभेदोऽपि विशेषे स्याद्बली सोऽप्यनपोदितः ।

एतत्पादीयाधिकरणोपाधयः

एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् ।। २६० ।।

अन्तर्याम्यन्तरश्चेति क्रियाभावाख्यमुच्यते ।
अदृश्यत्वाद्यभावाख्यं श्रुतिर्लिङ्गाधिका परा ॥ २६१ ॥

॥ इति सर्वगतत्वाधिकरणम् ॥ १ ॥

***

## ॥ अत्तृत्वाधिकरणम् ॥

क्रियालिङ्गसमन्वयः, अदनादिक्रियायाः अनित्यत्वेन परमेश्वरस्वरूपत्वं कथमित्याक्षेपः

अनित्यत्वात्क्रियाणां तु कथमेव स्वरूपता ।

परमेश्वरक्रियायाः नित्यत्वसमर्थनेन परिहारः

इति चेत्स विशेषोऽपि क्रिया शक्त्यात्मना स्थिरः॥ २६२ ॥

शक्तिता व्यक्तिता चेति

विशेषस्य स्वनिर्वाहकत्वम्

विशेषोऽपि विशेषवान् ।

अभिन्नोऽपि

परमेश्वरक्रियाया नित्यत्वे पराऽस्य शक्तिरित्यादिश्रुतिः प्रमाणम्

क्रियादिश्च स्वभाव इति हि श्रुतिः॥ २६३ ॥

तत्रैव स्पष्टश्रुतिः

'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः ।
नित्यानन्दोऽव्ययः पूर्णो भगवान्विष्णुरच्युतः'॥ २६४ ॥

इति पैङ्गिश्रुतिश्चाह

ईश्वरक्रियाया नित्यत्वं अन्यक्रियाया अनित्यत्वमित्यत्र प्रमाणम्

'शक्तिसद्भाव एव तु ।
क्रियादिनित्यता ज्ञेया तदन्यत्र त्वनित्यता' ॥ २६५ ॥

इति सत्तत्त्ववचनम्

॥ इति अत्तृत्वाधिकरणम् ॥ २ ॥

* * *

## ॥ गुहाधिकरणम् ॥

फलभोगरूपक्रियालिङ्गसमन्वयः

द्वित्वं चैकस्य युज्यते ।

'यः सेतुरि'ति चैकत्ववचनेन विशेषणात् ॥ २६६ ॥

॥ इति गुहाधिकरणम् ॥ ३ ॥

* * *

## ॥ अन्तराधिकरणम् ॥

क्रियाभावरूपलिङ्गसमन्वयः

अन्तःस्थित्वा रमणकृदन्तरः स उदाहृतः ।
रमणं चात्मशब्देनाऽऽदेयं मातीति चोच्यते ॥ २६७ ॥

पूर्णसुखाभिधानात् चक्षुरन्तस्थः विष्णुरेव

विशिष्टसुखवत्त्वाच्च ब्रह्मत्वं च विशिष्टता ।

परमेश्वरप्रेरणयैव इतरेषां नियम्यनियामकभावः, अन्यथा अनवस्थित्यसम्भवौ स्याताम्

अन्योन्यनियतिश्चेशनियमे नान्यथा भवेत् ॥ २६८ ॥

चेतनानां विशेषो यः स्वभावोऽपीश्वरार्पितः ।
अन्योन्यनियमे तस्मादनवस्थित्यसम्भवौ ॥ २६९ ॥

अक्ष्यादित्यस्थः ईश्वर एव

ईश्वरश्चेन्नियन्ता स्यात्स एव प्रथमागतः ।
किमित्यपोद्यते तस्माद् वृथाऽवस्थितिकल्पना ॥ २७० ॥

दोषवत्येव तस्मात्सा नैव कार्या कथञ्चन ।

॥ इति अन्तराधिकरणम् ॥ ४ ॥

***

## ॥ अन्तर्याम्यधिकरणम् ॥

जगतः ईश्वराधीनसत्ताकत्वात् सर्वनियामकत्वेऽपि न रमणविरोधः

रमणं नातियत्नस्य विक्षेपादेव युज्यते ॥ २७१ ॥

इति चेत्सर्वनियमो यस्य कस्मान्न शक्यते ।
स्वात्मनाऽनियतं वस्तु प्रतीपं ह्यात्मनो भवेत्॥ २७२ ॥

स्वाधीनसत्ताशक्त्यादि कथमात्मप्रतीपकम् ।

॥ इति अन्तर्याम्यधिकरणम् ॥ ५ ॥

***

## ॥ अदृश्यत्वाधिकरणम् ॥

अदृश्यत्वादीनामभावत्वात् ब्रह्मणाऽभेदो न युज्यत इत्याक्षेपः

गुणक्रियादयो भावा यदि वा स्युरभेदिनः ॥ २७३ ॥
अभेदोऽभावधर्माणां ब्रह्मणा युज्यते कथम् ।

अदृश्यत्वादिशब्दैः दृश्याद्यन्योन्याभावाभिधानम्,
अन्योन्याभावस्य धर्मिस्वरूपत्वमिति परिहारः

नाभावो भाव इति च विशेषः प्रायशो भवेत् ॥ २७४ ॥

अतद्भावोऽन्यता चेति न विशेषोऽस्ति कश्चन ।
दोषाभावो गुण इति प्रसिद्धो लौकिकेष्वपि ॥ २७५ ॥

अदृश्यत्वादयो गुणाः

अदृश्यत्वादिकांस्तस्माद्गुणानाह स्वयं प्रभुः ।





भावाभावयोरैक्ये तयोर्विरोधाभाव इति शङ्कायाः परिहारः

भावाभावविरोधोऽपि न तु सर्वत्र विद्यते ॥ २७६ ॥

तदभावो हि तद्भावविरोधी न ततोऽपरः ।

पृथक्त्वान्योन्याभावस्वरूपभेदानामैक्यम्

पृथक्त्वाभावतद्रूपान्भेदांस्त्रीन्कल्पयन्ति चेत् ॥ २७७ ॥

कल्पनागौरवाद्यास्तु दोषास्तत्र विरोधिनः ।
पृथक्त्वान्यत्वभेदास्तु पर्यायेणैव लौकिकैः ॥ २७८ ॥

व्यवह्रियन्ते सततं वैदिकैरपि सर्वशः ।
दृष्टहानिरदृष्टस्य कल्पनेत्येव दूषणम् ॥ २७९ ॥

यदा तदधिको दोषो विद्यते को नु वादिनाम् ।
भावाभावस्वरूपास्तु विशेषा एव वस्तुनः ॥ २८० ॥

अभिन्ना एव संग्राह्या व्यवहारप्रसिद्धये ।

गुणक्रियादीनां द्रव्यस्य च अत्यन्तभेदवादिभिः
भेदाभेदवादिभिश्च विशेषोऽङ्गीकार्यः

यथैकः समवायोऽपि भेदाभेदौ च वस्तुनि ॥ २८१ ॥

अङ्गीकार्या विशेषेण स्थानेषु व्यवहर्तृभिः ।

अखण्डवादिनापि विशेषोऽङ्गीकार्यः

अखण्डवादिनोऽपि स्याद्विशेषोऽनिच्छतोऽप्यसौ ॥ २८२ ॥

व्यावृत्ते निर्विशेषे तु किं व्यावर्त्यबहुत्वतः ।

॥ इति अदृश्यत्वाधिकरणम् ॥ ६ ॥







## ॥ वैश्वानराधिकरणम् ॥

पादद्वयार्थोपसंहारः

बहुलिङ्गसमायुक्तैर्बहुभी रूढनामभिः ॥ २८३ ॥
प्रसिद्धैरन्यगत्वेन वाच्यः साक्षाज्जनार्दनः ।

वैश्वानराधिकरणतात्पर्यम्

वैश्वानरादयः शब्दा अपि तद्वाचिनस्ततः ॥ २८४ ॥

'शब्दादिभ्यः' इति सूत्रतात्पर्यम्, अग्न्यादिश्रुतिहोमाधिकरणत्वादिलिङ्गानि विष्णुपराण्येव

तानि लिङ्गानि ते शब्दा अपि तद्वा हि सर्वशः ।
बहुलाऽप्यज्ञरूढिस्तत्प्राज्ञरूढिं न बाध्यते ॥ २८५ ॥

॥ इति वैश्वानराधिकरणम् ॥ ७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्ब्रह्मसूत्रानुव्याख्याने प्रथमाध्यायस्य द्वितीयः पादः ॥

* * *

## ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

तत्र अन्यत्र च प्रसिद्धानां लिङ्गानां नाम्नां च समन्वयः

तत्रान्यत्रप्रसिद्धानां लिङ्गनाम्नां पुनर्हरिः ।
विशेषान्मुख्यतो वृत्तिं स्वस्मिन्नेवात्र वक्त्यजः॥ २८६ ॥

## ॥ द्युभ्वाद्यधिकरणम् ॥

'यस्मिन् द्यौः' इत्यादिश्रुतौ आत्मशब्दः विष्णावेव प्रसिद्धः

विष्णावेवात्मशब्दस्य रूढत्वान्न शिवादिकान्।
श्रुतिर्वक्ति

॥ इति द्युभ्वाद्यधिकरणम् ॥ १ ॥





## ।। भूमाधिकरणम् ।।

पूर्णसुखरूपत्वाभिधानात् भूमा विष्णुरेव

अखिलेशत्वाद्भूमा विष्णुः सुखाधिकः ।। २८७ ।।

।। इति भूमाधिकरणम् ।। २ ।।

***

## ।। अक्षराधिकरणम् ।।

'अस्थूलमनणु' इत्यादिविरुद्धधर्माणां ब्रह्मणि अविरोधेनैव सहावस्थानम्

अतो विरुद्धवद्भातमपि व्याख्याय तत्त्वतः ।
योजनीयं हरौ वाक्यं विरुद्धैर्लक्षणैर्युतम् ।। २८८ ।।

ब्रह्मैव तानि लिङ्गानि तदन्यत्र त्वसन्त्यपि ।
अविरोधेन गोविन्दे सन्त्यस्थूलादिकानि च ।। २८९ ।।

ब्रह्मणः न निस्स्वभावत्वम्

अन्यवस्तुस्वभावानां स्थौल्यादीनामपाकृतिम् ।
नारायणे श्रुतिर्वक्ति न तु तस्यास्वभावताम् ।। २९० ।।

सर्वधर्मा सर्वनामा सर्वकर्मा गुणाः श्रुताः ।
दोषाः श्रुताश्च नेत्याद्या प्रमाणं श्रुतिरत्र च ।। २९१।।

।। इति अक्षराधिकरणम् ।।

***

## ।। वामनाधिकरणम् ।।

एतत्पादाधिकरणविषयपूर्वपक्षसिद्धान्तन्यायसङ्ग्रहः

लिङ्गं साधारणं शब्दौ स्थानं लिङ्गमनुग्रहः ।
पुनः शब्दा लिङ्गशब्दौ विचार्या द्विस्थिता इह ।। २९२ ।।

बाहुल्यं लिङ्गशब्दानामनुक्तिश्च विरुद्धता।
अदृष्टिरन्वयाभावो विपरीतश्रुतिभ्रमः ॥ २९३ ॥

लिङ्गावकाशराहित्यभ्रमस्तादृग्द्वयं तथा।
बहुतादृक्त्वमुक्तस्य विरोधोऽर्थात्तथागतिः ॥ २९४ ॥

समस्तमेतदित्यत्र पूर्वपक्षेषु युक्तयः।
ता एव बलवत्यस्तु गत्यन्तरविवर्जिताः ॥ २९५ ॥

सिद्धान्तयुक्तयो ज्ञेया दृश्यन्ते ताश्च सर्वशः।

सूत्रेषु साक्षादुक्ताः सिद्धान्तन्यायाः

मुक्तोपसृप्यता प्राणादाधिक्यं सर्वतस्तथा ॥ २९६ ॥

वैलक्षण्यं स्वभावस्य प्रेक्षापूर्वक्रिया तथा।
अरस्य ण्यस्य चेशत्वं सूर्याद्यनुकृतिस्तथा ॥ २९७ ॥

वामनाख्या सर्वकम्पस्तच्छब्दानन्यसिद्धता।
अनामरूपता भेदस्योपजीव्यप्रमाणता ॥ २९८ ॥

सर्वैश्वर्यादिकाद्यास्ता वेदेशेन प्रदर्शिताः।

देवताधिकरणापशूद्राधिकरणयोः समन्वयसमर्थनार्थत्वाभावेऽपि देवादीनामधिकारसमर्थनार्थत्वेन त्रैवर्णिकव्यतिरिक्तानां तदभावसमर्थनार्थत्वेन च प्रसङ्गादुपन्यासः

अधिकारश्च तद्धानिः प्रसङ्गादेव चिन्तितौ ॥ २९९ ॥

॥ इति वामनाधिकरणम् ॥

## ॥ देवताधिकरणम् ॥

देवानामधिकारविषये जैमिनिबादरायणमतयोर्भिन्नविषयत्वेनाविरोधः

तत्फलाय विधिः सिद्धे चोपासाया निराकृतः।
यतो जैमिनिनाऽन्यार्थमसिद्धेऽर्थे विधिस्तथा ॥ ३०० ॥

विद्याधिराजस्य मतमविरोधस्तयोस्ततः।





देवानामुपासनाविधानोपपत्तिः

मोक्षे फलविशेषोऽस्ति न च सर्वं प्रकाशते ॥ ३०१ ॥

सर्वदा तेन देवानामपि युक्ता ह्युपासना ।

परमेश्वरव्यतिरिक्तानां न सर्वज्ञत्वम्

नित्यं वृद्धिक्षयापेतं विष्णोः पूर्णं तु वेदनम् ॥ ३०२ ॥

स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम् ।
अन्येषां क्रमशो ज्ञानं मितवस्तुगतं सदा ॥ ३०३ ॥

भगवान् बादरायणः अशेषविशेषज्ञः, जैमिनिस्तु सामान्यवेदी

इत्यादयो विशेषास्तु सदा विद्यापतेर्हृदि ।
जैमिन्याद्यास्तु सामान्यवेत्तृत्वात्तत्तथाऽवदन् ॥ ३०४ ॥

विद्येशमतमेतस्मान्नैव सद्भिर्विरुध्यते ।

॥ इति देवताधिकरणम् ॥ ८ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रानुव्याख्याने
प्रथमाध्यायस्य तृतीयः पादः ॥

***

## ॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

## ॥ आनुमानिकाधिकरणम् ॥

सर्वेश्वरत्वविरोधिदुःखिबद्धादिशब्दसमन्वयः

दुःखिबद्धावराद्यास्तु तदधीनत्वहेतुतः ॥ ३०५ ॥

शब्दा ब्रह्मणि वर्तन्ते राज्ञि यद्वत्पराजयः ।
स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् ॥ ३०६ ॥





स्वातन्त्र्यं तत्र मुख्यं स्यात् कुतो राज्ञि जयोऽन्यथा ॥
न हि भृत्यस्य विजयिशब्दस्तावत्प्रयुज्यते ॥ ३०७ ॥

यावद्राज्ञ्यन्यगत्वेऽपि स्वातन्त्र्याभासमात्रतः ।
भृत्यबन्धादिकं राज्ञि राज्ञो बन्धादियोग्यतः ॥ ३०८ ॥

कारणं संशयस्य स्यादिति नैव प्रयुज्यते ॥
अमङ्गलत्वाच्छब्दानां राज्ञो योगादमङ्गले ॥ ३०९ ॥

अप्रियत्वात्तु शब्दस्य स्यात्प्रयोगनिवर्तनम् ॥
गुणास्तु तादृशा यत्र प्रयुज्यन्तेऽखिला अपि ॥ ३१० ॥

पूज्येष्वेव विशेषेण स्वातन्त्र्यं मुख्यकारणम् ।
अतो दोषातिदूरत्वात्संशयस्याप्यसम्भवात् ॥ ३११ ॥

दोषाणां विष्णुगत्वस्य प्राज्ञबुद्धिव्यपेक्षया ।
स्वातन्त्र्यार्थमभिप्रेत्य दोषशब्दास्तु(श्च) विष्णवि ॥ ३१२ ॥

वासुदेवश्रुतिश्चाह नैव विष्णावमङ्गलम् ।
मङ्गलामङ्गलेऽन्यत्र ततो नामङ्गलं वदेत् ॥ ३१३ ॥

स्वातन्त्र्यापेक्षया विष्णौ दोषो नामङ्गलोक्तितः ।
बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचित् ॥ ३१४ ॥

एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः ।
नैव दोषा हरौ तद्गबुद्ध्योक्ता दोषकारिणः ॥ ३१५ ॥

तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचकाः ॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

***

## ॥ ज्योतिरुपक्रमाधिकरणम् ॥

कर्मतदङ्गेष्वेव प्रसिद्धानां ज्योतिष्टोमादिशब्दानां हरौ समन्वयः

जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः ॥ ३१६ ॥







आयजेतश्चायजेतः वसन्तिश्च वसंस्ततः ।
विगतच्छादनत्वाच्च गच्छ भूतक्षयंकरः ॥ ३१७ ॥

भुंक्ष्वेत्युक्तो हरिः हुं च हुतमस्मिन् जगद्यतः ।
स्फुटत्वात्फडिति प्रोक्तः, कव रक्षण इत्यतः ॥ ३१८ ॥

कवचं, वर्तते यस्मात् षड्गुणत्वेन सर्वदा ।
वषट्, तद्वत्वतस्तेषां वौषट् इत्येव कथ्यते ॥ ३१९ ॥

स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दनः ।
नमन्त्यस्मिन्गुणा यस्मान्नम इत्येव कथ्यते ॥ ३२० ॥

इत्यशेषक्रियानामशब्दैरेको जनार्दनः ।
उच्यते मुख्यतो यस्मात्पदवर्णस्वरात्मभिः ॥ ३२१ ॥

हरेरनन्तगुणत्वसिद्धिः अशेषक्रियानामशब्दसमन्वयस्य प्रयोजनम्

तस्मादनन्तगुणता श्रुतितात्पर्यतोऽस्य हि ।
विज्ञानार्थत्वतः सर्वशब्दानां नास्ति दूषणम् ॥ ३२२ ॥

कर्मणां ब्रह्मज्ञानार्थत्वेन वाक्यसमन्वयोऽपि सङ्गच्छते

अङ्गीकृतेऽपि नैवास्ति दोषो वाक्यसमन्वये ।
तदर्थत्वेन कर्मादेः संभवादल्पबुद्धये ॥ ३२३ ॥

चतुर्मुखब्रह्मा योगार्थं जानाति

'कश्छन्दसां योगमि'ति श्रुतेः योगार्थतत्त्ववित् ।
ब्रह्मैको नैव चान्योऽस्ति क इत्यस्योभयार्थतः ॥ ३२४ ॥

तस्यापि पूर्वसिद्धस्य ज्ञानमेवेति निश्चयात् ।
नित्ययोगोऽपि शब्दानामर्थैर्नैव निषिध्यते ॥ ३२५ ॥

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य प्रप्रथमटीका

श्रीपद्मनाभतीर्थविरचिता

# सन्न्यायरत्नावली

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

२५७ अर्थान्तरेषु निरूढानां लिङ्गबलात् समन्वयो निरूपितः पूर्वपादे । लिङ्गाभिधायकानां शब्दानां पौर्वापर्य-परामर्शेन अर्थान्तरपरत्वेन प्रतीयमानानां विष्णौ समन्वयो निरूप्यतेऽस्मिन्पादे । तत्र 'सर्वत्रप्रसिद्धोपदेशादि'ति प्रथमाधिकरणम् । एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त । 'एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिवी'त्यादिवाक्यमुदाहृत्य सर्वगतत्वं प्रतिपाद्यते । जगतो बहिरेव स्थित्वा तत्प्रवर्तयितुं शक्तोऽपि लीलया सर्वत्र स्थित्वा सर्वशक्त्युद्बोधक इति ज्ञापयितुं नाकाशस्येव सर्वत्रस्थितिमात्रमत्र सर्वगतत्वम् । तत्र चक्षुर्मयः श्रोत्रमय इत्यादिवाक्यशेषात् सर्वगतत्वेन प्रतिपाद्यत्वं जीवस्य आशङ्क्य 'स एवमेतं संवत्सरसमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसती'ति शंसनक्रियायां सर्वगतत्वेन प्रतिपादितस्य परमात्मनः कर्मत्वेन व्यपदेशात् । एकस्यां क्रियायामेकस्य कर्तृकर्मभावविरोधात् । न जीवोऽत्र प्रतिपाद्यत इत्युक्तम् । 'कर्मकर्तृव्यपदेशाच्चे'ति सूत्रकारेणैव हि तत्र हि भिन्नाश्रयत्वमौत्सर्गिकं ज्ञातव्यं कर्मकर्तृभावस्य । क्वचिदेकस्यापि हि कर्मकर्तृभावश्च श्रुतः । 'तदात्मानमेवावेदहं ब्रह्मास्मी'त्यादौ सर्वदर्शनसर्वश्रवणादिसामर्थ्याभिप्रायेण चक्षुर्मय-श्रोत्रमयादिशब्दानां वाक्यशेषगतानां परमात्मन्युपपद्यमानत्वेन निरपवादोऽत्र कर्मकर्तृभावो भेदमेव जीवपरमा-त्मनोरापादयति । तदेतदाह **लिङ्गात्मकानामित्यादिना** ।

यदत्र प्रतिपादितं सर्वगतत्वं विष्णोस्तत्सर्वत्र स्थितिलक्षणं लिङ्गम् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वाऽत्तीत्यादिवाक्यमुदाहृत्य यत्सर्वादनं विष्णोः प्रतिपादितम् । 'अत्ता चराचरग्रहणादि'त्यत्र तत्क्रियालिङ्गम् । 'ऋतं पिबन्तौ सुकृतस्य लोके', 'गुहां प्रविष्टावि'त्यादिवाक्यमुदाहृत्य यच्छुभपानं विष्णोः प्रतिपादितम् । 'गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि'त्यत्र तच्च क्रियालिङ्गम् । 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत', 'एष आत्मेति होवाचे'-

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम् ।





त्यादिवाक्यमुदाहृत्य यच्चक्षुराद्यन्तःस्थित्युपेतं रमणं विष्णोः प्रतिपादितम् । 'अन्तरउपपत्तेरि'त्यत्र तत्क्रियाया भावलिङ्गम् । 'यः पृथिवीमन्तरो यमयती'त्यादिवाक्यमुदाहृत्य यत् पृथिव्याद्यन्तःस्थित्युपेतनियमनं विष्णोः प्रतिपादितम् । 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादि'त्यत्र तच्च क्रियाभावलिङ्गम् । 'यत्तदद्रेश्यमग्राह्यमि'ति वाक्यमुदाहृत्य यो दृश्यादिशब्दवाच्यवस्त्वन्तरान्योन्याभावो, विष्णोः प्रतिपादितः, अदृश्यत्वादिगुणको धर्मोक्ते-रि'त्यत्र सोऽभावलिङ्गशब्दवाच्यः । 'वैश्वानरः साधारणशब्दविशेषादि'त्यत्र 'आत्मानं वैश्वानरमुपास्ते', 'येनेदमन्नं पच्यत' इत्यादिवाक्यमुदाहृत्य पचनादिबहुलिङ्गसहितवैश्वानरशब्दो विष्णोः प्रतिपादितः ।

२६० तदेतदाह **एतद्धावेत्यादिना**।

२६२ लिङ्गानामसाधारण्ये धर्मो धर्म्यभिन्नोऽभिप्रेतः । तत्र तावत्सर्वादनादिक्रियाणां भगवदभिन्नत्वमाक्षिप्य समाधत्ते **अनित्यत्वादित्यादिना** । अदनपानादिक्रियाणां शक्तिरूपेण सर्वदाऽवस्थानान्नित्यता । क्रियातच्छक्ति-रूपयोर्भगवता सह परस्परं चाभेदेऽपि विशेषबलादेव व्यवहारभेदः सिद्ध्यति ।

२६३ शक्तिरूपता नाम क्रियाया अव्यक्ततोच्यते । क्रियातच्छक्त्यादेर्भगवताऽभिन्नत्वं नित्यत्वं च 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति ज्ञानस्येव स्वाभाविकत्वश्रवणात्सिद्ध्यति।

२६४ भगवतः क्रियानित्यत्वं 'ज्ञानं नित्यं क्रिया नित्ये'त्यादिपैङ्गिश्रुत्या च सिद्धम् ।

२६५ अतः क्रियादीनां भगवत्स्वरूपत्वमविरुद्धम् । जीवादौ तु क्रियादेर्नित्यत्वमनित्यत्वं च ज्ञातव्यम् । शक्त्यनाशानाशाभ्यां यतो यावच्छ्रवणादिशक्तिर्न नश्यति तावच्छ्रवणक्रियास्थायिनी जीवस्य कदाचिदावि-र्भवति कदाचित्तिरोभवत्येकैव । तत्र व्यक्तिभेदः कल्पनागौरवान्नाङ्गीकृतः । यदा ह्यत्यन्तबाधिर्यमेव (?) भवति तदा श्रवणक्रिया विनष्टेत्यनुभूयते । एतत्सत्तत्वसंमत्योपपादयति । **शक्तिसद्भाव इति** ।

२६७ ऋतं पिबन्ताविति द्विवचनविषयत्वं द्विरूपत्वेन विष्णोरेकस्य युज्यन्ते । यः सेतुरीजानानामिति वाक्य-शेषे य इत्येकवचनेन परामर्शात् । अतो यदन्यैरुक्तमुपपादनं जीवधर्मैश्छत्रिन्यायेन जीवपरयोरुपचर्यत इति तन्निरस्तं भवति । परमात्मसमन्वयप्रक्रमविरोधात् ।

२६७ **अन्तःस्थित्वा रमणकृत्** सूत्रगतान्तरशब्देन निर्दिश्यते । योगवृत्त्या तथाविधस्य तत्रोदाहृतवाक्ये हि स्वस्यादेयमानन्दमत्यनुभवतीत्यात्मशब्दार्थस्य प्रतिभानात् ।

२६८ 'स विष्णुरेव कं ब्रह्म खं ब्रह्मे'ति तस्यैव सुखविशिष्टस्य प्रकृतत्वात् । 'एतदमृतमेतदभयमेतद्ब्रह्मे'ति वाक्यशेषात् । 'अथ हैनं गार्हपत्योऽनुशशास', 'य एष आदित्ये पुरुषो दृश्यते', 'सोऽहमस्मी'ति गार्हपत्यस्या-प्यादित्यान्तर्यामितया प्रकृतत्वादक्ष्यादित्ययोरैक्यात् स एवाक्षिस्थः पुरुषः किं न स्यादित्याशङ्क्य यत्परिहार-





त्वेनोक्तं भगवता सूत्रकारेण 'अनवस्थितेरसम्भवाच्च नेतर' इति तद्विवृणोति **अन्योन्येति** । अग्नेरादित्यादेश्च नियम्यनियामकभावः परमेश्वराज्ञाकृतोऽभ्युपगन्तव्यः पूर्वपक्षिणाऽपि । यथा देशाधिकृतपुरुषस्य प्रजानां च नियम्यनियामकभावो राजाज्ञाकृतो जीवानां सुरनरादिरूपाणां नियम्यनियामकभावस्य स्वाभाविकत्वेन अकृत्रिमस्यापि भगवदधीनत्वमस्त्येव । यदि चेश्वराज्ञानिरपेक्षत्वेन गार्हपत्यादिजीवो जीवान्तरनियामको भवेत् तर्हि तस्यापि जीवत्वादन्यो नियामकः तत्र अस्याप्यन्य इत्यनवस्थानात् उभयोर्जीवत्वसाम्येन नियम्यनियामकभावासम्भवश्च स्यात् ।

२७० यद्यनवस्थापरिहारार्थं कस्यचिज्जीवस्य परेशो नियामक इत्यभ्युपगम्यते तर्हि स एव भगवानग्न्यादिषु मुख्यनियामकतया श्रुतिप्रतीतितः स्वीकार्यः । परित्यागे कारणाभावात् । यद्यक्ष्यादिनियामकत्वमग्न्यादेरेतन्नियामकत्वमेव हरिरिति कल्पनं तन्निष्प्रमाणकं व्यर्थं च ।

२७१ सर्वाणि भूतानि 'योऽन्तरो यमयती'त्यादिश्रुतिविरुद्धं च । 'यत्त्वग्निवचनं सोऽहमस्मी'ति तत्स्वान्तर्याम्यभिप्रायेणोपपन्नम् । लोके बहुव्यापारवतः क्लेशदर्शनात् । सर्वनियामकादिव्यापारवतो भगवतश्चित्तविक्षेपसम्भवात् । कथं रमणकृत्त्वं युज्यत इत्याशङ्क्य परिहरति **रमणमिति** ।

न हीच्छामात्रनियमितप्रपञ्चस्य हरेः प्राकृतपुरुषदृष्टान्तात् चित्तादिविक्षेपेणाररतिरापादयितुं शक्यते । यस्य यच्छक्त्यनियमितं तदेव तस्य चित्तादिविक्षेपकं दृष्टम् । तस्मादानन्दानुभवितृत्वेन श्रूयमाणः सर्वनियामकोऽक्षिस्थपुरुषो दिव्यदृग्गोचरो विष्णुरेवेति सिद्धम् । अनेनान्तर्याम्यधिकरणतात्पर्यमप्युक्तं ज्ञेयम् ।

२७३ इदानीमभावलिङ्गानामीश्वराभेदमाक्षिप्य समर्थयति **गुणक्रियेत्यादिना** । गुणक्रियेत्यादीनां विधिमुखेन प्रतीयमानानामभेदो युज्यतां नाम ब्रह्मणा । अदृश्यत्वादीनां तु निषेधमुखेन प्रतीयमानानां कथमभेदो युक्तः स्यात् । निषेधमुखवेद्यस्य भावात्मकत्वविरोधादिति । मैवम् । न हि सर्वस्य निषेधमुखवेद्यस्याभावत्वमेवेति नियमः । तस्मादिदमन्यदित्यनुभूतस्यान्यत्वस्य भावरूपस्यापि तदिदं न भवतीति निषेधमुखवेद्यतादर्शनात् । न चान्यः स्वस्यावधिनिरूप्यत्वेन नञर्थत्वाभाव इति वाच्यम् । अवधिनिरूप्यस्यापि नञर्थत्वदर्शनात् । ब्राह्मणादन्यविवक्षया अब्राह्मण इति प्रयोगो निषेधमुखवेद्यस्य गुणत्वं च युक्तम् । अरोगत्वादीनां पुरुषगुणत्वप्रसिद्धेः । अत एवोक्तं भगवता । 'अदृश्यत्वादिगुणको धर्मोक्तेरि'त्यदृश्यत्वादीनां भगवद्गुणत्वम् । अतस्तस्यैव तन्निषेधमुखवेद्यत्वं विरुद्धम् ।

२७७ यथा घटो न घट इति विरुद्धं न पुनर्घटो न पट इति । यत्तु पृथक्त्वं नाम गुणोऽन्यः अन्योन्याभावोऽन्यः पदार्थानां स्वरूपलक्षणो भेदोऽन्य इति वदन्ति तान्प्रत्याह **पृथक्त्वेति** ।

न हीदमस्मात्पृथक् इदं न भवतीति विषयभेदेन पृथग्व्यवहारो दृष्टः । तस्मादशुक्लो न भवतीति व्यवहारात् । गुणक्रियादेरिवाभावधर्माणां धर्म्यभेदः सविशेषो युक्तः । यथैकः समवाय इति समवायैकत्वयोरभेदेऽपि विशेषः ।





यथा च धर्मधर्मिणोर्भेदाभेदाविति भेदाभेदयोर्धर्म्यभेदेऽपि विशेषोऽभ्युपगन्तव्यः समवायवादिना भेदाभेदवादिना च । अन्यथा शब्दपौनरुक्त्यादिकं स्यात् । अतः प्राक् समवायादिकल्पनाद्धर्मधर्मिणोः सविशेषाभेदाङ्गीकारः साधीयान् । कल्पनालाघवात् । निर्विशेषपक्षस्त्वत्यन्तमयुक्तः । विचारासहत्वात् । तथा हि । किं सत्यपदेन असत्यव्यावृत्ततया यावदुक्तं ब्रह्मज्ञानादिव्यावृत्तया तावदेवोच्यते । ततोऽतिशयितं वा । आद्ये पक्षे सत्यस्वरूपेणैव ब्रह्मस्वरूपस्यावगतत्वात् । तस्यैव जिज्ञासितत्वाच्च । ज्ञानादिपदवैयर्थ्यं स्यात् । द्वितीये निर्विशेषत्वभङ्गः स्याद्ब्रह्मणः । अतः सिद्धमदृश्यत्वादिगुणकत्वं विष्णोः ।

२८३ इदानीं क्रमप्राप्तत्वाद्वैश्वानराधिकरणतात्पर्यमाह **बहुलिङ्गेत्यादिना** । यस्तु 'एतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इत्यत्र आत्मशब्दसामानाधिकरण्याद्वैश्वानरशब्दस्य विष्णुरेवार्थः । विगतमानत्वलिङ्गाच्च । को न आत्मा किं ब्रह्मेति तस्यैव जिज्ञास्यत्वेनारम्भात् । न च 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयस्तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमि'त्यादिवाक्यशेषेऽग्निलिङ्गश्रवणात् प्रसिद्धाग्निरेवोच्यत इति वाच्यम् । 'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः । तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखमि'ति नारदीयवचनादाहवनीयादिशब्दानां भगवदङ्गविषयतयोपपन्नत्वात् । किञ्च 'मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मे'त्यादिना हि पुरुषसूक्तोक्तस्य विष्णोः प्रत्यभिज्ञानात् ।

२८४ तस्माद्वैश्वानरशब्दस्याविद्वद्रूढ्यग्निविषयस्यापि बलीयस्याविद्वद्रूढ्या विश्वनराश्रयत्वयोगेन च विष्णुविषयत्वमेव युक्तम् । एतेनैव न्यायेन शाखान्तरेष्वर्थान्तरविषयत्वेन प्रसिद्धैर्बहुलिङ्गसमायुक्तबहुरूढनामभिर्नारायण एवोच्यत इति सिद्ध्यति । प्रायिकत्वेन हि पादाध्यायसमन्विनार्थव्यवस्था । अतो हि लिङ्गात्मकशब्दसमन्वयपादे रूढनामसमन्वयाभिधानं ब्रह्मणि युक्तम् ।

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रानुव्याख्यायां सन्न्यायरत्नावल्यां श्रीमत्पद्मनाभतीर्थभट्टारकविरचितायां प्रथमाध्यायस्य द्वितीयः पादः ॥ १-२ ॥**

* * *

## ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

२८६ हरौ तदितरत्र चापाततः प्रतीयमानानां द्युभ्वाद्यायतनत्वादिलिङ्गानां भूमादिशब्दानां च हरावेव मुख्यवर्तनमस्मिन्पादे निधीयत इत्याह **तत्रेति** ।

२८७ एतदेव दर्शयति **विष्णावित्यादिना** ।





२८७ आथर्वणोपनिषदि श्रूयते । 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमि'ति । तत्र तावत् द्युभ्वायतनत्वेनोच्यमानः शिवो भवितुमर्हति । 'कर्तारमीशं पुरुषं ब्रह्मयोनिमि'ति वाक्यशेषात् । 'प्राणानां ग्रन्थिरसि', 'रुद्रो मा विशान्तकः', 'प्राणेश्वरः कृत्तिवासा' इत्यादिश्रुत्यन्तराच्च । अथवा जीवस्य द्युभ्वाद्यायतनत्वेनोच्यमानत्वम् । तस्यापि वाक्यशेषे 'स एषोऽन्तश्चरते बहुधा जायमान' इति प्रतिभासात् । अभिधीयते विष्णुरेव द्युभ्वाद्याश्रयः । 'तमेवैकं जानथ आत्मानमि'त्यात्मशब्दात् तस्य च विष्णोरेव मुख्यत्वोक्तेः । 'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् । न सम्भवन्ति यस्मात्तैर्नैवाप्ता गुणपूर्णते'ति ब्रह्मवैवर्ते । 'अमृतस्यैष सेतुरि'ति वाक्यशेषश्च विष्णावेव युज्यते । स हि मुक्ताश्रयः । 'पूतात्मा परमात्मा च मुक्तानां परमा गतिरि'ति भारतवचनाच्च । 'वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः । एक एवेश्वरस्तस्य भगवान्विष्णुरव्यय' इति भागवत-वचनाच्च । यदुक्तं 'वाक्यशेषादावीशादिशब्दाच्छिवो द्युभ्वाद्याश्रय' इति । तन्न । ईशादिशब्दानां विष्णावेव मुख्य-तयोपपादितत्वात् । 'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । ईशानादेव चेशानो महादेवो महत्त्वत' इत्यादिना ब्रह्माण्डे । यदुक्तं 'जीवलिङ्गं बहुधा जायमान' इति तद्विष्णोरुपपद्यते । 'अजायमानो बहुधा विजायत' इति श्रुतेः । यद्यत्र द्युभ्वाद्याश्रयो जीवः स्यात्तर्हि ततो भेदेन जीवनिर्देशो न स्यात् । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इति वाक्यशेषे । तस्मात् द्युभ्वाद्याश्रयो विष्णुरेव ।

२८७ इदमाम्नायते । 'यो वै भूमा तत्सुखं नाल्पे सुखमस्तीति स भूमा प्राणो भवितुमर्हति । प्राणो वा आशाया भूयानि'त्याद्युपक्रमेऽथ यद्यपि 'एनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषद्दहेन्नैवैनं ब्रूयुः पितृहा-ऽसीति न मातृहाऽसी'ति तल्लिङ्गश्रवणात् । अत्रोच्यते । 'विष्णुरेव भूमा । तत्सुखमि'ति सुखात्मकत्वोपदेशात् । सुखं च मुख्यं हरेरेव प्रसिद्धम् । एष ह्येव परमानन्द' इत्यादौ । किञ्च 'स एवाधस्तात्स उपरिष्टादि'त्यादि-वाक्यशेषे सर्वगतत्वादिव्यपदेशो विष्णावेव युक्तः । यदुक्तं प्राणलिङ्गत्वेनोत्क्रमणं तद्विष्णावप्युपपद्यते । 'तमु-त्क्रामन्तं प्राणोऽनूत्क्रामती'ति श्रुतेः । तस्माद्वाङ्नाम्नो भूयसीति आरभ्यैकैकस्मादेकैकमुत्तममुक्त्वा सर्वोत्तमत्वेन उपदेशाद्विष्णुरेव भूमा ।

२८८ इदानीं 'अक्षरमम्बरान्तधृतेरि'त्यत्र यदुदाहरणवाक्यात् 'तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमि'त्यादि तद्धरौ घटयति **अत इत्यादिना** ।

२८९ 'भगवतोऽवयवबहुत्वस्वकृतजडादिरूपवस्त्वन्तरगतस्थूलत्वादिराहित्यादिविषयैवास्थूलमि'त्यादिश्रुतिः । न तु स्थूलत्वादिधर्ममात्राभावविषयाव्यवहारात् । सर्वधर्मा । 'अणोरणीयान्महतो महीयानि'त्यादिश्रुतिविरोधाच्च । युगपदेवावस्थानमणुत्वमहत्वयोर्विष्णौ युज्यते । 'यस्मिन्विरुद्धगतयोऽप्यनिशं पतन्ति । त्वत्पादयोर्विविधशक्तय आनुपूर्व्यादि'ति वचनात् । दृष्टश्चैवंविधः प्रभावो यशोदया गोविन्दे । तथा हि भागवतवचनम् । 'पीतप्रायस्य जननीसुतस्य रुचिरस्मितम् । मुखं लालयती राजन् जृम्भतो ददृशे इदम् । खं रोदसी' इत्यादि । एकत्र युगपदणुत्वमहत्वविरोधस्तु प्राकृतत्वोपाधिकृतः । अतो भगवति नाशङ्कनीयः । पदार्थानां विचित्रस्वभावत्वाच्च ।





२९२ इदानीं द्युभ्वाद्यायतनमित्यारभ्यापादपरिसमाप्तेः प्रत्यधिकरणं विषयपूर्वपक्षसिद्धान्तयुक्तिजातं दर्शयति **लिङ्गमित्यादिना**।

२९९ नन्वस्मिन्पादे द्विधा सन्दिह्यमानानां लिङ्गनाम्नां हरावेव समन्वयोऽभिधेयः। तं परित्यज्य कथं 'तदुपर्यपि बादरायणः सम्भवादि'त्यादिसूत्रसन्दर्भेण देवानां ब्रह्मविद्याधिकारस्तदभावश्च शूद्रस्य विचार्यत इत्यत आह **अधिकार इति**। यतो मनुष्यानधिकरोति शास्त्रं अतः 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती'ति कठवल्लीषु पठ्यमाना श्रुतिः सर्वगतस्यापि परमात्मनो मनुष्यहृदयापेक्षयाऽङ्गुष्ठमात्रत्वं श्रावयतीत्युक्तम्। 'हृद्यपेक्षया तु मनुष्याधिकारत्वादि'ति गताधिकरणेनैव तावता मनुष्याणामेव ब्रह्मविद्याधिकारः। किं तर्हि देवानामप्यस्ति। अर्थित्वसामर्थ्याद्विद्वत्तासम्भवात्। 'मध्ये वामनमासीनं विश्वे देवा उपासत' इति श्रुतेश्च।

३०० कर्मण्यप्यधिकारिणो देवाः। 'यज्ञेन यज्ञमयजन्त देवा' इति इन्द्रादिभिर्यज्ञशब्दवाच्यविष्णुयष्टृत्वश्रुतेः। न च रुद्रादीनामिव वैदिकानुष्ठाननिषेधोऽस्ति देवानाम्। असावादित्यो देवमधु स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यतीत्यादौ मधुविद्याया वस्वादिपदं फलत्वेन श्रूयते। तत्र लब्धवस्वादिपदानामनधिकार इति न वाच्यम्। मोक्षे सुखातिशयार्थं तत्राप्यधिकारसम्भवात्। यावत्सेवापरे तत्त्वे तावत्सुखविशेषतेति स्कान्दवचनात्। न च सर्वज्ञत्वेनावगतपरमात्मतत्त्वानां देवानां 'स म आत्मेति विद्यादि'-त्यादिविधिवैयर्थ्यम्। सामस्त्येन भगवत्तत्त्वावबोधे प्रमाणाभावात्। अवगतभगवदंशेऽपि कदाचिद्विस्मरणसम्भवात्। 'सहैव सन्तं न विजानन्ति देवा' इति श्रुतेः। अतो देवानामप्यनवगतभगवदंशाभिप्रायेण 'आत्मानमेव लोकमुपासीते'त्याद्युपासनाविधिसम्भवः। तदेतदाह **तत्फलायेत्यादिना**।

'एतेन मध्वादिष्वसम्भवादनधिकारं जैमिनिः', 'भावं तु बादरायणोऽस्ति ही'ति सूत्रतात्पर्यं विवृतं भवति। 'यस्माद्विष्णोरेव परिपूर्णज्ञानं ब्रह्माणमारभ्य अन्यदेवानां तु क्रमेण भ्रंशितं ज्ञानमतो युक्तं तेषां भगवच्छ्रवणमननादिकम्। अतः पुरुषेषु ज्ञानतारतम्याद्वेदव्यासजैमिनिमतयोस्तारतम्यव्यवस्थायोगोऽविरोधश्च।

**॥ श्रीमदानन्दतीर्थभगवत्पादविरचित श्रीमद्ब्रह्मसूत्रानुव्याख्यानटीकायां सन्न्यायरत्नावल्यां श्रीपद्मनाभतीर्थभट्टारकविरचितायां प्रथमाध्यायस्य तृतीयः पादः ॥ १-३ ॥**

***

## ॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

३०५ 'तत्तु समन्वयादि'ति सकलवेदगतवाक्यपदवर्णसमन्वयः प्रतिज्ञातो ब्रह्मणि। तत्र जगत्कर्तृत्वादिकल्याणगुणविषयवाक्यानामन्यपरत्वं प्रतिषिध्य विष्णुपरत्वं प्रतिपादितमतीतपादैः। पदवर्णादीनां भगवद्विषयत्वायोग्यानामस्मिन्पादे विष्णुपरत्वं प्रदर्श्यते। तत्र तावद्दुःखिबद्धादिशब्दानां ब्रह्मपरत्वं प्रदर्शयति **दुःखीत्यादिना**।





३०७ यथा भृत्यादीनां राजाधीनत्वात् तेषु पराजितेषु राजा पराजित इत्युच्यते । एवं जीवानां विष्णवधीनत्वात् तेषु दुःखितेषु बद्धेषु च विष्णुर्दुःखी बद्ध इत्युच्यते । एतदेव विवृणोति **स्वातन्त्र्यमिति** ।

दुःखित्वादिधर्मापादकत्वं दुःखित्वादिधर्माधिकरणत्वं च दुःख्यादिशब्दप्रवृत्तिनिमित्तम् । तत्र दुःखित्वादिधर्मापादकत्वेन दुःख्यादिशब्दवाच्यत्वं विष्णोर्युज्यते । तदुक्तं वैष्णवश्रुतौ । 'स बद्धः स दुःखी स बन्धयति स दुःखयतीति स जीवः स प्रकृतिः स जीवयतीति स प्रकरोतीति सोऽवरः सोऽनित्यः सोऽवरयतीति सोऽनित्ययती'ति । यथा जगदीशापेक्षयाऽल्पस्वामित्वेनापि राजा जयीत्युच्यते, भृत्येषु जयत्स्वपि स च जायशब्दो राज्ञ्येव मुख्यो बहुशः प्रयुक्तत्वात् । भृत्ये तु न बहुशः प्रयुज्यते । एवं बद्धादिशब्दाश्च विष्णावेव मुख्याः सुतरां परमस्वामिनि ।

३०८ ननु यथा भृत्यजयेन राजा जयीत्युच्यते एवं भृत्यमरणादिना राजा बद्धो मृत इत्यादि किमिति न प्रयुज्यत इत्यत आह **भृत्येति** ।

३१० किञ्च प्रयोगे सति निमित्तानुसरणं न तु निमित्तमस्तीति प्रयोगः । न हि सिंहगुणयोगात्सिंहशब्दे देवदत्ते प्रयुक्त इत्येतावता वृकेऽपि प्रयुज्यतामित्यापादनं सम्भवति । राज्ञीव विष्णावपि बद्धादिशब्दप्रयोगाभावः किं न स्यादित्यत आह **गुणा इत्यादिना** ।

न हि बद्धादिशब्दप्रयोगादपि बन्धादिशङ्का स्यात् विष्णौ 'निर्दुःखो निरनिष्टो निरवद्य' इत्यादिश्रुतेः । यथा ब्रह्मशीशब्दो लोके निन्दितविषयोऽपि सर्वान्तरि विष्णौ गुणवाचकः । एवं बन्धादिनियामके तस्मिन्नेव बद्धादिशब्दो मङ्गलात्मकः । 'कार्यकारणबद्धौ ताविष्येते विश्वतेजसावि'त्यादौ श्रुतः ।

३१६ इदानीं कर्मतदङ्गवाचकत्वेन प्रसिद्धानां 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादिवाक्यगतपदानां विष्णौ प्रवृत्तिं दर्शयति **जातमित्यादिना** । 'षकारः प्राण आत्मे'ति श्रुतेः षकारनामा हरिः । आसमन्ताद्युक्तेन इतः प्राप्तः ।

३१७ यजेतक्रियापदस्यापि कारकपदत्वं दृष्टं पचतेऽधीतमित्यादौ ।

३१९ विशिष्टत्वाद्विष्णुर्विश्वस्मिन् ज्ञानशक्तिबलैश्वर्यतेजोलक्षणषट्कवाचि वौषडिति ।

३२० स्वीयमाहरतीति स्वाहा हरिः । ज्योतिःसमूहस्य स्वामिन् ज्योतिष्टोमेन । इत्थं सहस्रनामवत्प्रतिपदं विष्णुवाचकत्वमवगन्तव्यम् ।

३२२ एवमनेककर्मतदङ्गवाचकत्वेन प्रसिद्धपदैश्चापुनरुक्तगुणवाचकैरुच्यमानत्वादनन्तगुणत्वं विष्णोः श्रुतिसिद्धम् । उक्तबलाज्ज्योतिष्टोमादिशब्दा मुकुन्दस्य गुणानेव ज्ञापयन्ति । न तु पुनः प्रसिद्धयागादिरूपजडानित्यवस्तुस्वरूपत्वम् । न हि शाखिशब्दाभिधेयत्वमात्रेण पनसस्यापि पिचुमन्दत्वं भवति ।





३२३ इदानीं प्रतिपदं सम्यक् समन्वयमवगन्तुमसमर्थानल्पाधिकारिणो वेदगतवाक्यसमन्वयमाह **अङ्गीकृते-ऽपीति** । **वाक्यसमन्वय इति** । कर्मादिरन्तःकरणशुद्धिद्वारा परमात्मज्ञानं साधयितुं शक्यम् । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने'त्यादिश्रुतेः । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति स्मृतेश्च ।

३२४ ननु सर्ववेदानां प्रतिपदं हरौ समन्वयो निरधिकारित्वेनासम्भावित इत्यत आह **कश्छन्दसामिति** । 'कश्छन्दसां योगमावेद धीर' इति श्रुतेरयमर्थः । छन्दसां वेदानां प्रतिपदं भगवति योगवृत्तिं आ समन्ताद्ब्रह्मा वेद ततोऽन्यः को वेद तद्वदन्तु न कोऽपीति । अत एवान्येषामीषदधिकारोऽस्ति प्रतिपदसमन्वये ।

३२५ ननु सकलपदपदार्थतत्सम्बन्धं ब्रह्मैव जानातीति चेत् । एकस्य प्रतिभानं तु कृतकान्न विशिष्यत इत्यत आह **तस्यापीति** ।

ब्रह्माऽपि पूर्वमहाकल्पसिद्धमेव शब्दार्थसम्बन्धं सुप्तप्रतिबुद्धन्यायेन भगवद्दत्तया दृष्ट्या जगदादौ पश्यति । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति श्रुतेः । 'तेने ब्रह्म हृदाय आदिकवय' इति स्मृतेश्च । ब्रह्मदृष्टवेदानामेकदेशेषु क्वचिद्विद्वद्वामदेवादिदिव्यदर्शनसंवादश्च प्रतीयते । 'तद्धैतत्पश्यन् ऋषि-र्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे'त्यादिषु यथा मनुष्यादिज्ञानातिशयितज्ञानम् ऋष्यादिषु प्रतीयते तथा ब्रह्मणोऽपि युक्तमेव । अत एव युक्तं तस्य पूर्वमहाकल्पसिद्धसकलपदपदार्थसम्बन्धज्ञानं जातिस्मृतिवत् । शब्दा-स्तावन्नित्या न प्रत्युच्चारणमुत्पद्यन्ते । एष एवायं गोशब्द इत्यभिज्ञाविरोधात् । उच्चारणविशेषाच्छब्दविशेषा-भिव्यक्तिः । अर्थाश्च कूटस्थतया नित्याः । केचिज्जगत्सृष्टिप्रलयाभ्युपगमेऽपि प्रवाहरूपेण नित्यम् । वसन्तादि-ऋतुलिङ्गवत् । तथा हि श्रुतिः । 'नित्यो नित्यानां चेतनश्चेतनानाम्', 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदि'-त्यादिका । अतःशब्दार्थसम्बन्धो निन्यो भवितुमर्हति । तथा च स्मृतिः । 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर' इति । जैमिनिरप्याह 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इति । केनचित्सङ्केतितत्वे शब्दानां तथाविधा प्रसिद्धिः स्यात् । षडित्यादिशब्दवत् । अतः शब्दानामर्थावबोधशक्तिः स्वाभाविकी । यथेन्द्रियाणाम् । अतो युक्तमुक्तं 'नित्य-योगोऽपि शब्दानामर्थैर्नैव निषिध्यत' इति ।

॥ इति ज्योतिरुपक्रमाधिकरणम् ॥





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका

## श्रीत्रिविक्रमपण्डिताचार्यविरचिता

# नयचन्द्रिका

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

२५७* पादसङ्गतिं दर्शयति **लिङ्गात्मकानामिति**। ज्ञापयितुं विचार्यत इत्यर्थः।

२५९ कथं विशेषेणापि कर्मकर्तृत्वसम्भवे आत्मानं परस्मै शंसतीत्यादिकर्मकर्तृत्वव्यपदेशो भेदस्य साधक इत्यत आह **कर्मेति**।

२६० अहं मां जानामीत्यादौ भेदस्याभावेनापोदितत्वाद्विशेषे सत्यभेदः स्यात्। औत्सर्गिकभेदोऽप्यनपोदितो बली।

२६० अधिकरणविषयान् विशिनष्टि **हीति**। 'एतस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवती'त्यादिश्रुतिमुदाहृत्य 'सर्वत्र प्रसिद्धोपदेशादि'त्यत्रोक्तं सर्वत्र स्थितिरूपं भावाभिधं लिङ्गम्। 'स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्ती'ति तददितेरदितित्वमित्युदाहृत्य 'अत्ता चराचरग्रहणादि'त्यत्रोक्तम् अत्तृत्वात्मकम्। 'ऋतं पिबन्तौ सुकृतस्य लोके 'गुहां प्रविष्टौ परमे परार्ध' इत्युदाहृत्य गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि'त्यत्रोक्तं पातृत्वं च क्रियायोगे। 'य एष पुरुषोऽन्तरक्षिणि दृश्यत' इत्युदाहृत्य 'अन्तरि'ति सूत्रोक्तमन्तःस्थित्योपेतं रमणं क्रियाभावाख्यं लिङ्गम्। 'एष त आत्माऽन्तर्याम्यमृत' इत्युदाहृत्य 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इत्युक्तमन्तःस्थितिसहितं यमनं च क्रियाभावाख्यलिङ्गम्। यत्तदद्रेश्यमित्युदाहृत्य 'वैश्वानरस्साधारणशब्दविशेषादि'ति श्रुतिर्निमित्यर्थः। एतेन नाम-समन्वयेऽपि लिङ्गसमन्वयसिद्धिरस्तीति दर्शयितुं लिङ्गाधिकेत्युक्तम्। ब्रह्मलिङ्गेत्यर्थः ॥ १ ॥

२६३ सविशेषो क्रियात्मकविशेषोऽपि कथं क्रियाख्यविशेषे स्वरूपद्वयाङ्गीकारात्। भेदप्राप्तेरपि नाशित्वमित्यत आह **शक्तितेति**। क्रियाशक्तिता व्यक्तिता चेत्युभयरूपो विशेषः परमेश्वरेण चाभिन्नोऽपि तस्मात्परस्परविशेषवान् व्यवह्रियते। 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतिः।

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम्।





२६५ क्रियाज्ञानादिनियतेत्याद्युक्तेः सद्भावस्तत्रैव तदन्यत्रैव त्वनित्यता । यथा भीष्मस्य ब्रह्मवेशाद्दृश्यमाना सर्वक्रिया पुनर्द्युभावे तच्छक्त्यभावादनित्या ॥ २ ॥

२६६ 'ऋतं पिबन्तावि'ति **द्वित्वं च** विशेषादेवोक्तन्यायेन **युज्यते** । 'विशेषणाच्चे'ति सूत्रं व्याख्याति । 'यः सेतुरीजानानामक्षरं ब्रह्म यत्परमि'ति विशेषणात् ॥ ३ ॥

२६७ उत्तरंवाक्यम् 'अन्तर उपपत्तेरि'ति सूत्रितस्यान्तरशब्दस्य 'य एषोऽन्तरक्षिणि पुरुषो दृश्यत' इत्यन्तर-शब्दश्रवणात् कथं तस्य विषयवाक्यत्वमित्यत आह **आदेयं मातीति** ।

२६८ सुखमनुभवतीति योजनायामात्मशब्दे रमणमुच्यत एव । 'सुखविशिष्टाभिधानादि'ति सूत्रं योजयति **विशिष्टेति** । कं ब्रह्मेति सुखमात्रमेवोक्तं न हि विशिष्टविषयमित्यत आह **ब्रह्मत्वमिति** । 'अनवस्थितेरसम्भवाच्च नेतर' इति सूत्रार्थमाह **अन्योन्येति** । लोकदृष्ट्याऽन्योन्यनियतिरेव । एनं जीवमन्यो जीवो नियच्छेदिति नियतिरेव सम्भवेत् ।

२६९ तारतम्यस्य स्वभावत्वादुत्तमस्याधमनियमसम्भवात् । कुत ईश्वरादेः पक्षत्वादित्यत आह **चेतनाना-मिति** । तस्मादीश्वराङ्गीकारात् जीवस्य जीवान्तरमित्यनवस्थितिः । पारतन्त्र्येण स्वस्यैव नियम्यत्वात् । अनियमे-ऽसम्भवश्च ।

२७० अथास्याप्यन्यो नियन्ता निरीश्वर इत्यत आह **ईश्वर इति** ॥ ४ ॥

२७१ प्रथमागत उपपत्त्यादिभिः प्रथमं नियामकत्वेन प्राप्तो वृथाऽवस्थितिकल्पना । प्रयोजनं प्रमाणं च विनैक-स्यान्यस्मिन्नास्तीति कल्पना । 'अन्तर उपपत्तेरि'त्युक्तम् । रमणं न सम्भवतीत्याशङ्कामुद्भाव्य तत्परिहारार्थम् 'अन्त-र्याम्यधिदैवादिषु तद्धर्मव्यपदेशादि'ति सूत्रं योजयति **रमणमिति**।

२७३ स्वाधीनवस्तुशक्तिक्रियादिकं वस्तुगुणेत्यादेराशङ्कावाक्यस्यायमाशयः । यदि भावरूपधर्मा अभेदिनो ब्रह्मणस्तर्हि तद्विरुद्धानां यत्तदद्रेश्यमित्युक्तानामभावधर्माणां कथमभेद इति ॥ ५ ॥

२७३ 'अदृश्यत्वादिगुणको धर्मोक्तेरि'ति सूत्रम् । अभावो भाव इत्यनयोर्धर्मयोः प्रायशो विशेषो न भवेद्धि । अत्र विशेषो वैलक्षण्यं भेद इत्यर्थः । तुशब्दादेकस्मिन्धर्मिणि प्रतीतयोरतद्भावः पटाभावोऽन्यता च घटतेऽनयोश्च कश्चन भेदोऽस्ति । 'गुणास्तवैष स्मितमुक्तभुक्तं भजन्त आरोग्यमायुः प्रतिभाबलं च । अनाविलं चास्य भवेदपत्यं मातावदन्यूनमिति हि प्रतीति'र्लोकप्रसिद्धिः । कथं विरुद्धयोर्भावाभावयोरभेद इत्यत आह **भावेति** ।

२७७ ननु ब्रह्मणस्तद्गुणानां च द्रव्ययोरिव पृथक्त्वासम्भवेऽपीतरेतराभावाख्यो भेदः स्यात् । तथा सति भाव-धर्माणां साक्षाद्भेदः स्यादित्यत आह **पृथक्त्वेति** । आदिशब्दात् सम्बन्धापेक्षया त्वनवस्थितिः । श्रुत्यादि-





विरोधश्च । यथा समवाय एकस्मिन्नपि कार्यकारणगुणगुण्यादिस्थानेषु विशेषेण बहुरूपोऽङ्गीकार्यः । घटस्य पटाद्भेद इति स्वरूपभूत एव भेदो विशेषेणाङ्गीक्रियते । यथा पटस्य स्वरूपेणाभेद इति ॥ ६ ॥

२८३ पादद्वयार्थं निगमयति **बह्विति** । यथा जनार्दनस्य मुख्यवाचकत्वतस्तानि लिङ्गानि तत्तत्प्रकरणगतानि पुरुषविधत्वादीनि ते शब्दास्तत्प्रकरणगता ब्रह्मादयस्सर्वेऽपि विष्णुलिङ्गा हि ।

२८५ एषामानन्दमयाकाशादिशब्दानां तद्वस्तुषु परिदृश्यमाना लौकिकी रूढिर्बहुलत्वात् कथं भगवति बाधकमित्यत आह **बहुलेति** । तत्तस्माज्जनार्दनस्य मुख्यवाचकत्वात् ॥ ७ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां नयचन्द्रिकायां प्रथमाध्यायस्य द्वितीयः पादः ॥ १-२ ॥**

* * *

## ॥ अथ प्रथमाध्यायस्य तृतीयः पादः ॥

२८६ **तत्र** इत्यादिना पादसङ्गतिं दर्शयति । उक्तयुक्तिभिर्विष्णावेव प्रसिद्धिरङ्गीकर्तव्या । अन्यत्रप्रसिद्धिबलात् अन्यत्रापि स्यादेव । अन्यथा व्यवहारस्यैवासिद्धेरिति पूर्ववादिमतानुवादेन तत्रान्यत्रेत्याह ।

२८७ 'द्युभ्वाद्यायतनमि'ति सूत्राभिप्रायमाह **विष्णाविति** ॥ १ ॥

२८७ 'भूमा सम्प्रसादादध्युपदेशादि'ति सूत्राभिप्रायमाह **भूमेति** । **सम्प्रसादः** सुखादिकत्वम् ॥ २ ॥

२८८ 'अन्यभावव्यावृत्तेश्चे'ति सूत्रार्थमाह **अत इति** ॥ ३ ॥

२९३ 'अस्थूलमनण्वह्रस्वमि'त्यादिवाक्यं विरुद्धवद्भातमपि वेदवाक्यं तत्त्वतो व्याख्याय हरौ योजनीयम् । अतो वेदवाक्यत्वतः । सर्वनामा सर्वकर्मा सर्वधर्मा सर्वलिङ्ग इत्यादिना द्युभ्वाद्यायतनादीन् विषयानाह **बाहुल्यमित्यादिना** । पूर्वपक्षसिद्धान्तयुक्तीराह **मुक्तोपसृप्यव्यपदेशादिति** । मुक्तोपसृप्यताऽमृतस्यैष सेतुरिति तत्रोदाहरणश्रुतिः । **भूमा सम्प्रसादादिति** 'प्राणादाधिक्यमेष वा अतिवदति यः सत्येनातिवदती'ति श्रुतिः । **अन्यभावव्यावृत्तेश्चेति** । स्वभावस्य सर्वतो वैलक्षण्यम् 'अस्थूलमनण्वि'त्यादिश्रुतिः । **ईक्षतिकर्मव्यपदेशात्स इति** प्रेक्षापूर्वक्रिया 'सदेव सोम्येदमग्र आसीत्', 'एकमेवाद्वितीयं', 'तदैक्षत बहुस्यां प्रजायेये'ति 'तत्तेजोऽसृजते'त्यादिश्रुतिः । **गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं चे**त्यत्र अरस्य ण्यस्य चेशत्वम् 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोक' इति श्रुतिः । **अनुकृतेस्तस्य चे**त्यत्र सूर्याद्यनुकृतिः 'तमेव भान्तमनुभाति सर्वमि'ति श्रुतिः । **शब्दादेव प्रमित** इत्यत्र





वामनाख्या 'मध्ये वामनमासीनमि'ति श्रुतिः । **कम्पनादिति** 'सर्वकम्पः प्राण एजति निःसृतमि'ति श्रुतिः । **ज्योतिर्दर्शनादि**त्यत्र 'विष्णुरेव ज्योतिरि'त्यादिश्रुतिबलाज्ज्योतिःशब्दस्यानन्यसिद्धता । 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरि'त्युदाहरणश्रुतिः । 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे'ति श्रुतिः । अत्र भेदस्योपजीव्यप्रमाणता । उपजीव्यमानज्योतिःश्रुतिः **सुषुप्त्युत्क्रान्त्योर्भेदेने**त्यत्र भेदस्योपजीव्यमागमः । 'प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनाऽन्वारूढ' इति श्रुतिः । **पत्यादिशब्देभ्य** इत्यत्र सर्वैश्वर्यम् । एता युक्तयस्तु विद्येशेन प्रकर्षेण दर्शिताः, न तु केवलं सूचिताः । देवानामधिकारः शूद्राणां तद्धानिः ॥ ७॥

३०० **'मध्वादिष्वसम्भवादनधिकारं जैमिनिः', 'भावं तु बादरायणोऽस्ति ही'**त्येतयोर्विरोधो नास्तीत्याह **तत्फलायेति** । तत्फलाय तत्रोक्तवस्तुत्वादिफलार्थमुपासाया विधिर्निराकृतः ।

३०१ सिद्धे ब्रह्मणो गुणजाते चान्यार्थं मोक्षे सुखविशेषार्थमसिद्धेऽर्थे ब्रह्मणो गुणजाते उपासाया विधिः स्यादिति विद्याधिराजस्य मतम् । सर्वगुणजातं सर्वदा न प्रकाशते हि विद्याधिपतिरनन्तविशेषज्ञः ।

३०२ जैमिन्याद्याः सामान्यवेदिनः । अतस्तन्मतयोः सामान्यविशेषरूपत्वान्न विरोध इत्याह **नित्यमिति** । ब्रह्मणस्तथात्वाभावेऽप्यशेषवस्तुगतविषयत्वेन ॥ ८॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीकायां त्रैविक्रमार्यकृतायां प्रथमाध्यायस्य तृतीयः पादः ॥ १-३ ॥**

***

## ॥ अथ प्रथमाध्यायस्य चतुर्थः पादः ॥

३०५ श्रुतिलिङ्गादिभिः अन्यत्रप्रसिद्धानां शब्दानां ब्रह्मणि वृत्तिं दर्शयत्यस्मिन्पादे । तदधीनत्वादर्थवदित्यस्यार्थमाह **दुःखीत्यादिना** ।

३०६ पराजयवतां तदधीनत्वहेतोर्यथा राज्ञि पराजयशब्दः पराजयवान् राजेति । तदेवोपपादयति **स्वातन्त्र्यमिति** । प्रवृत्तिहेतूनां गुणादीनां स्वातन्त्र्यं तस्य स्वाधीनत्वं विजयस्यान्यगतत्वे सत्यपि स्वातन्त्र्याभासमात्रतो विजयशब्दः प्रयुज्यते हि राज्ञि किमुत परमेश्वरो पूर्णस्वातन्त्र्यादित्याकूतम् ।

३०८ तर्हि भृत्यस्य बन्धच्छेदादौ सति बन्धच्छेदादिपदं किमिति राज्ञि न प्रयुज्यत इत्यत आह **भृत्यबन्धेति** ।





३१० बन्धादिशब्दानाममङ्गलत्वात् प्रयोगनिवर्तनं स्यात् । अमङ्गलानुपपत्तेरप्रियत्वाच्च अमङ्गलशब्दस्य । एवं सति कुत्राप्यमङ्गलशब्दो न प्रयोक्तव्य इत्यत आह **गुणा इति** । यत्र येषु तादृशदुःखादयः स्वातन्त्र्यापेक्षया गुणास्तेषु तच्छब्दा अखिला अपि प्रयुज्यन्ते ।

३११ एवं तद्गतत्वादपि शब्दप्रवृत्तेः स्वातन्त्र्यं मुख्यं कारणम् ।

३१३ ततो न अमङ्गलशब्दस्यान्यत्रप्रयोगादेव सर्वस्तुतिविषये विष्णावमङ्गलशब्दोक्तितो वक्तुर्दोषः स्यात् ।

३१५ न हि कुत्रचिन्निन्दार्थानां शब्दानां स्तुतिरित्यत आह **नैव दोषा इति** । नैव दोषहेतवः । तस्मात् स्वातन्त्र्यस्य मुख्यकारणत्वाद्दोषशब्दास्तत्रैव गुणवाचकाः नान्यत्र ॥ १ ॥

३१६ 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' इत्यत्र प्रतिपादितं 'वसन्ते वसन्ते ज्योतिषा यजेते'त्यादौ कर्मादिसमन्वयपदं विशिनष्टि **जातमिति** । जातं जीत्युच्यते । तृतीयोऽतिशय इति न्यायात् । तस्य चेति ज्योतिषेति सम्बध्यते । 'हरिः षकारः प्राण आत्मे'ति श्रुतिः । 'आयष्टार आयज्ञास्तैरित आयजेत । भूतं प्रति जयं वा वयतीति भुक्तरक्षणं चिनोती'ति कवचम् । विशिष्टत्वाद्वौ विष्णौ गताः षड्गुणा वौ षट् ।

३२० स्वभक्तमाह्वयति **स्वीकुरुत इति** । **स्वाहा** स्वरादिभिरित्यादिशब्दाद्बिन्दुनादादयः ।

३२२ वेदपदानामुत्सम्प्रदायं पदविभागदूषणमस्तीत्यत आह **विज्ञानेति** ।

३२३ एवं सति भगवत्यधिकविज्ञानहेतुत्वात् पदसमन्वय एव स्यान्न वाक्यसमन्वय इत्यत आह **अङ्गीकृत इति** । तदर्थत्वेन विज्ञानार्थत्वेन अल्पबुद्धय इति तादर्थ्ये चतुर्थी । अल्पबुद्धिषु ज्ञानजननार्थमित्यर्थः । धिष्ण्यं चायमाश्वेति धिष्ण्यास्ताः । भगवन्तमुद्दिश्य को वाचं प्रतिपपाद इत्यस्य पदस्य ब्रह्मवाचित्वेन वक्त्राद्याक्षेप-वाचित्वेन चेत्युभयार्थत्वतः ।

३२५ वेदशब्दानां परमेश्वरगुणैकवाचकत्वेन योगो ब्रह्मणः प्रतिपादितश्चेत् तस्य वेदपदनित्यताऽभावान्न विश्वसनीयत्वमित्यत आह **तस्येति** ॥ २ ॥

### ॥ इति ज्योतिरुपक्रमाधिकरणम् ॥







॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमदानन्दतीर्थभगवत्पादविरचित-श्रीमद्ब्रह्मसूत्रानुव्याख्यानस्य टीका

श्रीशङ्करपण्डिताचार्यविरचिता

# अनुव्याख्यानसम्बन्धदीपिका

## ॥ अथ प्रथमाध्यायस्य द्वितीयः पादः ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

२५७ नाम्नां प्राथम्यं तत्समन्वयो दर्शितः । अथानालोचनयार्थान्तरपरत्वेन प्रतीयमानानां लिङ्गाभिधेरुच्यत इति पादसङ्गतिमाह **लिङ्गेति** ।

२५८ विष्णोः सर्वगतत्वविचारः तत्रतत्रस्थितरूपेण तत्र शक्तिप्रेरक इति ज्ञानार्थं न व्योमवत्सर्वगतत्व-मात्रज्ञानायेत्यभिप्रायेण सर्वत्रेत्यादि सूत्रं व्याख्याति **तत्र तत्रेति** ।

२५९ जीवेशयोः कर्मकर्तृव्यपदेशात्सर्वगत इत्युक्तमेवं चेद्ब्रह्मैवेदमग्र आसीत् तदात्मानमेवावैदित्यत्रापि भेद एव स्यादित्याशङ्कां नुदति **कर्मेति** ।

२६० विशेषे विशेषप्रमाणे सतीत्यर्थः । अथास्मिन्पादे विचार्य विषयजातमाह **एतदिति** ।

२६२ अस्योद्भवादिहेतुत्वं साक्षादेव ........... साधारणमभिन्नं च विष्णोर्विवक्षितमाक्षिप्य समाधत्ते **अनित्य-त्वादिति**।

२६३ उक्तप्रकारेण क्रियादिभिरभिन्न इत्यवधृत्य तत्र प्रमाणमाह **स्वभाव इति** ।

२६६ क्रिया न दृश्य चेदपि (?) सास्ति चेज्जीवस्यापि विश्वनिर्माणक्रिया स्यादित्याशङ्कां .........ति सूत्रित-द्विवचनसमन्वयं हेतुतः प्रतिपादयति **द्वित्वमिति** ।

२६७ य एषोऽन्तरित्यादेरग्नौ समन्वयाशङ्कानिरासाय अन्तर इत्यादि सूत्रार्थमाह **अन्तरिति**।

---

* प्रतिपरिच्छेदं प्रारम्भे सूचिताः सङ्ख्याः अनुव्याख्यानश्लोकसङ्ख्याः इति ज्ञातव्यम्।





२६८ श्रुतावन्तस्थितिरुक्ता न रमणमतः सूत्रगतरेफस्यानादरणीयत्वमित्याशङ्का ......... विष्णुरन्तरत इति हृदा सुखविशिष्टेत्यादि सूत्रार्थमाह **विशिष्टेति**।

२६८ किमिति सुखमात्रमुक्तम्। किं तत्र सुखस्य विशिष्टत्वमित्यत आह **ब्रह्मत्वमिति**।

२६८ अग्नि जीवस्यान्तरत्वं न सम्भवतीति हृदानवस्थितेरित्यादि सूत्रार्थमाह **अन्योन्येति**।

२६९ यदि यमयति तथापि तत्सामर्थ्यमीश्वरनियतमिति हेतोरीश्वरं विना जीवस्य नियन्तृत्वमनवस्थादि दुष्टमित्याह **चेतनानामिति**।

२७१ *विष्णो रमणानुपपत्तिमाशङ्क्य निरस्यति* **रमणमिति** ।

२७३ प्रतीपादेरनर्घ्यस्य प्रतीपं न सम्भवतीत्याह अदृश्यत्वादिगुणो नाम स्वाभाविकत्वमाशङ्क्य नुदति 'अदृश्यत्वादि'त्यादिसूत्रव्याख्यानेन **गुणेत्यादिना**।

२७५ भावाभावविशेषं द्योतयति **अतद्भाव इति**।

२७५ वागाद्यभावगुणत्वप्रसिद्धेरपि युक्तमेतदित्याह **दोषेति**।

२७६ भावाभावयोः प्रा.........नो तयोर्घटो न भवति पट इत्यादौ विरोधोऽपि नास्तीत्याह **भावेति**।

२७७ अतो घटो न घट इत्यादावेव विरोध इत्याह **तदभाव इति**।

२७७ अन्योन्याभावो वस्तुसद्भावो विरोधी न भवतीत्येतत्प्रसङ्गे यद्वदन्ति पृथक्त्वं नाम गुणोऽन्यः अन्योन्याभावोऽन्यः यथार्थानां स्वरूपलक्षणभेदोऽन्य इति। तं दूषयति **पृथक्त्वेति**।

२७८ गुणगुणिकल्पनागौरवमुक्तम्। दृष्टत्यागादिरपि तत्पक्षेऽस्तीति प्रकटयति **पृथक्त्वेति**।

२८० गुणगुणिभेदमतं निरस्तम्। अथ सिद्धान्तमवधारयति **भावाभावेति**।

२८१ वस्त्वभिन्नविशेषाभावे दृष्टान्तमाह **यथेति**।

२८२ वैशेषिकादिवन्मायिनोऽपि विशेषोऽङ्गीकार्य इत्याह **अखण्डेति**।

२८३ अथ शब्दादिभ्यः इत्यादिसूत्रार्थमुक्त्वा विष्णोर्वैश्वानरादिशब्दवाच्यत्वं तन्न्यायसिद्धं निगमयित्वा प्राह। रुढेः प्राबल्याल्लोकरुढेः समन्वयाबाधकत्वमाह **बहुलिङ्गेति** ।

२८६ विष्णौ साधितत्वादितरत्र प्रतीतत्वाच्छब्दे प्रतिपाद्यत्वसाम्यनिरासाय पादसङ्गतिमाह **तत्रेति**।





२८७　'द्युभ्वाद्यायतनमि'त्यादिसूत्रव्याख्याने विष्णोर्द्युभ्वाद्यायतनत्वप्रतिपादनाय यस्मिन् द्यौरित्येतदर्थमाह **विष्णाविति**।

२८७　भूमेत्यादिसूत्रार्थमाह **अखिलेति**।

२८८　अखिलेशत्वादन्यभावव्यावृत्तिरिति सूत्रिता स्थूलमित्यादिवाक्यमपि हरौ योजनीयमित्याह **अत इति**।

२९०　कथमविरोधेन विष्णावस्थौल्यानणुत्वादियुक्तमित्यत आह **अन्येति**।

२९१　विष्णोः स्वभावोऽस्ति निराकारत्वमित्यत्र मानमाह **सर्वेति**।

२९२　अथास्मिन्पादे विषयान् दर्शयति **लिङ्गमिति**।

२९३　अथ पूर्वपक्षसिद्धान्तयुक्तीराह **बाहुल्यमिति**।

२९६　कास्ता दृश्यन्त इत्यत आह **मुक्तेति**।

२९९　कुतः समन्वयं विनाधिकारादि चिन्तितमित्यत आह **अधिकार इति**।

३००　बादरायणजैमिनिमतयोर्विरोधादधिकारानधिकारनिर्णयाभाव इत्याशङ्कां नुदति मध्वित्यादिसूत्रव्याख्यानेन **तत्फलायेति**।

३०१　अन्यार्थमसिद्धेऽर्थे विधिरित्युक्तफलविशेषमसिद्धविषयं च स्पष्टयति **मोक्ष इति**।

३०२　अस्ति हीति सूत्रितं ज्ञानविशेषमाह **नित्यमिति**।

३०४　विशेषफलोपास्त्यधिकारमनुक्तोक्तफलानधिकारमात्रं कुतो जैमिनिरवददित्यत आह **जैमिनीति**।

३०५　अविरोधस्तयोरित्युक्तं मताविरोधं निगमयति **विद्येति**।

३०५　परमात्मनो दुःखाद्यनुभवाभावाद्दुःख्यादिशब्दवाच्यत्वं नास्तीत्याशङ्कां अपनुदति 'आनुमानिकमि'त्यादि-सूत्रव्याख्यानेन।

३०६　दुःखीति स्वातन्त्र्यं च शब्दवृत्तिकारणत्वेन प्रसिद्धमित्याह **स्वातन्त्र्यमिति**।

३०७　स्वातन्त्र्यं मुख्यकारणमिति द्योतयति **न हीति**।

३०८　स्वातन्त्र्यकारणं चेत् भृत्यवधादिकं किमिति राज्ञि न प्रायुंक्त। त इत्याशङ्कां निरस्यति **भृत्येति**।





३०९ सन्दिग्धविषयमपि गुणवचनं राज्ञि प्रियमेव । शेषवचनं तु सर्वथा प्रियमेव । राज्ञि शेषसम्भवादतस्तं निवृत्तिरित्याह **अमङ्गलत्वादिति** ।

३१० व्यवहारविषये प्रवृत्तस्यैव निमित्तमालोचनीयम् । न पुनर्निमित्तमस्तीति प्रयोगः कार्य इति चाभिप्रायः । राज्ञि वधादिप्रयोगाभावेऽपि महत्समरेषु निगलबन्धाद्ययोग्येषु लोकतो शेषविषया अपि गुणविषयतया शब्दाः प्रयुज्यन्ते । सर्वो वै रुद्रः नमस्त्वभ्यः इत्यादौ स्वातन्त्र्यात् दोषातिदूरे भगवति स्वातन्त्र्यविवक्षया तादृशवचनं युक्तमिति किं वक्तव्यमित्यभिप्रैति **गुणा इति** ।

३१३ तादृशा गुणाः निश्चिन्तवधायोग्यत्वादि दोषाभावसहिता बन्धस्वातन्त्र्यादयो गुणा इत्यर्थः । अभिमतार्थे श्रुतिमाह **वासुदेवेति** ।

३१४ अन्यत्र मङ्गलं वदेदिति वचनस्य विष्णावमङ्गलवचनं गुणविषयतया न दोषकरमित्यभिप्राय इत्यभिप्रैति **स्वातन्त्र्येति** ।

३१४ दोषपदमपि विष्णौ गुणवाचकमिति सदृष्टान्तमाह **बहुभुक्त्वमिति** ।

३१५ दोषवचनं गुणबुद्ध्या निर्दोषेन दोषेन दोषकरमित्युक्तम् । अथ दोषबुद्ध्या दोषकरमित्याह **तद्गेति** ।

३१६ उक्तार्थं निगमयति **तस्मादिति** ।

३१६ ज्योतिरित्यादिसूत्रव्याख्यानेन विष्णोर्वसन्तादिशब्दवाच्यत्वमप्यस्तीत्याह **जातमिति** ।

३२२ एवं पदच्छेदक्लिष्टतादूषणमित्यत आह **विज्ञानेति** ।

३२३ एवं प्रतिपदसमन्वयवचने शक्तानां वाक्यान्वयोऽङ्गीकरोषि भवतीत्याह अन्यार्थमित्यादिसूत्रपञ्चकाभिप्रायं वदन् **अङ्गीकृतेऽपीति** ।

३२४ प्रत्यक्षादिसमन्वयस्य ग्रहणयोग्याधिकार्यभावाद्वैयर्थ्यमित्याशङ्कापरिहाराय तादृशाधिकसद्भावे श्रुतिमाह **कश्छन्दसामिति** ।

३२५ 'कश्छन्दसां योगमावेदे'ति श्रुतेः ब्रह्मावराधिकारिणां शब्दार्थनित्ययोगस्य चाङ्गीकारो निरूप इत्याह **तस्येति** ।

## ॥ इति ज्योतिरुपक्रमाधिकरणम् ॥ २ ॥

* * *

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

**श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥**

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

**सुधा वा पठनीया । वसुधा वा पालनीया ॥**

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed at : Sudha Mudrana, Bangalore.